# THE
# MÂLATÎMÂDHAVA
OF
# BHAVABHÛTI

WITH

The commentaries of Tripurâri and Jagaddhara.

---

Third Edition.

---

EDITED

BY

MANGESH RÂMAKRISHṆA TELANG

REVISED BY

T. SRINIVÂSA VENKATRÂMA SARMÂ.

PUBLISHED BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF THE "NIRṆAYA SÂGAR" PRESS.

BOMBAY.

1915.

*Price 2 Rupees.*

॥ श्रीः ॥

महाकविश्रीभवभूतिप्रणीतं

# मालतीमाधवम् ।

त्रिपुरारि-जगद्धरकृताभ्यां टीकाभ्यां समेतम् ।

---

मङ्गेश रामकृष्ण तेलङ्ग

इत्यनेन संशोधितम् ।

---

अस्येदं तृतीयं संस्करणम्

तोप्पूर्वेंकट्रामशर्मतनुजनुषा श्रीनिवासशर्मणा

संस्कृतम् ।

---

तच्च

शाके १८३७ संवत्सरे

मुम्बापुर्यां

तुकाराम जावजी,

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये

रामचंद्र येसू शेडगेद्वारा मुद्रयित्वा

प्रकाशितम् ।

---

मूल्यं रूप्यकद्वयम् ।

# विज्ञप्तिः ।



अस्य प्रकरणस्य प्रणेतुः श्रीमद्भवभूतिकवेरितिवृत्तं न क्वापि विस्तरेण लभ्यते। अनेन स्वविरचितमहावीरचरित-मालतीमाधव-उत्तररामचरिताख्यरूपकत्रयस्य प्रस्तावनासु किंचित्स्ववंशादिवर्णनं कृतमस्ति । तद्यथा—आसीद्दक्षिणापथे विदर्भेषु पद्मपुरं नाम नगरम् । तत्र केचित्तैत्तिरीयाः काश्यपा उदुम्बरोपाभिधाना ब्रह्मवादिनो द्विजा वसन्ति स्म । तेषां वंशे महाकविर्नाम कश्चिद्वाजपेययाजी विप्रो वभूव । अस्मात्पञ्चमः पुरुषो भवभूतिः । भवभूतेः पिता नीलकण्ठः, जननी जतुकर्णी[1], पितामहो भट्टगोपालः, गुरुश्च ज्ञाननिधिः । अधीतवानयं तर्कव्याकरणपूर्वोत्तरमीमांसादीनि शास्त्राणि । अस्य पितृकृतं नाम श्रीकण्ठ इति । 'तपस्वी कां गतोऽवस्थामिति स्मेराननाविव । गिरिजायाः स्तनौ वन्दे भवभूतिसितानना ॥' इति पद्यकरणोत्तरं तस्यैव भवभूतिरिति[2] नामान्तरं जातम् । अनेनैव च नाम्नायं कविर्लोके प्रसिद्धो बभूवेति ।

कान्यकुब्जाधिपतेर्यशोवर्मणः सभायां भवभूतिरासीदिति राजतरङ्गिणीतो[3] ज्ञायते । यशोवर्मसमयश्च ख्रिस्तवर्षीयसप्तमशतकपूर्वार्धे बभूव । अतो भवभूतेरपि समयो निरुक्तसप्तमशतकमित एवेत्यर्वाचीनपण्डितानामूहः ।

भवभूतिकृतिषु महावीरचरित-मालतीमाधव-उत्तररामचरिताख्यं रूपकत्रयमपहाय नान्यः कोऽपि प्रबन्धः प्राप्यते । तथापि शार्ङ्गधरपद्धतौ—

'निरवद्यानि पद्यानि यदि नाट्यस्य का क्षतिः ।
भिक्षुकक्षाविनिक्षिप्तः किमिक्षुर्नीरसो भवेत् ॥'

इति पद्यम्, गदाधरभट्टसंकलिते रसिकजीवने च—

'अलिपटलैरनुयातां सहृदयहृदयज्वरं विलुम्पन्तीम् ।
मृगमदपरिमललहरीं सनीर किं पामरेषु रे किरसि ॥'

र. जी. प्र. ३।२२

---

१ 'जातूकर्णी' इत्यपि रूपान्तरम् ।

२ आर्यासप्तशत्या अनन्तपण्डितकृतटीकायां 'भवभूतेः संबन्धात्' इत्याद्यार्याव्याख्याने द्रष्टव्यम् । वीरराघवविरचितायां महावीरचरितटीकायामप्येवमेवोक्तम् । परंतु तत्र 'साम्बा पुनातु भवभूतिपवित्रमूर्तिः' इत्यादि पद्यं निर्मितमिति प्रोक्तम् ।

३ मालतीमाधवावतरणिकायां श्रीमद्भिर्डॉक्टरभाण्डारकैरुक्तम् । एतद्विषयको राजतरङ्गिणीस्थः श्लोकस्त्वयम्—

'कविवाक्पतिराजश्रीभवभूत्यादिसेवितः ।
जितो ययौ यशोवर्मा तद्गुणस्तुतिबन्दिताम् ॥'

राज. ४।१४५

किं चन्द्रमाः प्रत्युपकारलिप्सया
करोति गोभिः कुमुदावबोधनम् ।
स्वभाव एवोन्नतचेतसां सतां
परोपकारव्यसनं हि जीवितम् ॥

र. जी. प्र. ३।९५

इति पद्यद्वयं च भवभूतिनाम्ना समुद्धृतं लभ्यते । अतो भवभूतिना विरचितोऽन्यः कोऽपि प्रबन्ध आसीत्, उत तत्कृतानि सुभाषितान्येवैतानि, आहोस्विदेतत्पद्यकर्तान्यः कोऽपि भवभूतिर्बभूवेति निश्चेतुं नैव शक्यते ।

अत्र प्रकाशितयोर्मालतीमाधवटीकयोः प्रथमा भावप्रदीपिकाख्या दाक्षिणात्येन पर्वतनाथतनयत्रिपुरारिसूरिणा विरचिता । इयं सप्तमाङ्कपर्यन्तमेव लब्धा । अवशिष्टाङ्कत्रयस्य टीका विबुधरत्नावल्याख्या नान्यदेवेन पूरिता । द्वितीया श्रीरत्नधरात्मजजगद्धरपण्डितविरचिता पाठान्तरैः सह पुस्तकान्ते निवेशिता । एवं टीकाद्वयसंवलितमेतन्मालतीमाधवं प्रकरणं प्रकाशितं चेन्नितरां रसिकजनहृदयाह्लादकं स्यादिति समालोच्य कृतोऽयं प्रकृतो यत्नः । अत्र च मुद्रणादिष्वनवधानतयापतितं दोषजातं क्षन्तव्यं सदयैः सद्भिरिति विज्ञापयति

विद्वदनुचरो

**मङ्गेशशर्मा ।**

॥ श्रीः ॥

# मालतीमाधवम् ।

## प्रथमोऽङ्कः ।

चूडापीडकपालसंकुलगलन्मन्दाकिनीवारयो
विद्युत्प्रायललाटलोचनशिखिज्वालाविमिश्रत्विषः ।

---

### भावप्रदीपिका ।

ऐन्दव्या कलयावतंसितकचं सौन्दर्यसारास्पदं
कारुण्यामृतपूरपूरितलसल्लीलाकटाक्षाङ्कुरम् ।
उद्यत्कोटिदिनेशमण्डलरुचिन्यक्कारिभाभासुरं
वन्दे पाशसृणीक्षुचापसुमनोबाणापहं तन्महः ॥

यद्गण्डमण्डलगलन्मदवारिधाराः कर्णद्वयव्यजनवातविधूतिशीर्णाः ।
भक्तान्तरायनिवहा इव सार्यमाणा भान्ति द्विपेन्द्रवदनं तमुपाश्रयामः ॥

एकाम्रमूलनिलयकरिभूधरनायकौ ।
काञ्चीपुरीश्वरौ वन्दे कामितार्थप्रसिद्धये ॥
पदवाक्यप्रमाणज्ञो भवभूतिर्महाकविः ।
मालतीमाधवं नाम यद्रूपकमरीरचत् ॥
क्रियते विवृतिस्तस्य **भारद्वाजेन** धीमता ।
यज्वनः **पर्वतेशस्य** सूनुना **त्रिपुरारिणा** ॥
सन्ति यद्यपि चैतस्य व्याख्याः प्राच्यास्तथापि ताः ।
अवक्तव्योक्तिवक्तव्यत्यागाभ्यां नादृता बुधैः ॥
अतो मितेन वचसा लघ्वी भावप्रदीपिका ।
मालतीमाधवस्येयं रच्यते रसिकप्रिया ॥
अदृष्टपूर्वव्याख्यानामस्तु वैतन्मनोहरम् ।
अदृष्टदिव्यकान्तानां मानव्य इव कामिनाम् ॥
प्राग्व्याख्याऽसंनिधाने वा भवत्वस्योपयोगिता ।
भानोरसंनिधाने किं न ग्राह्या करदीपिका ॥
पुरातननिबन्धेषु येषां धीर्नावगाहते ।
तेषामस्मादृशां वैतदुपयोगि भविष्यति ॥

पान्तु त्वामकठोरकेतकशिखासंदिग्धमुग्धेन्दवो
भूतेशस्य भुजङ्गवल्लिवलयस्रङ्नद्धजूटा जटाः ॥ १ ॥

सर्वथा सादरं सन्तः प्रतिगृह्णन्त्वमत्सराः ।
को वा प्रणयिनि प्रह्वे कुर्यादेवावधीरणाम् ॥
अथवा नः किमेतेन दैन्येन यदि मत्कृतौ ।
विशेषं चेद्विशेषज्ञः पश्येद्गृह्णातु तां तदा ॥
साहित्याध्वपरिक्षुण्णधियामस्मादृशां श्रमम् ।
तादृशा एव जानन्ति विदुरन्ये कथं खलाः ॥

अथ तत्रभवान्भवभूतिः कीर्त्यादिसत्काव्यनिर्माणप्रयोजनप्राप्तये प्रेक्ष्यप्रबन्धभेदनाट्यप्रधानं प्रकरणं साङ्गं मालतीमाधवं नाम रूपकमाततान । तत्र प्रकरणलक्षणं भरते—'तत्र कविराजबुद्ध्या वस्तुशरीरं च नायकं चैव । स्वयमुत्पाद्य विरचयेत्तज्ज्ञेयं प्रकरणं नाम ॥' इति । दशरूपकोऽपि—'अथ प्रकरणे वृत्तमुत्पाद्यं लोकसंश्रयम् । अमात्यविप्रवणिजामेकं कुर्यात्तु नायकम् ॥ धीरप्रशान्तं सोपायं धर्मकामार्थतत्परम् । शेषं नाटकवत्संधिप्रवेशकरसादिकम् ॥' इति । तत्र नाट्योपक्रमे विघ्नोपशान्तये कुशीलवैः पूर्वरङ्गः क्रियते । तदुक्तम्—'प्रथमं पूर्वरङ्गश्च ततः प्रस्तावनेति च । आरम्भे सर्वनाट्यानामेतत्सामान्यमिष्यते ॥ यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स कीर्तितः ॥' इति । तत्र चानुष्ठितभरतोपदिष्टपूर्वरङ्गाङ्गकलापेन सूत्रधारेण पाठ्याङ्गभूता नान्दी प्रयोक्तव्या । तदुक्तम्—'यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके । तेषामवश्यं कर्तव्या नान्दी नन्दीश्वरप्रिया ॥' इति । नान्दीलक्षणं तु—'आशीर्नमस्क्रियारूपः श्लोकः काव्यमुखोदितः । नान्दीति कथ्यते तस्यां पदादिनियमोऽपि वा ॥ माङ्गल्या शङ्खचक्राब्जकोककैरवशंसिनी । नान्दी पदैर्द्वादशभिरष्टाभिर्वाप्यलंकृता ॥' इति । 'अपि वा' इति पदानियमपक्षोपक्षेपः । तथाह विद्यानाथः—'कैश्चिन्नान्द्यां पदनियमो नाभ्युपगतः' इति । तत्र कविश्चिकीर्षितस्य प्रकरणस्याविघ्नपरिसमाप्तये विशिष्टेष्टदेवतानमस्कारलक्षणं मङ्गलमाचरन्पूर्वरङ्गाङ्गभूतामष्टपदात्मिकामाशीरलंकृतां नान्दीं सूत्रधारप्रयोज्यां तावदाह—**चूडेति** । एषा च 'संदिग्धमुग्धेन्दवः' इति चन्द्रनामाङ्किता नान्दी । तदुक्तम्—'चन्द्रनामाङ्किता कार्या रसानां स यतो निधिः । प्रीते चन्द्रमसि स्फीता रसश्रीरिति वाल्मिकिः ॥' इति । अयमर्थः—भूतेशस्य जटाः पान्त्विति संबन्धः । ता विशिनष्टि—चूडेति । चूडा शिखा । 'शिखा चूडा केशपाशः' इत्यमरः । तया च स्वाश्रयभूतं शिरो लक्ष्यते । कपालमालिकायाः शिरोभूषणत्वात् । तस्यापीडस्तत्र तिर्यङ्नद्धा स्रक् । 'आपीडशेखरोत्तंसावतंसाः शिरसि स्रजः' इति हलायुधः । आपीडशब्देनैव शिरःस्रगुक्तावपि चूडाशब्दस्तत्संनिधानप्रतीत्यर्थः । कर्णावतंसवत् । यथाहुः—'कर्णावतंसादिपदैः कर्णादिध्वनिनिर्मितः । संनिधानप्रतीत्यर्थम्' इति । तत्र कपालाः । तद्ग्रथितत्वादापीडस्य । तेषु संकुलं व्याप्तं गलत्तत्पूरणादधःस्रवच्च मन्दाकिन्याः शं-

एतच्च ।

सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसंकोचभाजि ।
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणे-
र्वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः ॥ २॥

---

भुशिरोगङ्गाया वारिधारा यासु ताः । तडित्तुल्येनालिकनेत्रतेजसा साजात्याद्विशेषेण मिश्रीभूता दीप्तिर्यासां ताः । कोमलया केतकगर्भद्रोण्या सह संदिग्धः समानाकृतिवर्णत्वात्किं केतकशिखेयमुत शशिरेखेति संदेहगोचरो मुग्धो मनोहर इन्दुर्यासु ताः । जटीकृत्य बद्धासु जूटीकृतासु विप्रकीर्णासु । एकस्याश्चन्द्रकलायास्तिरोधानप्रसङ्गेन केतकशिखासंशयजनकत्वायोगात् । भुजङ्गा एव वल्ल्यो लतास्ताभिरेव वलयैर्वलयीकृतैः । लतासदृशैरिति यावत् । निर्मितया स्रजा नद्धा जूटा यासां ता इति । अत्र रूपकसंदेहानुविद्धा स्वभावोक्तिरलंकारः । तल्लक्षणानि तु विस्तरभयान्न लिख्यन्ते । अत्रेश्वरस्य जटाजूटालंकृतस्य प्रशान्ताकारप्रतीतेर्धीरशान्तः कथानायकः सूचितः । जटा इति कर्तृबहुत्वेन नायकनायिकाबहुलम्, भूतेशस्येत्यौपसर्जन्येन जटा इति स्वातन्त्र्येण नायकस्य स्वप्रयोजननिर्वाहेऽन्यपारतन्त्र्यम्, कामन्दक्यादितपस्विनीजनस्यैव तत्कार्यनिर्वहणनिरन्तरोद्योगित्वं सूचितमिति मनाक्काव्यार्थसमुन्मेष ऊह्यः ॥ १ ॥ प्रचितादेव मङ्गलात्तादृगन्तरायनिरासं मत्वाह—**सानन्दमिति** । विनायकस्य संबन्धीनि मुखविधूननानि पान्तु । विनायकस्य विघ्नराजत्वात्तन्मुखविधूननानि प्रत्यूहनिवर्तकानीत्याशयः । तेषु निमित्तमाह—शूलपाणेस्ताण्डवे नन्दिकरवाद्यमानमुरजध्वनिना घनगर्जितसदृशेनाहूतात्स्कन्दवाहनमयूरात्त्रासो भयं तस्माद्भोगसंकोचभाजि सूक्ष्मरन्ध्रप्रवेशसिद्ध्यर्थं संकुचितशरीरे फणिपतावुपवीतीकृते । नासाग्ररन्ध्रं पुष्करविवरं सानन्दं यथा भवति तथा । तदेव संनिहितविवरलाभात् । विशति सति । कीदृश्यः । कपोलतलोत्थितमधुकरमालामुखरितदिशः । चीत्कारोऽनुकरणशब्दस्तत्सहिताः । काव्यलिङ्गमलंकारः ॥ एताभ्यां श्लोकाभ्यां जलधरसमयप्रारम्भः सूच्यते । तस्य निर्वहणसंधौ वक्ष्यमाणत्वात् । मुखसंधिसूचितस्यैव निर्वोढव्यत्वात् । तत्र कपालेत्यनेन बलाकावलिः, जलक्षरणेन वृष्टिः, विद्युदित्यनेन च विद्युत्, केतकशिखेत्यनेन केतकोद्गमः, भुजगवलयबद्धजटापटलत्वेन जलदोदयः, मुरजध्वानेन गर्जितशब्दः, कौमारबर्हीति मयूरहर्षश्च सूच्यत इति केचिद्व्याचक्षते । तदेतच्छब्दशक्त्या प्रतीयतेऽर्थशक्त्या वेति त एव जानन्ति । नन्वेते शब्दाः प्रकृतार्थनियन्त्रिता अपि शक्त्यन्तरबलादन्वितमर्थान्तरं प्रत्याययन्तीति कस्यचिद्व्युत्पन्नस्य प्रतीतिः । अर्थोऽपि प्रकृतो नैतादृशस्यार्थान्तरस्य प्रतीतौ समर्थोऽनुभूयते सहृदयैः । कथांशानामेव निर्वहणे निरूप्यमाणानां मुखसंधौ सूचननिर्बन्धः । न तु तत्र वक्ष्यमाणस्य सर्वर्तुवनवर्णनादेरपि । ततो नैषोऽर्थः कवेर्विवक्षागोचरोऽपि । तस्मान्नायं ध्वनिमार्गवि-

अपि च ।

दन्तश्रेणिषु संगलत्कलकलव्यावर्तनव्याकुला
नासालोचनकर्णकुञ्जकुहरेषूद्गद्गदध्वानिनः ।
गण्डग्रन्थ्यभिघातशीर्णकणिकाश्चूडास्रवंत्यूर्मयः
शंभोर्ब्रह्मकपालकंदरपरिस्पन्दोल्बणाः पान्तु वः ॥ ३ ॥

अन्यच्च ।

पक्ष्मालीपिङ्गलिम्नः कण इव तडितां यस्य कृत्स्नः समूहो
यस्मिन्ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव ।
अर्चिर्निष्टप्तचूडाशशिगलितसुधासारशात्कारिकोणं
तार्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥ ४ ॥

( नान्द्यन्ते )

**सूत्रधारः**—अलमलम् । उदितभूयिष्ठ एव भगवानशेषभुवनद्वीपदीपः । तदुपतिष्ठे । ( प्रणम्य । )

---

दां पन्थाः ॥२॥ 'दन्तश्रेणिषु' इत्यादि श्लोकद्वयं प्रक्षिप्तमिति पूर्वैरव्याकृतमपि क्वचित्पुस्तकेषु दृष्टत्वादस्माभिर्व्याख्यायते—**दन्तेति** । चूडास्रवन्त्यूर्मयः शिरोनदीतरङ्गा वः पान्तु । ब्रह्मकपालकंदरपरिस्पन्दोल्वणा विधिशिरःकरोटिपरिस्खलनप्रभूताः। दन्तपङ्क्तिषु संगलन्त्यः क्षरन्त्यः कलकलसहितेन व्यावर्तनेन परिभ्रमणेन व्याकुलाः। नासादिसुषिरप्रदेशेषु बुद्बुदशब्दवत्यः । गण्डस्थलाभिघाताद्विशीर्णा अत्युन्नतप्रदेशादधो विषमस्थले पतन्त्यः निर्भरवारिधारा यासां ताः । स्वभावोक्तिरलंकारः॥३॥ **पक्ष्मेति** । तृतीयमेव तार्तीयीकम् । 'तृतीयादीकक् स्वार्थे वक्तव्यः' इतीकक् । मदनप्लोषणं स्मरदाहि लोचनं वोऽवतु । कीदृक् । यत्पक्ष्मपङ्क्तिपिङ्गलतायाः सर्वोऽपि तडित्संघो लेशः । कालो मृत्युरेव यज्वा । ईषद्विघटितमुकुले किंचिदुन्मीलिते । यस्मिन्नाहवनीयस्थाने जगद्धुतवान् । ज्वालासंतापितशिरश्चन्द्रकलासुधाधारानिपातेन प्रतप्तायसि जलबिन्दुसेचनेनेव शात्कारिप्रान्तम् । उदात्तालंकारः॥४॥ अथ प्रस्तावनां विवक्षुस्तदङ्गयोः प्ररोचनामुखयोः प्रथमं प्ररोचनां प्रस्तौति—**नान्द्यन्त इति** । कृतपूर्वरङ्गे प्रथमप्रविष्टे सूत्रधारे नान्दीं पठित्वावशिष्टं च प्रत्याहारमार्जनालेपनादिपूर्वरङ्गाङ्गकलापं निष्पाद्य विनिर्गते तत्सदृशोऽन्यः सूत्रधारः प्रविश्य प्रस्तावयतीत्यर्थः । तदुक्तं दशरूपके—'पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमाख्यापयेन्नटः ॥' इति । प्ररोचनामुखलक्षणं तु—'निवेदनं प्रयोज्यस्य निर्देशो देशकालयोः । काव्यार्थसूचकैः शब्दैः सभायाश्चित्तरञ्जनम् ॥ कविकाव्यनटादीनां प्रशंसा च प्ररोचना ॥' आदिशब्देन सभावस्तुनायकानां ग्रहणम् । 'सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् । स्वकार्यप्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ॥' इति । **अलमिति** । अनेकनान्दीश्लोकपाठकं पूर्वसूत्रिणं प्रति विलम्ब-

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते
धुर्यां लक्ष्मीमिह मयि भृशं धेहि देव प्रसीद ।
यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन्भूयसे मङ्गलाय ॥ ५ ॥

( नेपथ्याभिमुखमवलोक्य । ) मारिष, सुविहितानि रङ्गमङ्गलानि संनिपतितश्च भगवतः कालप्रियनाथस्य यात्राप्रसङ्गेन नानादिगन्तवास्तव्यो जनः । तत्किमित्युदासते भरताः । आदिष्टोऽस्मि विद्वत्परिषदा यथा—अद्य त्वयाऽपूर्ववस्तुप्रयोगेण वयं विनोदयितव्या इति । तत्परिषदं निर्दिष्टगुणप्रबन्धेनोपतिष्ठावः ।

---

मसहमानस्योक्तिः । प्रभातकालं निर्दिशति—**उदितेति** । भूयसा मण्डलेन भागेनोदितः । उदितकल्प इति भावः । उपतिष्ठे स्तोत्रेणाराधयामि । 'पथ्याराधनयोश्च' इत्यात्मनेपदम् । तथा करोति—**कल्याणानामिति** । विश्वमूर्ते सर्वात्मक । 'सूर्य आत्मा जगतस्तस्थुषश्च' इति श्रुतेः । त्वं कल्याणानां मङ्गलरूपाणां तेजसां स्थानमसि । मयि धुर्यां सकलसौख्यसंपादनसमर्थां लक्ष्मीं धेहि प्रसन्नो भव । यद्यदिति वीप्सया प्रकारकात्स्न्र्यमभिप्रैति । येन केनचिद्रूपेण स्थितं सर्वप्रकारं यत्पापमस्ति नम्रस्य मे तथाभूतं सर्वप्रकारं पापं प्रतिजहि निवर्तय । अत्र यद्यदिति वीप्सया यादृशोऽर्थ उक्तस्तस्यैव प्रकृतपरामर्शिना तच्छब्देनोपादानान्न द्वितीयस्तच्छब्दोऽपेक्षित इत्याहुः । तेन पूर्ववाक्ये यच्छब्दद्वयदर्शनात्तदुत्तरवाक्ये तच्छब्दद्वयं द्रष्टव्यमित्यपव्याख्यानम् । भगवन्, बहुप्रकारं मङ्गलं भूयसे मङ्गलाय वितर । मङ्गलानुबन्धीनि मङ्गलानि प्रयच्छेत्यर्थः । इयं काव्यार्थसूचकेन श्लोकेन संस्कृतप्रायवाग्व्यवहाररूपा भारती वृत्तिः । प्ररोचनाङ्गं काव्यार्थसूचनं च । कथानायकतन्मित्रादीनामनिष्टपरिहारेष्टप्राप्तिप्रतीतेः । तथापि यद्यदित्यघोरघण्टशार्दूलनन्दनादिकृतोपद्रवनिर्देशः । भद्रं भद्रमिति मालतीमदयन्तिकाप्राप्तिरूपं मङ्गलद्वयं सूचितम् । भूयसे मङ्गलायेति कपालकुण्डलागृहीतमालतीविपन्निस्तारः । आरक्षगृहीतमाधवमकरन्दप्राणरक्षादयः सूच्यन्ते ॥ ५ ॥ **नेपथ्य इति** । नेपथ्यो नाम रङ्गस्थलस्य पश्चाद्यवनिकान्तरितो वर्णग्रहणादियोग्यकुशीलवकुटुम्बावस्थानदेशः । 'कुशीलवकुटुम्बस्य स्थली नेपथ्य इष्यते' इति वचनात् । मारिषो नटः ॥ नटः सूत्रधारेण मारिष इति वाच्यः । 'सूत्री नटेन भावेति तेनासौ मारिषेति च' इत्युक्तत्वात् । सुविहितानि साधु संपादितानि । कालप्रियनाथस्य महाकालापदस्य शंभोः । नानादेशनिवासीत्यनेन सर्वकलावेदित्वं परिषदो दर्शयति । विदग्धपरिषत्संनिधौ हि प्रयोगकौशलप्रकटनस्योत्साहः । भरतास्तच्छास्त्राध्येतारो नटाः । किं तर्हि तैः प्रयोज्यमित्याह—**आदिष्टोऽस्मीति** । **निर्दिष्टगुणप्रबन्धमिति** । रञ्जनीयविद्वत्परिषदा निर्दिष्टा ये गुणास्तच्छालिनं प्रबन्धमित्यर्थः ॥

**नटः**—( प्रविश्य । ) भाव, कतमे ते गुणा यानुदाहरन्त्यार्यमिश्रा भगवन्तो भूमिदेवाः ।

**सूत्रधारः**—

भूम्ना रसानां गहनाः प्रयोगाः
सौहार्दहृद्यानि विचेष्टितानि ।
औद्धत्यमायोजितकामसूत्रं
चित्राः कथा वाचि विदग्धता च ॥ ६ ॥

loftiness of character

elegance

**नटः**—भाव, कस्मिन्प्रकरणे ।

---

आर्या इति सर्वविद्यास्थानवेदिनः । मिश्रा इति पूज्यनिर्देशः । भूमिदेवा इति तत्प्रधानत्वात्, सभाया गुणदोषविवेचनस्य च तदधीनत्वात्, देवतात्मकत्वेन तेषामाराधनीयत्वाच्च । अनेन सभाप्रशंसा कृता ॥ एते यानुदाहरन्ति त एते गुणाः क इति नटस्य प्रश्नः । तानेव गुणानाह—**भूम्नेति** । भूम्ना प्राचुर्येण रसानामङ्गाङ्गिभावेन निविष्टानां शृङ्गारादीनां प्रयोगा अभिनया गहनाः स्थूलदर्शिभिर्भावयितुमशक्याः । रसानां हि व्यञ्जनेन विषयाणामगूढत्वेगुणीभावप्रसङ्गात्, गूढतयैव कामिनीकुचकलशवदिति भावनाचर्वणादौ सूक्ष्ममतय एव सहृदयाः समर्थाः । न तु पदपदार्थज्ञानकृतार्थाः पण्डितंमन्याः । यथाह ध्वनिकृत्—'शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते। वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम्॥' इति । अनेन रसैकप्रवणत्वं प्रबन्धस्य जीवितभूतो गुणो दर्शितः । तथा सौहार्देन निरुपाधिकस्नेहेन हृद्यानि मनोहराणि विचेष्टितानि नायकतन्मित्रादीनां व्यापाराः। अनेन धीरप्रशान्तनायकोपेतत्वं नाम गुणो दर्शितः । तथा औद्धत्यं शृङ्गाररसप्रधानस्यापि नायकस्य तद्विरोधिबीभत्साद्भुतरौद्ररसालम्बनत्वम् । तथा आयोजितमानुकूल्येन संघटितं कामसूत्रं नायिकानायकयोरन्योन्यानुरागबीजं येन तादृशम् । कामोऽनुरागः । स एव वर्तिष्यमाणसर्वकार्यबीजभूतत्वात्सूत्रमिव सूत्रम् । अयं भावः—महामांसविक्रयाघोरघण्टादौ यद्बीभत्सरौद्रशृङ्गारविरोधिरसोपादानं तदपि प्रधानमालतीलाभलक्षणप्रयोजनानुगुण्येन शृङ्गाराङ्गभावापत्त्या विरोधपरिहारेणौचित्यमेव संपादयतीति । तदुक्तम्—'विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम् । भावानामङ्गभावं वा प्राप्तानामुक्तिरच्छला ॥' इति अत्र खल्ववधानवता कविना भवितव्यम् । यद्विरोधिरसोपादानेऽप्यनौचित्यलेशोऽपि नास्पदं लभते । यदाह—'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् । प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥' इति । अनेनौचित्यशालित्वं नाम गुणो दर्शितः । कथाश्चित्राः । वस्तु पुनराश्चर्यजनकमिति वृत्तवैचित्र्यं गुणः । वाचि विदग्धता उक्तौ चातुर्यम् । निर्दोषगुणालंकारयोगोऽनेन दर्शितः । ईदृशगुणगरिष्ठप्रबन्धप्रयोगार्थमादिष्टोऽस्मीति भावः ॥ ६ ॥ **कस्मिन्निति** । नैतादृशः प्रबन्धः प्रायेण लक्ष्यत इत्याशयः ॥

**सूत्रधारः**—(विचिन्त्य।) स्मृतम् । अस्ति दक्षिणापथे पद्मपुरं नाम नगरम् । तत्र ब्राह्मणाः केचित्तैत्तिरीयाः पङ्क्तिपावनाः काश्यपाः पञ्चाग्नयः सोमपीथिनो धृतव्रता उदुम्बरनामानो ब्रह्मवादिनः प्रतिवसन्ति ।

ते श्रोत्रियास्तत्त्वविनिश्चयाय
भूरिश्रुतं शाश्वतमाद्रियन्ते ।
इष्टाय पूर्ताय च कर्मणेऽर्था-
न्दारानपत्याय तपोर्थमायुः ॥ ७ ॥

तदामुष्यायणस्य तत्रभवतो भट्टगोपालस्य पौत्रः पवित्रकीर्तेर्नीलकण्ठस्य पुत्रः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूतिर्नाम कविर्निसर्गसौहृदेन भरतेषु वर्तमानः स्वकृतिमेवंगुणभूयसीमस्माकं हस्ते समर्पितवान् । यत्र खल्वियं वाचो युक्तिः ।

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः ।

---

**स्मृतमिति** । अस्ति कश्चिदीदृशः प्रबन्धो मयेदानीं दिष्ट्या स्मृत इति भावः । तैत्तिरीयाः तित्तिरिप्रोक्तं छन्दस्तैत्तिरीयम् । तदधीयत इति तैत्तिरीयाः । पञ्चाग्नयो गार्हपत्यादिपञ्चाग्निपरिचर्यापराः । आहिताग्नय इति यावत् । सोमपीथिनः सोमपानमेषामस्तीति ते । तथा ज्योतिष्टोमादिक्रत्वनुष्ठातार इत्यर्थः । धृतव्रतास्तपोनियमनिष्ठाः । उदुम्बराख्यं कुलनाम येषां ते । तथा ब्रह्मवादिनोऽध्यात्मनिष्ठाः । **त इति** । श्रोत्रियाः साङ्गवेदाध्ययनतदर्थज्ञानतदनुष्ठाननिष्ठा विशिष्टकुलप्रसूताः ब्राह्मणाः । 'श्रोत्रियंश्छन्दोऽधीते' इति निपातनात्साधुः । तत्त्वस्य पारमार्थिकस्य ब्रह्मस्वरूपस्य परमपुरुषार्थस्य विशेषतः असंभावनाविपरीतभावनानिरासपूर्वकं निश्चयो निर्विचिकित्सं ज्ञानं तस्मै प्रयोजनाय । भूरिश्रुतं शाश्वतम् । 'ब्राह्मणेन निष्ठाधर्मः षडङ्गो वेदोऽध्येयो ज्ञेयः' इति नित्यवच्छ्रुतिबोधितत्वेन नित्यं श्रुतं शास्त्रश्रवणमाद्रियन्ते, न तु प्रतिवादिगर्वनिर्वापणेन ख्यातिलाभार्थम् । यागाद्यनुष्ठानार्थं तटाकादिनिर्माणार्थं चार्थानाद्रियन्ते,न तु भोगेच्छया । संततिसंपादनाय दारान्, न तु मन्मथं कृतार्थयितुम् । तपःसंवर्धनार्थमायुरपेक्षन्ते,न तु जीवनलोभेन मरणभयेन वेति । परिसंख्यालंकारः॥७॥आमुष्यायणस्य अमुष्यकुलप्रसूतस्य पुत्रस्य । नडादित्वात्फक् । 'आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति चालुग्वक्तव्यः' इति षष्ठ्या अलुक् । श्रीकण्ठपदं लाञ्छनं यस्य सः । भवभूतिरिति व्यवहारे तस्यैव नामान्तरम् । भरतेषु निसर्गसौहृदेन नाट्यवेदपारगत्वेनाभिनयार्थं नायकादिनिर्माणनिपुणत्वेन च नटास्तस्मिन्गुरौ यथा भक्तिं कुर्वन्तीति तेषु तद्वात्सल्याद्वर्तमानः स्वकृतिमेवंगुणभूयसीं भूम्नेत्यत्र निर्दिष्टगुणशालिनीं सभासु प्रयोगेण प्रख्यापयन्त्वित्यस्माकमर्पितवान् । यत्र कृतौ खलु प्रसिद्धौ वाचो युक्तिर्वचोभङ्गिः । **ये नामेत्यादि** ।

उत्पत्स्यते मम तु कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ ८ ॥

तदुच्यन्तां तत्प्रख्यापनाय सर्वे कुशीलवा यथा—स्वसंगीतकप्रयोगे वर्णिकापरिग्रहे च त्वर्यतामिति । कविवर्णनां प्रति तेनैवमुक्तम् ।

गुणैः सतां न मम को गुणः प्रख्यापितो भवेत् ।
यथार्थनामा भगवान्यस्य ज्ञाननिधिर्गुरुः ॥ ९ ॥

अपि च ।

यद्वेदाध्ययनं तथोपनिषदां सांख्यस्य योगस्य च
ज्ञानं तत्कथनेन किं नहि ततः कश्चिद्गुणो नाटके ।

---

अत्र प्रमुखे विनयप्रदर्शनं कवित्वगर्वौद्धत्यप्रकटनं च । नामेति प्रसिद्धौ । मदपेक्षयापि प्रसिद्धा ये केचिन्महात्मानो नोऽस्माकमवज्ञां प्रथयन्ति कियदेतदित्यवजानन्ति । ते हि विवेकसलिलसंक्षालितसंसारवासनापङ्ककलङ्के मनसि प्रत्यगात्मवस्त्वेव परिभावयन्तस्तृणमिव जगदशेषमवलोकयन्तः किमपि रहस्यमुपनिषदेकगम्यं वस्तु जानन्त इति युक्तैव तेषामस्मास्वविद्यापरतन्त्रेष्ववज्ञा । अत एव तानुद्दिश्य नायं यत्नः । किं तर्ह्यतीतानामनेन प्रयोजनाभावाद्वर्तमानानामप्युत्तमाधमानामत्राप्रवृत्तेः सदृशस्य चैवंविधग्रन्थनिर्माणदक्षस्यैतदनुपादानात् । यो मत्सदृश उत्पत्स्यते तं प्रतीति यत्तदोरनुपादानेपि सामर्थ्यात्तदुभयलाभः । तादृशस्योत्पत्तिः संभाव्यत इत्यत आह—**काल इति** । निरवधिरनन्तः । विपुला विस्तीर्णा । अतः कस्मिंश्चिद्देशे कस्मिंश्चित्काले मत्सदृशोऽपि क्वचिदेतदुपादायी जनिष्यत इति संभाव्यत इत्यर्थः । अथवा नामेति किलार्थे । ये केचिद्यादृशास्तादृशा नोऽवज्ञां किल प्रथयन्ति स्वमहिम्ना जगत्सर्वमभिभवतामस्माकमपि । उडुभिरिव भानोः क्षुद्रैः काचिदवज्ञावार्तेति चित्रमिति भावः । ते किं जानन्ति । न किमपीत्यर्थः । अज्ञत्वान्न तदवज्ञयास्माकं काचित्क्षतिरिति भावः । अपिशब्दो भिन्नक्रमः । एष यत्नोऽपि तान्प्रति न । तेषामलक्ष्यत्वात् । कं प्रति तर्हि । अतीतैः प्रयोजनाभावाद्वर्तमानस्य च मत्सदृशस्याभावाद्यः कश्चिन्मादृश उत्पत्स्यते तं प्रति । कथमिदानीमेतावति प्रपञ्चेऽप्यविद्यमानस्त्वादृश इतःपरमुत्पत्स्यत इति संभावनेत्यत आह—अनवधौ कालेऽप्यपरिच्छिन्ने देशे यथाहमेक एतावतः कालस्योत्पन्नस्तद्वदेव को जानीते कदा वा कुत्र वा तादृशः कश्चिदुत्पद्येतापीत्यर्थः । हेत्वलंकारः ॥८॥ **गुणैरित्यादि** । सतामस्मद्गुरूणां गुणैः प्रख्याप्यमानैः। तच्छिष्यस्य मम को गुणो न प्रकटीकृतः तादृशैर्गुरुभिः शिक्षितत्वादेव स्वस्मिन्सर्वे संभाव्यन्त इत्यर्थः । तमेव गुरुं निदर्शयति—**यथार्थेति** ॥९॥ **यद्वेदेति** । उपनिषदां वेदशिरसां सांख्यस्य कापिलस्य योगस्य पातञ्जलस्य च मोक्षशास्त्रस्य । **नहीति** । तत्परिज्ञानं न काव्यनिर्माणनैपुण्योपयोगमित्यर्थः । किं तर्हि नाटकरचनोपयुक्तमत आह—वचसां यत्प्रौढित्वं विव-

यत्प्रौढित्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः ॥ १० ॥

**नटः**—तावद्भूमिकास्तथैव भावेन सर्वे वर्ग्याः पाठिताः । सौगतजरत्प्रव्राजिकायाः कामन्दक्यास्तु प्रथमां भूमिकां भाव एक एवाधीते । तदन्तेवासिन्यास्त्वहमवलोकितायाः ।

**सूत्रधारः**—ततः किम् ।

**नटः**—प्रकरणनायकस्य मालतीवल्लभस्य माधवस्य वर्णिकापरिग्रहः कथम् ।

**सूत्रधारः**—कलहंसमकरन्दयोः प्रवेशावसरे तत्सुविहितम् ।

**नटः**—तेन हि तत्प्रबन्धप्रयोगादेवात्रभवतः सामाजिकानुपासहे ।

---

क्षितार्थसमर्पणप्रावीण्यम् । 'विवक्षितार्थनिर्वाहः काव्ये प्रौढिरिति स्मृता' इति वचनात् । 'पदे वाक्यार्थरचना वाक्यार्थे च पदाभिधा । प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥' इत्येवंरूपं वैचित्र्यं वा । उदारता प्रबन्धसौन्दर्यं श्लाघ्यार्थत्वं वा । अर्थतो गौरवमनेकार्थप्रतिपादनसामर्थ्यं गाम्भीर्यरूपं तदेतच्चेदस्ति । तदेव पाण्डित्यस्य व्युत्पत्तेर्वैदग्ध्यस्य कविताशक्तेश्च गमकं ज्ञापकम् । प्रबन्धगुणान्दृष्ट्वा स्वयमेव विद्वांसो मम वैदग्ध्यं ज्ञास्यन्ति । नत्वेतन्मया स्वकण्ठेन वक्तव्यमित्यर्थः ॥१०॥ एतावता कविकाव्यप्रशंसा कृतेति प्ररोचनां निर्वृत्यामुखं प्रस्तौति—**तावदित्यादि** । वीथ्यङ्गानामामुखे विकल्पितत्वान्नात्र तेषामुपादानमिति मन्तव्यम् । तावत्साकल्येन भूमिकास्तत्तदभिनयकार्यं प्रति जनोचितवर्णवेषभाषाभिनयादिपरिग्रहान्स्ववर्गान्तर्गताः पाठिताः शिक्षिताः । सौगतजरत्प्रव्राजिकाया बौद्धवृद्धसंन्यासिन्याः प्रथमामादितः प्रवेशनीयाम् ॥ ततः किम् । ब्रूहीति शेषः । **तत इति** । आवाभ्यां तावत्कामन्दक्या अवलोकितायाश्च भूमिकाद्वयं प्रथममेव गृहीतम् । प्रधाननायकभूमिकापरिग्रहस्तु कथं केन वा कर्तव्य इत्यर्थः । उत्तरमाह—**कलहंसेति** । कलहंसो माधवस्य चेटः, मकरन्दो मित्रम्, तत्प्रवेशावसर एवैतन्माधवभूमिकापरिग्रहणं भविष्यतीति नेदानीं तच्चिन्तनीयम् । तेन सर्वं सुष्ठु विहितम्, न किंचिदपि कर्तव्यमवशिष्टमित्यर्थः । तदनेन प्रथमं कामन्दक्यवलोकिताप्रवेशः सूचितः । केचित्तु यावन्त्यत्र प्रकरणे पात्राणि तेषां सर्वेषामपि प्रथमतः प्रवेशः सूचित इति व्याचक्षते । तदसंगतम् । तत्प्रवेशावसर एव प्रवेशस्य सूचनीयत्वात् । न तु कृत्स्नप्रकरणपात्रप्रवेशः प्रथमतः सूचनीय इति प्रकरणलक्षणत्वे न क्वचिदपि ग्रन्थे दृश्यते । तत्तत्पात्रप्रवेशसमये तत्तत्सूचनं स्फुटमेवाग्रे दृश्यत इत्यलम् ॥ **तेनेति** । सामाजिकनिर्दिष्टगुणयोगित्वेन वर्गैरधीतत्वेन चेत्यर्थः । समाजे समवेतान्सामाजिकान् । 'पशूनां स-

**सूत्रधारः**—बाढम् । एषोऽस्मि कामन्दकी संवृत्तः ।

**नटः**—अहमप्यवलोकिता ।

(इति निष्क्रान्तौ ।)

**प्रस्तावना ।**

---

(परिवृत्य रक्तपटिकानेपथ्य उभावुपविष्टौ प्रविशतः ।)

**कामन्दकी**—वत्से अवलोकिते ।

**अवलोकिता**—[१]आणवेदु भअवदी ।

**कामन्दकी**—अपि नाम कल्याणिनोर्भूरिवसुदेवरातापत्ययो-

---

१. आज्ञापयतु भगवती ।

---

मजोऽन्येषां समाजोऽथ सधर्मिणाम्' इत्यमरः ॥ **बाढमिति** । तथा कुर्म इत्यर्थः । **एष इति** । सूत्रधाररूपपरित्यागेन कामन्दकीभूतोऽस्मि ॥ अहमप्यवलोकिता संवृत्तेत्येतदामुखाङ्गं प्रयोगातिशयः । तदुक्तम्—'एषोयऽमित्युपक्षेपात्सूत्रधारप्रयोगतः । पात्रप्रवेशो यत्रायं प्रयोगातिशयो मतः ॥' इति । अन्यस्य पात्रस्य प्रवेश एषोऽयमित्युपक्षेपः । सूत्रधारस्यैव समनन्तरपात्रत्व एषोऽहमित्युपक्षेप इति नातीवभेदः ॥ इति प्रस्तावना ॥ परिवृत्य निर्गमनं नाटयित्वा । काषायशाटीविरचितवेषावुपविष्टौ कामन्दक्यवलोकितावेषधारिणौ प्रविशतः । इत्येवं प्रस्तावनां परिसमाप्य सूचनीयकथांशसूचनार्थं मिश्रविष्कम्भमारभते—**कामन्दकीत्यादि** । वदतीति शेषः । विष्कम्भलक्षणं तु—'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥' इति । शुद्धः संकीर्णो वा द्विविधो विष्कम्भकोऽपि वक्तव्यः । मध्यमपात्रैः 'शुद्धः संकीर्णो नीचमध्यमकृत् ॥' इति । शेषं नाटकवदित्यतिदेशात्प्रकरणेऽपि विष्कम्भकनिवेशः । तथा चाहुः—'प्रकरणनाटकविषये प्रवेशको नाम विज्ञेयः । विष्कम्भकस्तु कार्यो नाटकयोगे प्रकरणे च ॥' इति ॥ **अवलोकितेति** । आज्ञापयतु भगवती ॥ **अपि नामेति** । कल्याणिनोः कल्याणं मङ्गलमन्योन्यानुरूपं वयोरूपभाग्यसौभाग्यादिकमनयोरस्तीति तौ तथोक्तौ । अनेन चान्योन्यानुगुणयोगान्मालत्येव माधवस्य योग्या वधूः, स एव तस्याः समुचितो वरः, इति सूचितम् । भूरीति श्लाघ्यवंशप्रसूतत्वेन कुलतत्संबन्धार्हत्वं ध्वनितम् । मालतीमाधवयोरितरेतरयोगद्वन्द्वनिर्देशेन साहित्यप्रतीतेः । तद्धेतुरन्योन्यानुरागोऽस्तीति द्योत्यते । अभिमतं तयोर्बन्धूनामन्येषां च सहृदयानामभिलषितमित्यर्थः । तदनेन मालतीमाधवयोरन्योन्यानुरागोऽत्र प्रकरणे बीजभूतः सूचितो भवति । यथा—'स्तोकोद्दिष्टः कार्यहेतुर्बीजं विस्तार्यनेकधा' इति । प्रथमं स्वल्पमेवोद्दिष्टः पश्चादनेकधा विस्तारी यः कार्यस्य प्रयोजनस्य हेतुः सोऽर्थो बीजमित्युच्यते । अत्र च प्रकरणे मालतीप्राप्तिर्माधवस्य प्रधानं कार्यम् । तद्धेतुश्च

रनयोर्मालतीमाधवयोरभिमतं पाणिग्रहमङ्गलं स्यात् । ( सहर्षं वामाक्षिस्पन्दनं सूचयित्वा । )

विवृण्वतेव कल्याणमान्तरज्ञेन चक्षुषा ।
स्फुरता वामकेनापि दाक्षिण्यमवलम्ब्यते ॥ ११ ॥

**अवलोकिता**—महन्तो क्खु एसो भअवदीए चित्तावक्खेओ । अच्चरिअं अच्चरिअम् । जं दाणिं चीरचीवरमेत्तपरिच्छदं पिण्डपाअमेत्तपाणउत्तिं वि भअवदीं ईरिसेसु आआसेसु अमच्चभूरिवसू णिओएदि । तस्सिं उक्खण्डिअसंसारावग्गहो तुह्मेहिं वि अप्पा णिक्खिविअदि ।

१. महान्खल्वेष भगवत्याश्चित्तावक्षेपः । आश्चर्यमाश्चर्यम् । यदिदानीं चीरचीवरमात्रपरिच्छदां पिण्डपातमात्रप्राणवृत्तिमपि भगवतीमीदृशेष्वायासेष्वमात्यभूरिवसुर्नियोजयति । तस्मिन्नुत्खण्डितसंसारावग्रहो युष्माभिरप्यात्मा निक्षिप्यते ।

तयोरनुरागो बीजम् । बीजं नाम प्राथमिकी अर्थप्रकृतिः । कार्यं पञ्चमी । पाणिग्रहणमङ्गलमपि नाम स्यात् । किं नु खलु भवेत् । अनेन मालतीमाधवसमागमरूपफलार्थमौत्सुक्यप्रतीतेरारम्भो नाम प्रथमावस्था दर्शिता । यथा—'औत्सुक्यमात्रमारम्भः फललाभाय भूयसे' इति । बीजारम्भसमन्वयाच्चायं मुखसंधिः । तदुक्तम्—'बीजबिन्दुपताकाख्यप्रकरीकार्यलक्षणाः । आरम्भयत्नप्राप्त्याशा नियताप्तिफलागमाः ॥ अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः । यथासंख्येन जायन्ते मुखाद्याः पञ्च संधयः ॥' इति । तत्रार्थहेतुमद्भेदो यत्र बीजस्य तन्मुखम् । तस्य च मुखसंधेरुपक्षेपादीन्यङ्गानि द्वादश बीजारम्भानुगुण्येन प्रयोक्तव्यानि । तानि च यथावसरमग्रत एव निरूपयिष्यन्त इत्यलम् ॥ **सहर्षमिति** । विचिन्त्यमानमनोरथसिद्धिसूचकनिमित्तलाभात् । तदेव दर्शयति—**विवृण्वतेति** । आन्तरज्ञेनेवास्मिन्नर्थे खल्वियं संदिग्धे किमेतत्प्रयोजनं भविष्यति न वेति, तदस्याः संशयमपनयामीत्येवमस्मदभिप्रायवेदिनेव कल्याणं विवृण्वता भाविमङ्गलं सूचयता स्फुरता वामकेन सव्येन । अथ च प्रतिकूलेनापि सता चक्षुषा दाक्षिण्यं चिन्त्यमानकार्यसिद्धिशंसित्वेनाप्रातिकूल्यम् । अथ च सव्येतरत्वमङ्गीक्रियते । स्त्रीणां वामाक्षिस्पन्दः शुभशंसीति नैमित्तिकाः । विरोधाभासोऽलंकारः ॥ ११ ॥ **अवलोकिता**—महान्खल्वेष चिन्तारूपो भगवत्याश्चित्तावक्षेपो मनःखेदः । आश्चर्यमाश्चर्यम् । यदिदानीं चीरैः रथ्यापतितपटच्चरखण्डैः कृतो यश्चीवरः कन्था तन्मात्रप्रावरणां पिण्डस्य भैक्षकवलस्य प्राणधारणोचितस्य पात उदरकुहरे निक्षेपस्तन्मात्रप्राणवृत्तिः । पात्रे पाणौ मुखे वा यैर्यदन्नं विनिपात्यते तदेवौषधवन्निगीर्यते, न तु रसास्वादपूर्वकं भुज्यत इत्यर्थः । भगवतीं माहात्म्यवतीमात्मवतीमीदृशेष्वायासेषु दुःखजनकेषु रा-

**कामन्दकी**—वत्से, मा मैवम् ।

यन्मां विधेयविषये स भवान्नियुङ्क्ते
स्नेहस्य तत्फलमसौ प्रणयस्य सारः ।
प्राणैस्तपोभिरथवाभिमतं मदीयैः
कृत्यं घटेत सुहृदो यदि तत्कृतं स्यात् ॥ १२ ॥

किं न वेत्सि । यदैव नो विद्यापरिग्रहाय नानादिगन्तवाससाहचर्यमासीत्तदैवास्मत्सौदामिनीसमक्षमनयोर्भूरिवसुदेवरातयोः प्रवृत्तेयं प्र-

---

गिजनोचितदूत्यादिकृत्येष्वमात्यभूरिवसुर्नियोजयतीति तस्य तावत्कार्यग्रस्तत्वादन्येन चास्य दुष्करत्वादनुचितेऽपि व्यापारे भगवतीं नियोजयतु नाम । तस्मिंश्चायास उत्खण्डित उच्छिन्नः संसार एवावग्रहो निःश्रेयसामृतवर्षप्रतिबन्धः । मोक्षान्तराय इति यावत् । स यस्य आत्मा युष्माभिरपि निक्षिप्यत इति यदेतत्सर्वमाश्चर्यमिति योजना ॥ **कामन्दकी । वत्से इति** । नैवं वक्तव्यमित्यर्थः ॥ **यन्मामिति** । स पूज्यो भवान्भूरिवसुर्मां विधेयविषये कृत्यविषये नियुङ्क्ते इति यत्तत्स्नेहस्य प्रेम्णः फलम् । असौ विस्रम्भयोग्यं प्रेमैव प्रणय इत्युच्यते । निर्व्याजं सौजन्यमेव प्रणय इति केचित् । तस्य सारः स्थिरांशः । स्नेहातिरेकादनुचितेऽपि कर्मणि नियोगोऽस्माकं च तदङ्गीकरणं युक्तमेवेति भावः । प्राणैरथवा तेभ्योऽपि श्लाघ्यैस्तपोभिर्वा सुहृदभिलषितकृत्यं घटेत यदि सिध्येत् । तत्तर्हि निःश्रेयसादप्यधिकं कृत्यमस्मत्प्राणैस्तपोभिश्च कृतं निष्पादितं स्यादित्यावृत्त्या योजनीयम् । मित्रकार्यनिष्पादनं मोक्षादपि गरीय इति भावः । अमात्यभूरिवसुः स्वसुतां मालतीं स्वबालमित्रस्य देवरातस्यात्मजाय माधवाय प्रदित्सुर्नरपतेर्नन्दननाम्ने नर्मसचिवाय मालतीं याचमानाद्भयेन प्रकाशं दातुमशक्नुवन्गूढविवाहनिर्वर्तनव्यापारे कामन्दकीं नियुक्तवानिति कथा उपरि स्फुटीभविष्यति ॥ १२ ॥ किमिति भूरिवसोर्माधवायैव मालती दातव्येति निर्बन्धः । भगवत्या वा प्राणव्ययेनाप्येतत्कार्यं संपाद्यमिति किमित्यभिनिवेश इत्यत आह—**किं न वेत्सीति** । आबाल्यान्मदन्तेवासिनी त्वमप्येतत्सर्वं जानास्येवेति भावः । **न इति** । भूरिवसुदेवरातयोर्मम चेत्यर्थः । नानादिगन्तवासेन बहुदेशवासेन साहचर्यं सहचरभावः । एकत्राध्ययननिबन्धना मैत्री यदैवाभूत्तदैवास्मदिति पञ्चमीबहुवचनम् । अस्मत्त एव मत्कारितैव ययोरियं प्रतिज्ञा प्रवृत्ता । केत्यत आह—**आवाभ्यामिति** । अतश्च पूर्वप्रतिज्ञातत्वाद्भूरिवसोर्मत्पुरःसरत्वान्मम चात्र निर्बन्धो युक्त इति भावः । मत्प्रथमशिष्या सौदामिन्यप्यत्रार्थे साक्षिणीत्यत आह—**सौदामिनीसमक्षमिति** । तेन तस्या अप्येतत्प्रयोजननिर्वाहकान्तःपातित्वप्रतीतेः अन्ते तया करिष्यमाणो मालत्युपद्रवपरिहारः कथांशः सूचितो भवति । नापि मां भूरिवसुर्दूत्ये नियुङ्क्ते । किं त्वहमेव मत्काङ्क्षितप्रतिज्ञानिर्वाहार्थं प्रवर्ते । न मे दूत्यलाघवमाशङ्कनीयमित्यपि सूच्यते । मम च सौदामिन्याश्चास्मत्सौदामिनीसमक्षमिति व्याख्यानमनुपपन्नम् । स च देवदत्तश्च ता-

तिज्ञा अवश्यमावाभ्यामपत्यसंबन्धः कर्तव्य इति । तदिदानीं विदर्भराजस्य मन्त्रिणा सता देवरातेन माधवं पुत्रमान्वीक्षिकींश्रवणाय कुण्डिनपुरादिमां पद्मावतीं प्रहिण्वता सुविहितम् ।

अपत्यसंबन्धविधिप्रतिज्ञा प्रियस्य नीता सुहृदः स्मृतिं च ।
अलोकसामान्यगुणस्तनूजः प्ररोचनार्थं प्रकटीकृतश्च ॥ १३ ॥

**अवलोकिता**— किंति मालदिं अमच्चो माहवस्स अप्पणा ण प्पडिवादेइ । जेण चोरिअविवाहे भअवदीं तुवरावेदि ।

**कामन्दकी**—

तां याचते नरपतेर्नर्मसुहृन्नन्दनो नृपमुखेन ।
तत्साक्षात्प्रतिषेधः कोपाय शिवस्त्वयमुपायः ॥ १४ ॥

---

१. किमिति मालतीममात्यो माधवस्यात्मना न प्रतिपादयति । येन चौर्यविवाहे भगवतीं त्वरयति ।

---

वितिवत् 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषप्रसङ्गात् । द्विपर्यन्तादीनामेव त्यदादित्वमिति तु त्यदाद्यत्वमात्रनिरासार्थम् । **तदिदानीमिति** । तत्प्रतिज्ञातम् । मन्त्रिणेतिपदं बहुप्रयोजनोद्देशेन पुत्रमत्र प्रेषितवानिति तस्य बुद्धिकौशलं प्रकटयितुम् । आन्वीक्षिकी न्यायशास्त्रम् । नीतिशास्त्रस्यापि न्यायमूलकत्वात्तदन्तर्गतिः । सुविहितं साधु संपादितम् ॥ सुविधाने युक्तिमाह—**अपत्येति** । पूर्वमेव संबन्धस्य प्रतिज्ञातत्वात्स्वयमेव भूरिवसुः सुतां माधवाय दास्यतीति यदि तमत्र देवरातो न प्रेषयेत्तदा स्मारकाभावात्कालविप्रकर्षाच्च भूरिवसुः प्रतिज्ञां विस्मरेदपि । तदनेन पुत्रप्रेषणेन सुहृदः प्रतिज्ञा स्मृतिविषयं प्रापिता । यदि वा कदाचिददृष्टवशात्स्मरन्नपि वरगुणापरिज्ञानादतिलोकलावण्यशालिनीं सुतां दातुं संशयीत, तदपि निराकृतम् । यतः प्ररोचनार्थं संबन्धेच्छोत्पादनार्थं यूनोरन्योन्यानुरागजननार्थं चानितरसाधारणगुणस्तनूजः प्रकटीकृतश्चेति युक्तिद्वयात्प्रतिज्ञातं सुतप्रेषणेन सुविहितमित्यर्थः ॥ १३ ॥ **अवलोकिता**—किमिति मालतीममात्यो माधवस्यात्मना न प्रतिपादयति । येन चौर्यविवाहे भगवतीं त्वरयति । माधवस्येति चतुर्थ्यर्थे षष्ठी ॥ स्वयमप्रदाने निमित्तमाह—**कामन्दकी । तामिति** । नरपतेर्नर्मसुहृत्क्रीडासचिवो नन्दनस्तां मालतीं नृपमुखेन याचते । नन्दनाय प्रयच्छेति राज्ञा याचयतीत्यर्थः । राजगुणेन याचते । न तु श्लाघ्यवरगुणेनेति भावः । तस्या नरपतिप्रार्थनायाः साक्षान्मुखतो न प्रयच्छामीत्येव निषेधो राज्ञः कोपाय स्यात् । अयं तु चौर्यविवाहरूप उपायः शिवः शोभनः । अभिमतसुहृत्संबन्धनृपद्वेषलक्षणेष्टानिष्टप्राप्तिपरिहारहेतु-

**अवलोकिता**—अच्चरिअं अच्चरिअं । ण क्खु अमच्चो माहवस्स णामं वि जाणादित्ति णिरवेक्खदा लक्खिअदि ।

**कामन्दकी**—वत्से, संवरणं तत् ।

विशेषतस्तु बालत्वात्तयोर्विवृतभावयोः ।
तेन माधवमालत्योः कार्यः स्वमतिनिह्नवः ॥ १५ ॥

अपि च—

अनुरागप्रवादस्तु वत्सयोः सार्वलौकिकः ।
श्रेयो ह्यस्माकमेवं हि प्रतार्यौ राजनन्दनौ ॥ १६ ॥

---

१. आश्चर्यमाश्चर्यम् । न खल्वमात्यो माधवस्य नामापि जानातीति निरपेक्षता लक्ष्यते ।

---

त्वात् ॥१४॥ **अवलोकिता**—आश्चर्यमाश्चर्यम् । न खल्वमात्यो माधवस्य नामापि जानातीति माधवे निरपेक्षता लक्ष्यते । कथं तस्मै सुतां प्रदित्सुस्तं माधवमप्यजानान इव तस्मिन्निःस्पृहमाचरतीत्यर्थः ॥ **कामन्दकी**—संवरणं तत्, राजभयेनाकारगोपनं तत् । अज्ञाननटनमित्यर्थः । इतोऽप्यज्ञानं नटनीयमित्याह—**विशेषतस्त्विति** । बाल्यानन्तरभावित्वाद्भूयसा तद्धर्मानुवृत्तेश्च । बाल्यमिह प्रथमयौवनमुच्यते । तेन युक्तायुक्तविचारविधुरे, आकारगोपनानभिज्ञे, मदनाङ्कवशंवदे, गुरुजनमुल्लङ्घ्यापि मनोरथं संपादयितुमुद्युञ्जाने, प्रथमयौवने वर्तमानत्वाद्विवृतभावयोः प्रकटीभूतान्योन्यानुरागकुण्ठीभावपरिहारार्थं विशेषतः स्वमतेस्तदन्योन्यानुरागविषयाया निह्नवः कार्यः प्रच्छादनं कर्तव्यम् । मालत्यपि माधवानुरक्तां मां तातो न जानातीति यथा मन्यते, माधवोऽपि स्वसुतानुरक्तं माममात्यो न वेत्तीति यथा प्रत्येति, तथा तदज्ञानं नाटयितव्यम् । तथा सत्यकुण्ठितोत्साहयोस्तयोः स्वत एवाभिमतसंघटनं सिध्येत् । अन्यथा गुरुजनेन विदितमस्मच्चापलमिति लज्जया तदुद्योगभङ्गादभिलषितः कृतकपरिणयो न निष्पद्येतेति भावः । अत्र नायकयोरन्योन्यानुरागस्य बीजस्योपन्यासादुपक्षेपो नाम मुखसंधेरङ्गमुक्तं भवति । यथा—'बीजन्यास उपक्षेपः' इति ॥१५॥ **अनुरागेति**—अमात्यो माधवस्य नामापि न जानातीत्येतत्संवरणमात्रमिति किं वक्तव्यम् । यतः वत्सयोरुभयोरपि, कामन्दकीं प्रति प्रियसुहृदपत्यत्वाद्वत्सयोरिति निर्देशः । अनुरागप्रवादः सार्वलौकिकः सर्वलोकविदितः । 'लोकसर्वलोकाभ्याम्–' इति ठञ् । अनुशतिकादित्वादुभयपदवृद्धिः । पामरा अपि जानन्ति किमुतामात्य इति भावः । अनेन बीजस्य बहुलीकरणात्परिकरो नाम संध्यङ्गमुक्तं भवति । यथा—'तद्बाहुल्यं परिकरः' इति । एवं च सत्यस्माकं श्रेयो भवति । कुतः । हि यस्माद्राजनन्दनौ प्रतार्यौ वञ्चयितुं शक्यौ स्याताम् । यदि कृतकपरिणये वृत्ते राजा नन्दनो वा कुप्येत् कथमनया वराक्या भिक्षुक्यास्मद्विरोध आचरित इति, तदा न ममात्र दोषः तावन्योन्यानुरागवशेन स्वत एव संमिलितौ । स चानुरागः सर्वलोकप्रसिद्ध इत्यस्माकं तद्वचनं सुलभमित्यर्थः

पश्य ।

बहिः सर्वाकारप्रवणरमणीयं व्यवहर-
न्पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति ।
जनं विद्वानेकः सकलमतिसंधाय कपटै-
स्तटस्थः स्वानर्थान्घटयति च मौनं च भजते ॥ १७ ॥

**अवलोकिता**—मए वि तुह्म वअणादो तेण तेणोवण्णासेण भूरिवसुमन्दिरासण्णतरराअमग्गेण माहवो सञ्चारिअदि ।

**कामन्दकी**—कथितमेव नो मालतीधात्रेय्या लवङ्गिकया ।

भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।

१. मयापि युष्मद्वचनात्तेन तेनोपन्यासेन भूरिवसुमन्दिरासन्नतरराजमार्गेण माधवः संचार्यते ।

॥ १६ ॥ एवमेव च विदग्धाः स्वयमुदासीनवद्वर्तमानास्तद्वार्तामप्यजानाना इव परैः प्रतीयमाना बुद्धिकौशलेनैव कार्याणि निर्वहन्तो दृश्यन्त इत्याह—**बहिरिति।** विद्वान्कार्यवेद्येकोऽनेकाप्तवर्गनिक्षिप्तकार्यभरोऽप्यन्यैरेकवत्प्रतीयमानः सन् बहिः स्वकीयवास्तवव्यापारप्रच्छादनेन लोकं वञ्चयितुमेव केवलमारब्धे स्वाभिलषितरहस्यकार्याद्बहिर्भूतेऽन्यस्मिन्मनःपूर्वकेऽपि व्यापारे सर्वस्याकारस्य वेषभाषाव्यवहरणादेरनुभावस्य प्रावण्येन । भावप्रधानो निर्देशः । तदेकपरत्वेन रमणीयं लोकस्य चित्तरञ्जनं यथा भवति तथा व्यवहरन्नयमहर्निशमेतदेकपरो वर्तते । न ह्यसावन्यकार्यवार्तामपि जानातीति यथा रन्ध्रान्वेषिणामपि प्रतीतिस्तथा व्यवहरन्नित्यर्थः । परेषां शत्रूणामभ्यूहस्य रहस्योत्प्रेक्षणस्य समुचितानि स्थानानि छिद्राणि तनुतराण्यप्यतिसूक्ष्माण्यपि स्थगयति पिधत्ते एवं सकलसूक्ष्मदर्शिनमपि जनं कपटैर्वञ्चनव्यापारैरतिसंधाय विश्वासजननेन वञ्चयित्वा स्वयं तटस्थ उदासीन इव प्रतिभासमान एव स्वानर्थान्घटयति संपादयति । मौनं च भजते । अभिमतकार्यविषये वाङ्मात्रमपि बहिर्न वदतीत्यर्थः । विदग्धजनस्वभावोक्तिः ॥ १७ ॥ इदानीमवलोकिता स्वानुष्ठितकार्यांशमाह—**अवलोकिता । मयेति** । स च मयापि युष्माकं वचनात्तेन तेनोपन्यासेन बहुविधानाशङ्कनीयव्याजोक्तिप्रयोगेण भूरिवसुमन्दिरस्यासन्नतरराजमार्गेण माधवः संचार्यते । यथा मालतीनयनगोचरोऽसौ भवति तथा कृतमित्यर्थः । आसन्नत्वेन सर्वावयवसौष्ठवस्य सम्यग्विभाव्यता सूचिता । बहुशः संचरणेऽप्यनाशङ्कनीयत्वं राजमार्गपदेन सूचितम् ॥ त्वत्प्रयुक्तोपायस्य फलमस्माभिरधिगतमित्याह—**कामन्दकी। कथितमिति।** धात्र्याः सुता धात्रेयी 'स्त्रीभ्यो ढक्' । तेन तस्याः सह स्तन्यपानसहपांसुक्रीडादिनातिविस्रम्भस्थानत्वात्सर्वमपि तन्मनोगतं वेत्तीति सूचितम् । किमिति कथितमत आह—**भूय इति।**

साक्षात्कामं नवमिव रतिर्मालती माधवं य-
द्गाढोत्कण्ठा लुलितलुलितैरङ्गकैस्ताम्यतीति ॥ १८ ॥

**अवलोकिता**—बाढम् । तदो ताए उव्वेअविणोअणं माहवपडिच्छन्दअं अभिलिहिअं लवङ्गिआए मन्दारिआहत्थे अज्ज णिक्खित्तं दाव ।

**कामन्दकी**—(विचिन्त्य।) सुविहितं लवङ्गिकया । माधवानुचरः कलहंसो नाम विहारदासीं मन्दारिकां कामयते । तदनेन तीर्थेन तत्प्रतिच्छन्दकमुपोद्धाताय माधवान्तिकमुपेयादित्यभिप्रायः ।

---

१. बाढम् । ततस्तयोद्वेगविनोदनं माधवप्रतिच्छन्दकमभिलिखितं लवङ्गिकया मन्दारिकाहस्तेऽद्य निक्षिप्तं तावत् ।

---

स्वमन्दिरासन्नपुरवीथ्यां बहुशो गतागतानि कुर्वाणं माधवं क्रीडासौधशिखरगोपानसीसंनिहिततुङ्गगवाक्षमार्गस्थिता मालती प्रत्यक्षं नूतनं दाहानन्तरोत्पन्नं कामं रतिरिव नूतनोत्पन्ना सतीत्वेन तस्मिन्नेव स्वभर्तरि बद्धानुरागा दृष्ट्वा साभिलाषं पुनः पुनर्विलोक्य गाढोत्कण्ठा तत्तदनुभावव्यज्यमानप्रवृद्धरणरणिकालुलितलुलितैर्मदनसंतापेनात्यन्तकलुषितैः । कामावस्थानिमित्तकमनीयवर्णान्तरशालिभिरङ्गकैरिति यावत् । ताम्यति म्लायतीति कथितमित्यन्वयः । अत्रोत्कण्ठास्वरूपं तदनुभावाश्च भावप्रकाशिकायाम्—सर्वेन्द्रियसुखास्वादो यत्रास्तीति मनस्त्रियः(?) । तत्प्राप्तीच्छां ससंकल्पामुत्कण्ठां कवयो विदुः ॥ अन्तः संभोगसंकल्पस्तत्तदाशावलोकनम् । अङ्गम्लानिर्मनोरक्तिर्मनोरथविचिन्तनम् ॥ अधिजानुभुजालम्बिकपोलतलमासनम् । प्रसन्नमुखरागश्च स्वेदोष्मा गद्गदा च वाक् ॥ उत्कण्ठानुभवा भावाः कथ्यन्ते भावकोविदैः ॥' इति । अत्र मालत्या माधवविषयोऽभिलाषः प्रथमावस्थेति मन्तव्यम् । यथा—'अभिलाषमनःसङ्गौ संकल्पो गुणस्तुतिः क्रियाद्वेषः । तापो मानत्यागोन्मादौ मूर्च्छा मृतिर्दशावस्थाः ॥' अत्र च 'अभिलाषस्पृहा रम्ये दृष्टे चालम्बने स्मृते । औत्सुक्यस्वेदरोमाञ्चहर्षविस्मयसाध्वसैः ॥ चापलस्तम्भलज्जाद्यैरनुभावैश्च भाव्यते ॥' इति ॥१८॥ **अवलोकिता**—बाढम् । यल्लवङ्गिकया कथितं तद्दृढमित्यर्थः। दृढत्वे युक्त्यन्तरमाह—ततस्तया मालत्योद्वेगविनोदनं माधवप्रतिच्छन्दकं तत्सदृशी प्रतिमाभिलिखितं यत्प्रतिच्छन्दकं लवङ्गिकया मन्दारिकाहस्तेऽद्य निक्षिप्तं तावत् । क्रमेण माधवहस्तं प्राप्स्यतीति तावच्छब्दार्थः ॥ **कामन्दकी । विचिन्त्येति ।** मन्दारिकाहस्ते चित्रफलकनिधानस्य तात्पर्यं विचार्य तद्विवृणोतीति शेषः। **सुविहितमित्यादि** । अनुचरश्चेटः। विहारदासीं बौद्धालयपरिचारिकां तां मन्दारिकाम् । तीर्थेनावतरणमार्गेण । उपोद्धाताय प्रकृतकार्यसिद्धिहेतुभूतायार्थाय। स चार्थो मयीयमनुरक्तेति माधवस्य प्रत्ययः। सत्येव तस्मिंस्तस्य प्रकृतकार्ये प्रवृत्तिसिद्धेरित्यभिप्रायः।

**अवलोकिता**—[1]माहवो वि कोऊहलं उप्पादिअ मए पउत्तम-अणमहूसवं मअणुज्जाणं पहादे अणुप्पेसिदो । तत्थ किल मालदी गमिस्सदि । तदो अण्णोण्णदंसणं होदित्ति ।

**कामन्दकी**—साधु वत्से, साधु । अनेन मत्प्रियाभियोगेन zeal स्मारयसि मम पूर्वशिष्यां सौदामिनीम् ।

**अवलोकिता**—[2]भअवदि, सा दाणिं सोदामिणी समासादिअ-अच्चरिअमन्तसिद्धिप्पहावा सिरिपव्वदे कावालिअवदं धारेदि ।

**कामन्दकी**—कुतः पुनरियं वार्ता ।

**अवलोकिता**—[3]अत्थि एत्थ णअरिए महामसाणप्पदेसे कराला नाम चामुण्डा ।

**कामन्दकी**—अस्ति । या किल विविधजीवोपहारप्रियेति साह-सिकानां miscreant villains प्रवादः ।

**अवलोकिता**—[4]तस्सिं क्खु सिरिपव्वदादो आअदस्स इदो

---

१. माधवोऽपि कौतूहलमुत्पाद्य मया प्रवृत्तमदनमहोत्सवं मदनोद्यानं प्रभातेऽनुप्रेषितः । तत्र किल मालती गमिष्यति । ततोऽन्योन्यदर्शनं भविष्यतीति ।

२. भगवति, सेदानीं सौदामिनी समासादिताश्चर्यमन्त्रसिद्धिप्रभावा श्रीपर्वते कापालिकव्रतं धारयति ।

३. अस्त्यत्र नगर्यां महाश्मशानप्रदेशे कराला नाम चामुण्डा ।

४. तस्मिन्खलु श्रीपर्वतादागतस्येतो नातिदूरस्मशानवासिनः साधकस्य

---

इदं तात्पर्यं मन्दारिकाहस्ते चित्रफलकनिधानस्येत्यर्थः ॥ **अवलोकिता** । स्वानुष्ठितं कार्यान्तरमाह—अत्र माधवोऽपि कौतूहलमुत्पाद्य मया प्रवृत्तमदनमहोत्सवं मदनोद्यानं प्रभातेऽनुप्रेषितः । किमर्थम् । तत्र किल मालती गमिष्यति । ततोऽन्योन्यदर्शनं भविष्यतीति हेतोः ॥ **कामन्दकी** । **साध्वित्यादि** । मत्प्रिये मदभिलषितसंपादनेऽभियोगोऽत्यन्ताभिनिवेशस्तेन ॥ **अवलोकिता**—भगवति । सेदानीं सौदामिनी समासादिताश्चर्यमन्त्रसिद्धिप्रभावा श्रीपर्वते कापालिकव्रतं धारयति ॥ **कामन्दकी** । **कुत इति** । कस्मादुपलब्धेत्यर्थः ॥ **अवलोकिता**—अस्त्यत्र नगर्यां महाश्मशानप्रदेशे कराला नाम चामुण्डा ॥ **कामन्दकी** । **अस्तीति** । अस्ति । प्रसिद्धैव सा श्रूयत इत्यर्थः । विविधानां मनुष्यपशुप्रभृतीनां जीवानामुपहारे प्रिया । अनेन पञ्चमाङ्के मालत्युपहारप्रदर्शनं सूचितम् । साहसिकानां साहसशीलानाम् ॥ **अवलोकिता**—तस्मिन्खलु श्रीपर्वतादागतस्येतो

णादिदूरमसाणवासिणो साधअस्स मुण्डधारिणो अघोरघण्टणामहेअस्स अन्देवासिणी महाप्पहावा कवालकुण्डला णाम अणुसंझं आअच्छइ। तदो इअं पउत्ति ।

**कामन्दकी**—सर्वं हि सौदामिन्यां संभाव्यते ।

**अवलोकिता**—[1]अलं दाव एदिणा । भअवदि, सो वि पासअरो माहवस्स बालमित्तं मअरन्दो णन्दणस्स भइणिं मदअन्तिआं जइ समुव्वहइ तं वि माहवस्स दुइअं पिअं होदि ।

**कामन्दकी**—नियुक्तैव तत्र मया प्रियसखी बुद्धरक्षिता ।

**अवलोकिता**—[2]सुविहिदं भअवदीए ।

**कामन्दकी**—तदुत्तिष्ठ।माधवप्रवृत्तिमुपलभ्य मालतीमेव पश्यावः।

(इत्युत्तिष्ठतः ।) lofty spirit -

**कामन्दकी**—(विचिन्त्य ।) अत्युदारप्रकृतिर्मालती नाम । निपुणं निसृष्टार्थदूतीकल्पस्तन्त्रयितव्यः । सर्वथा

---

मुण्डधारिणोऽघोरघण्टनामधेयस्यान्तेवासिनी महाप्रभावा कपालकुण्डला नामानुसंध्यमागच्छति । तत इयं प्रवृत्तिः ।

१. अलं तावदेतेन । भगवति, सोऽपि पार्श्वचरो माधवस्य बालमित्रं मकरन्दो नन्दनस्य भगिनीं मदयन्तिकां यदि समुद्वहति तदपि माधवस्य द्वितीयं प्रियं भवति ।

२. सुविहितं भगवत्या ।

---

नातिदूरस्मशानवासिनः साधकस्य मन्त्रसाधनोद्यतस्य मुण्डधारिणो नरशिरःकपालधारिणोऽघोरघण्टनामधेयस्यान्तेवासिनी महाप्रभावा कपालकुण्डला नामानुसंध्यमागच्छति । तत इयं प्रवृत्तिर्वार्ता । मया श्रुतेति शेषः ॥ **कामन्दकी । सर्वमिति** । संभाव्यत इति । अनेनोत्तरत्र सौदामिनीसाध्यान्यद्भुतानि सूचितानि ॥ **अवलोकिता**—अलं तावदेतेनालं तावदनुपयुक्तेनाघोरघण्टवृत्तान्तकथनेनेत्यर्थः । भगवति, सोऽपि पार्श्वचरो माधवस्य बालमित्रं मकरन्दो नन्दनस्य भगिनीं मदयन्तिकां यदि समुद्वहति तदपि माधवस्य द्वितीयं प्रियं भवति । अनेनोपनायकस्य मकरन्दस्य गर्भसंधौ पताकावृत्तान्तः सूचितो भवति ॥ **कामन्दकी । नियुक्तेति** । तदपि मया पूर्वमेवानुसंहितमित्यर्थः । **अवलोकिता**—सुविहितं भगवत्या ॥ **कामन्दकी । तदिति** । माधवप्रवृत्तिमुपलभ्य किं मदनोद्याने तयोरन्योन्यदर्शनमभून्न वेति वार्तां ज्ञात्वेत्यर्थः । मालतीमेव पश्यावः। कुलकुमारीजनानुचिते ह्यस्मदुपदिष्टे स्वयमात्मप्रदानसाहसे यथासौ नाशङ्कते तथा नैवातिपरिचयेन वशीकर्तव्येति भावः ॥ **कामन्दकी । विचिन्त्येति** । कीदृशं

शरज्ज्योत्स्ना कान्तं कुमुदमिव तं नन्दयतु सा
सुजातं कल्याणी भवतु कृतकृत्यः स च युवा ।
गरीयानन्योन्यप्रगुणगुणनिर्माणनिपुणो
विधातुर्व्यापारः फलतु च मनोज्ञश्च भवतु ॥ १९ ॥

Sympathetic merit design

( इति निष्क्रान्ते । )

**मिश्रविष्कम्भः ।**

---

( ततः प्रविशति गृहीतचित्रफलकोपकरणः कलहंसः । )

**कलहंसः**—कहिं दाणिं तुलिअमअरद्धआवलेवरूवविब्भमा-

---

१. केदानीं तुलितमकरध्वजावलेपरूपविभ्रमाक्षिप्तमालतीहृदयमाहात्म्यं

---

दूत्यमाचरणीयमिति । विमृश्य । निश्चिनोतीति शेषः । अत्युदारातिगम्भीरा प्रकृतिर्यस्याः सा । तथा गाम्भीर्यं च—'यस्य प्रभावादाकारा हर्षक्रोधभयादिषु । भावेषु नोपलक्ष्यन्ते तद्गाम्भीर्यं प्रकीर्तितम् ॥' इत्युक्तरूपम् । तेन मालत्यतिगम्भीरप्रकृतित्वाच्चरमावस्थायामपि स्वाभिप्रायं स्वयं न निवेदयतीति हेतोर्निपुणं यथा स्यात्तथा निसृष्टार्था या दूती तस्याः कल्पो या व्यापारपद्धतिस्तन्त्रयितव्यः प्रधानीकर्तव्यः । प्राधान्येनाश्रयणीय इत्यर्थः । निसृष्टो निक्षिप्तः 'त्वमेव वेत्सि सर्वं कृत्यम्' इति समर्पितोर्थः । कार्यभारो यस्यामिति व्युत्पत्त्या स्वतन्त्रकार्यनिर्वाहिका दूती कथ्यते । तदुक्तम्—'रूढानुरागयोर्यूनोरभिलाषं मनोगतम् । ज्ञात्वा ताभ्यामनादिष्टा तदपेक्षितसिद्धये ॥ या प्रवर्तेत सा प्रोक्ता निसृष्टार्थेति कोविदैः । निसृष्टः कार्यभारोऽस्यामिति व्युत्पत्तिसंभवात् ॥' इति । अवाच्यकौटिल्यो यत्कृताः संध्यादयः प्रमाणं स निसृष्टार्थो दूतः । यथा भगवान्पाण्डवानामिति ॥ इदानीं स्वव्यापारसाफल्यमाशास्ते-**सर्वथेति । शरज्ज्योत्स्नेति ।** कल्याणी मनोहराकारानुगुणशीलसंपन्ना सुजातं सुजन्मानं कान्तं स्वप्राणनायकं शारदचन्द्रिकाकुमुदमिव समानुरागसंघटने दृष्टान्तः । नन्दयतु निरतिशयानन्दसमृद्धं करोतु । तेन स च युवा कृतपुण्यश्चरितार्थो भवतु । उभयोः समानुरागत्वेन स च तां नन्दयतु । सा च कृतकृत्या भवत्वित्ययमर्थोऽर्थाल्लभ्यते । तं चकारो द्योतयति । एवं च सति गरीयान्गुरुतरोऽन्योन्यस्य परस्परस्य प्रगुणा अनुगुणा ये गुणास्तेषां निर्माणे निपुणो विधातुर्व्यापारः फलतु तत्संघटनलक्षणेनैव फलेन फलवान्भवतु । मनोज्ञः सर्वजनश्लाघ्यो भवतु । तादृगन्योन्यानुरूपनिर्माणस्य तयोः संघटनमेव फलम् । अन्यथा व्यर्थमेव स्यात् । यदाह कालिदासः—'परस्परेण स्पृहणीयशोभम्' इत्यादिश्लोकेन । अत्रोपमोपस्तुत्यमन्योन्यमलंकारः । अत्र परस्परानुरागस्य बीजस्यानुरूपेण स्तुतेर्विलोभनं नामाङ्गम् । यथा—'तद्गुणाख्या विलोभनम्' इति ॥१९॥ मिश्रविष्कम्भोऽयम् । नीचमध्यमपात्रप्रयोजितत्वादिति ॥ 'माधवानुचरः कलहंसो नाम' इति वाक्ये सूचितमुपदर्शयन्नङ्कमारभते—**तत इत्यादि ।** अङ्कलक्षणं

क्खित्तमालदीहिअअमाहप्पं णाहं माहवं पेक्खिस्सं । (परिक्रम्य।) परिस्सन्तो ह्मि । जाव इह उज्जाणे मुहुत्तं विस्समिअ मअरन्दसहअरं णाहं माहवं पेक्खिस्सं । (प्रविश्य उपविशति ।)

(ततः प्रविशति मकरन्दः ।)

**मकरन्दः**—कथितमवलोकितया मदनोद्यानं गतो माधव इति । भवतु । गच्छामि । (परिक्रम्यावलोक्य च।) दिष्ट्या वयस्य इत एवाभिवर्तते । (निरूप्य ।) अस्य तु

eyes fixed on vacancy. गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किं न्वेतत्स्यात्किमन्यदतोऽथवा ।

---

नाथं माधवं पश्यामि । परिश्रान्तोऽस्मि । यावदिहोद्याने मुहूर्तं विश्रम्य मकरन्दसहचरं नाथं माधवं प्रेक्षिष्ये ।

---

यथा—'द्वेधा वस्तुविभागः स्यात्प्रकाश्यः सूच्य इत्यपि । प्रकाश्यो मधुरोदात्तरसभावनिरन्तरः ॥ अङ्कैः प्रकाशयेदेनमङ्कलक्ष्म प्रवक्ष्यते । प्रत्यक्षनेतृचरितो बीजबिन्दुपुरस्कृतः ॥ प्रसक्तार्थोपसंहारी पताकास्थानकान्वितः । अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥ एकाहे वैकरात्रे वा चरितं तत्र वर्णयेत् । प्रयुक्तः पञ्चषैः पात्रैस्तेषामन्ते च निर्गमः ॥' इति । गृहीतं चित्रफलकमेवोपकरणमुपायनत्वेन माधवसंदर्शनसाधनं येन सः । क्वेदानीं तुलितमकरध्वजावलेपरूपविभ्रमाक्षिप्तमालतीहृदयमाहात्म्यं शिथिलीकृतमन्मथगर्वो यो रूपविभ्रमः सौन्दर्यसंपद्विलासस्तेनाक्षिप्तं निरस्तं मालतीहृदयस्य माहात्म्यं गाम्भीर्यं येन तम् । मालतीलिखितमाधवप्रतिच्छन्दकदर्शनेन मालती मन्मथेन माधवं लक्ष्यीकृत्य सुदूरमाकृष्टा चलितधैर्या जातेत्यनेन ज्ञातेति मन्तव्यम् । नाथं माधवं पश्यामि । स्वामिनो माधवस्यात्मनि मालत्यनुरागं संभावयतस्तत्प्रत्ययहेतुत्वेनात्यन्तोपादेयचित्रफलकानयनान्महत्स्वामिकार्यमनुष्ठितमिति क्वेदानीमित्यौत्सुक्यगर्भा ससंभ्रमोक्तिः । **परिक्रम्येत्यादि ।** परिश्रान्तोऽस्मि । यावदिहोद्याने वने मुहूर्तं विश्रम्य मकरन्दसहचरं नाथं माधवं प्रेक्षिष्ये । 'मकरन्दनन्दनम्' इति पाठे प्राणमित्रतया तस्यानन्दजनकमित्यर्थः । क्लिष्टत्वात्तुतमिति व्याख्यानमुपेक्षितम् । अनेनैव मकरन्दप्रवेशः सूचितः ॥ तदाह—**तत इत्यादि** ॥ मदनोद्यानं कामदेवायतनोपलक्षितमुद्यानमित्यनेन श्रृङ्गारोद्दीपनविभावत्वमुक्तम् । दिष्ट्येति तृतीयान्तप्रतिरूपकमव्ययं भाग्यवाचि । अभिवर्तते । अभिमुखमागच्छतीत्यर्थः । अन्यमनस्कतया न मां पश्यतीति भावः । निरूप्य निर्वर्ण्य । वदतीति शेषः । अस्य त्विति श्लोकोपस्कारो गमनमित्यादिनान्वीयते । **गमनमिति ।** गमनमलसं लक्ष्याभावादनिच्छापूर्वकमेव कथंचिदवलम्बितम् । अनेन विप्रलम्भस्यालस्याख्यो व्यभिचारी सूचितः । यथा—'क्रिया विद्वेष आलस्यम्' इति । तथा दृष्टिः शून्या चिन्तापहृतेन मनसाधिष्ठिता । तत एव स्वविषयपरिच्छे-

भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥ २० ॥
( ततः प्रविशति यथानिर्दिष्टरूपो माधवः । )

**माधवः—**

तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य
चेतः कथं कथमपि व्यपवर्तते मे । returns to myself

---

दरूपफलशून्यत्वेन शून्या च। शून्या यथा—'तारासमपुटा स्निग्धा निष्कम्पा शून्यदर्शना । बाह्यार्थग्राहिणी श्यामा शून्यदृष्टिस्तु चिन्तनात् ॥' इति । अनेन चिन्ताख्यो व्यभिचारी व्यज्यते । 'प्रयत्नपूर्विकार्थेषु स्मृतिश्चिन्तेति कथ्यते' इति । तथा शरीरमसौष्ठवं बलहीनं स्वव्यापारासमर्थकरचरणादिकमित्यर्थः । अनेन ग्लान्याख्यो व्यभिचारी व्यज्यते । यथा—'वाङ्मनःकायकर्माणि ग्लानिर्गमयतीति यत्' इति । श्वसितमधिकं पूर्वापेक्षया प्रबलम् । अनेन श्रमविषादमोहादयो व्यज्यन्ते निःश्वासस्यानुभावस्यानेकभावसाधारणत्वात् । एवं चानुस्मृतिरूपा तृतीयावस्था दर्शिता । यथा—'मुहुर्मुहुर्निःश्वसिति मनोरथविचिन्तनैः । प्रद्वेषादन्यकार्याणामनुस्मृतिरुदाहृता ॥' इति । किं न्वेतत्स्यात् । एषां चिन्तालस्यादीनां निमित्तं किं नु भवेदिति मकरन्दस्य वितर्कः । विमृश्य तन्निमित्तं निर्धारयति—**किमन्यदिति** । अथवा किमत्र वितर्केण मदनविकारव्यतिरिक्तं किमेतेषां निमित्तं संभाव्यते । न किंचिदपीत्यर्थः । तदेव निमित्तमाह—**भ्रमतीति** । भुवने कंदर्पाज्ञा भ्रमति । अप्रतिहता विजृम्भते । यौवनं च प्रथमं द्वितीयं वा । इतरयोरत्रायोग्यत्वात् । विकारि विकारजननशीलम् । यौवनं यथा—'रतिव्यायामसहनो मत्तेभस्येव मत्तता । विद्यते युवभावो यस्तद्यौवनमुदाहृतम् ॥' इति । 'यौवनं तु चतुर्धा स्यात्' इत्यादिना भावप्रकाशे यौवनविशेषलक्षणं प्रपञ्चितं तत एव ज्ञातव्यम् । ललिताः सुन्दरा नयनसुखकरा मधुरा मनोहराश्च ते ते भावा इन्दूद्यानादय उद्दीपनविभावाः स्वभावधीरस्यापि धीरतां धैर्यं क्षिपन्त्यपसारयन्ति । धैर्यं यथा—'चापलेनानुपहता सर्वार्थेष्वविकत्थना । स्वाभाविकी चित्तवृत्तिर्धैर्यमित्यभिधीयते ॥' इति । नूनमद्य मदनोद्याने मदनोत्सवदर्शनायागतोऽसौ कस्यांचिदासक्तचित्तो मदनावस्थयैवाभिभूतो वर्तत इत्यर्थः । ससंदेहो निश्चयान्तः समुच्चयालंकारः ॥ २० ॥ दिष्ट्यादिना माधवप्रवेशः सूचितः । तदाह—**तत इत्यादिना** । यथानिर्दिष्टः गमनमित्यादिना निरूपितावस्थः ॥ **तामित्यादि** । मे चेतः कर्तृ । इन्दुवन्मनोज्ञमुखीं तां पूर्वक्षणे नयनातिथीकृतां सुचिरं बहुकालं विभाव्य ऐकाग्र्येण विषयान्तरपरित्यागेन भावनाविषयं कृत्वा। ध्यात्वेत्यर्थः। कथंकथमपि केनकेनापि प्रकारेण कदाचिदप्यननुभूतचरेण । ईदृगसाविति निरूपयितुमशक्येनावस्थाभेदेनेत्यर्थः । व्यपवर्तते वैकृतादन्यथैव वर्तते । विकारमुपयातीत्यर्थः । किं कृत्वेत्यपेक्षायां तामेवापथवृत्तिमाह—अकाण्डेऽनवसरे । प्रथमदर्शनसमय

Self-respect.

लज्जां विजित्य विनयं विनिवार्य धैर्य-
मुन्मथ्य मन्थरविवेकमकाण्ड एव ॥ २१ ॥

आश्चर्यम् ।

यद्विस्मयस्तिमितमस्तमितान्यभाव-
मानन्दमन्दममृतप्लवनादिवासीत् ।
तत्संनिधौ तदधुना हृदयं मदीय-
मङ्गारचुम्बितमिव व्यथमानमास्ते ॥ २२ ॥

**मकरन्दः**—( उपसृत्य । ) सखे माधव, इत इतः । ललाटंतपस्तपति घर्मांशुः । तदस्मिन्नुद्याने मुहूर्तमुपविशावः । ( उभौ परिक्रामतः । )

**कलहंसः**—[1]कहं मअरन्दसहअरो इमं एव्व बालुज्जाणं अलंकरेदि माहवो । ता दंसिमि मअणवेअणाक्खिज्जमाणमालदी-

---

१. कथं मकरन्दसहचर इदमेव बालोद्यानमलंकरोति माधवः । तद्दर्शयामि मदनवेदनाखिद्यमानमालतीलोचनसुखावहमात्मनोऽस्य प्रतिच्छन्दकम् । अथवा विश्रामसौख्यं तावदनुभवतु ।

---

एव । लज्जाम् । कथमार्यविगर्हिते परोपहासनीये कर्मणि प्रवृत्तोऽहमिति मनःसंकोचनं लज्जा । यथा—'मनःसंकोचनं लज्जा ह्यनौचित्यप्रवर्तनात्' इति । तां विजित्य निरस्य विनयं विनीततां विनिवार्य । धैर्यं धीरतामुन्मथ्य मथित्वा मन्थरो मन्दीभूतो विवेकः कृत्याकृत्यज्ञानं यथा स्यात्तथेति ॥ अत्र लज्जात्यागो विवेकमान्द्येन उन्मादश्चेति सप्तमाष्टमावस्थाद्वयमादावेव रागोत्कर्षप्रदर्शनार्थमुक्तमिति द्रष्टव्यम् । मन्थरविवेकमिति चेतोविशेषणं वा ॥ २१ ॥ **आश्चर्यम् ।** **यद्विस्मयेति** । यन्मदीयं मनस्तस्याः संनिधौ विस्मयेनामानुषलोकोचितापूर्वलावण्यदर्शनजनितेन चित्तविकासेनाद्भुतरसस्थायिना रसतामापन्नेन स्तिमितं निष्पन्दमस्तमितान्यभावं विगलितवेद्यान्तरममृतप्लवनादिव सुधार्णवनिमज्जनेनेवानन्देन निरतिशयसुखाविर्भावेन मन्दं तदास्वादैकपरतया निरुद्धवृत्त्यन्तरमभूत् । तदेवेदानीं तदसंनिधावङ्गारचुम्बितं प्रदीप्तेन्धनशकलसंस्पृष्टमिव । दग्धमिति वक्तव्ये मनोगतप्रेयसीदाहभिया चुम्बितमिति कोमलोक्तिः । व्यथमानं संतप्यमानमास्ते । तत्संनिधानासंनिधानयोः क्षणमात्रभेदेनातीवमनोवस्थावैलक्षण्यमिदमाश्चर्यमित्यर्थः ॥ २२ ॥ मकरन्दोऽन्यमनस्कतयात्मानमपश्यन्तमपि स्वयमेव प्रज्ञापयन्नाकारयति—**मकरन्दः । सखे माधवेति** । इत इतः । आगम्यतामिति शेषः । **ललाटेत्यादि** । ललाटंतपो नभोमध्यवर्तीत्यर्थः । । 'असूर्यललाटयोर्दृशितपोः' इति खच् । 'खित्यनव्ययस्य' इति मुमागमः ॥ **कलहंसः**—कथं मकरन्दसहचर इदमेव बालोद्यानमलंकरोति माधवः । तद्दर्शयाम्यस्य मदनवेदनाखिद्यमानमा-

लोअणसुहावहं अत्तणो से पडिच्छन्दअं । अहवा विस्सामसोक्खं दाव अणुहोदु ।

**मकरन्दः**—तदस्यैव तावदुच्छ्वसितकुसुमकेसरकषायशीतलामोदवासितोद्यानस्य काञ्चनपादपस्याधस्तावदुपविशावः ।

( उभौ तथा कुरुतः । )

**मकरन्दः**—वयस्य माधव, सकलनगराङ्गनाप्रवर्तितमहोत्सवाभिरामकामदेवोद्यानयात्राप्रतिनिवृत्तमन्यादृशमिव भवन्तमवधारयामि । अपि त्वमवतीर्णोऽसि रतिरमणबाणगोचरताम् ।

( माधवः सलज्जमधोमुखस्तिष्ठति । )

**मकरन्दः**—( विहस्य । ) किमवनम्रमुग्धमुखपुण्डरीकः स्थितोऽसि । पश्य ।

अन्येषु जन्तुषु च यस्तमसावृतेषु
विश्वस्य धातरि समः परमेश्वरेऽपि ।
सोऽयं प्रसिद्धविभवः खलु चित्तजन्मा
मा लज्जया तव कथंचिदपह्नुतिर्भूत् ॥ २३ ॥

---

लतीलोचनसुखावहम् । चित्रस्य दर्शनमात्रफलकत्वात् । आत्मनः प्रतिच्छन्दकम् । अथवा विश्रामसौख्यं तावदनुभवतु । पश्चाद्दर्शयिष्यामीति शेषः ॥ **मकरन्दः—तदिति** । विकसितकुसुमकिञ्जल्कानां कषायशीतलो य आमोदो दूरविसृमरो गन्धः । कषायत्वशिशिरत्वयो रसधर्मत्वेऽपि तादृशरसेनैकार्थसमवायादामोदधर्मत्वोपचारः । तेन सुरभीकृतोद्यानस्य काञ्चनपादपस्य चाम्पेयतरोश्छायायामुपविशावः ॥ **सकलेत्यादि** । अन्यादृशं विलक्षणावस्थम् । अपिः प्रश्ने ॥ **विहस्येति** । स्वमनोगतज्ञानादवनतानने माधवे सत्यं मदनविकार एव मदुन्नीतो हेतुरेतद्वैलक्षण्यस्येति स्वमतिसंवादाद्विहस्य स्वानुकूल्यप्रदर्शनेन लज्जां शिथिलयितुमाहेति शेषः । **किमिति** । मुग्धं सुन्दरम् । त्वदन्तःकरणनिर्विशेषे मयि किमाशङ्कया लज्जया वा । तावद्विस्रब्धं कथयेत्यर्थः । किं च न खलु त्वदुपज्ञ एवायं सर्वाभिषङ्गः सुरासुरनरसाधारणत्वात् । तेनानन्यकृतपूर्वात्यन्तानुचितवन्नैतदपह्नवो न्याय्य इत्याह—**अन्येष्विति** । यो विश्वस्य धातरि जगत्स्रष्टरि सुरज्येष्ठे स्वदुहितृकामुके परमेश्वरे स्मरशासनेऽपि वामदेहार्धनिवेशितप्रेयसीके तमसावृतेष्वज्ञानोपहतविवेकेष्वन्येषु जन्तुषु । प्राणिमात्र इत्यर्थः । समोऽवैषम्येणाकुण्ठितव्यापारः । स तादृशोऽयं त्वन्मनोगतश्चित्तजन्मा प्रसिद्धविभवः प्रथितप्रभावः खलु ब्रह्मादीनपि स्ववशीकरोति । का कथान्येष्विति भावः । ततो लज्जया तव मनोगतस्य विकारहेतोरपह्नुतिरपह्नवः । चित्ते नियमनमिति यावत् । मा भूत् ।

**माधवः**—वयस्य, किं न कथयामि । श्रूयताम् । गतोऽहमवलोकिताजनितकौतुकः कामदेवायतनम् । इतस्ततः परिक्रम्य परिश्रमादुल्लसितमधुरमदिरामोदपरिमलाकृष्टसकलमिलदलिपटलसंकुलाकुलितमुकुलावलीमनोहराभरणस्य रमणीयाङ्गणभुवो बालबकुलस्यालवालपरिसरे स्थितः । तस्य च यदृच्छया निरन्तरनिपतितानि विकसितानि कुसुमान्यादाय विदग्धरचनामनोहरां स्रजमभिनिर्मातुमारब्धवान् । अनन्तरं च देवस्य संचारिणी मकरकेतनस्य जगद्विजयवैजयन्तिका निर्गत्य गर्भभवनादुज्ज्वलविदग्धमुग्धबालनेपथ्यविरचनाविभावितकुमारीभावा महानुभावप्रकृतिरत्युदारपरिजना कापि तत एवागतवती ।

---

लज्जां विसृज्य कथयेत्यर्थः ॥ २३ ॥ **माधवः**—वयस्य, किं न कथयामि । सर्वविस्रम्भास्पदस्य तवाप्यपह्नवः किमित्याशयः । यदाहुः—'समानुरागव्यसनो रहस्याख्यैकभाजनम् । विपत्प्रतिक्रियादक्षो वयस्यः परिकीर्तितः ॥' इति । अवलोकितया जनितं कौतुकं 'अद्य खलु महानुत्सवो मदनोद्याने नागरिकाणाम्, त्वयापि तद्दर्शनार्थं गन्तव्यम्' इत्येवमुत्पादितो गमनोत्साहो यस्य सोऽहं कामदेवायतनमुत्सवस्थानं गतोऽभूवम् । तत्र चेतस्ततः परिक्रम्य रम्यवस्तुविलोकनलोभात्परिश्रमात्परिक्रमणसंजातादुल्लसितो विसर्पन्यो मधुरो मनोहरो मदिरामोदसमानो यः परिमलः । केसरकुसुमस्येव जातिप्रयुक्तः । तेनाकृष्टं यत्सकलानां मिलतामलीनां पटलं तेन संकुला व्याप्ताकुलिता च या मुकुलश्रेणिः सैव मनोहरमाभरणं यस्य सः । तथा च रमणीयेऽङ्गणे कामदेवायतनपुरोभागे भवति तथा । तेन सम्यगुत्सवावलोकनयोग्यदेशत्वमुक्तम् । बालबकुलस्य । बालत्वादुपविश्य करापचयकुसुमस्येत्यर्थः । आलवालपरिसरे प्रतिदिनजलसेकशीतले स्थितः । निरन्तरनिपतितानि सान्द्रनिपतितानि । उपवेशनस्थल एव यावदपेक्षं लभ्यानि विकसितानि तस्य कुसुमानि यदृच्छया स्वेच्छयादाय विदग्धा मनोज्ञा या रचना ग्रथना तया मनोहरां स्रजमभिनिर्मातुमारब्धवान् । **अनन्तरमिति** । संचारिणी संचरणशीला जगद्विजयवैजयन्तिका त्रिभुवनविजयलाञ्छनभूता पुरःसरी पताका । तामेवानु मन्मथो जगज्जिगीषया निर्गतः । तस्य चाहमादिशरव्यतामुपगतोऽस्मीत्याशयः । उज्ज्वलं प्रकाशमानं विदग्धमग्राम्यं मुग्धं सुन्दरं बालोचितनेपथ्यं प्रसाधनं तस्य या विरचना तया विभावितः कुमारीभावः कन्यात्वं यस्याः । प्रथमयौवने वर्तमानत्वात् । वयसा पुनर्न ज्ञायते कुमारीयमित्याशयः । महानुभावप्रकृतिरतिगम्भीरस्वभावा । अत्युदारोऽतिदक्षिणः । 'उदारो दातृमहतोर्दक्षिणे चाभिधीयते' इति दर्शनात् । परिजनो यस्याः सा । तत एव यत्राहं स्थितस्तत्रैवेति सप्तम्यर्थे तसिः । सार्वविभक्तिकत्वात् । अथ तत्प्रथमतो

सा रामणीयकनिधेरधिदेवता वा
सौन्दर्यसारसमुदायनिकेतनं वा ।
तस्याः सखे नियतमिन्दुकलामृणाल-
ज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥ २४ ॥

अथ प्रणयिनीभिरनुचरीभिः कुसुमसंचयावचयलीलाभिलाषवतीभिरभ्यर्थमाना तमेव बकुलपादपोद्देशमागतवती । तस्याश्च कस्मिंश्चिदपि महाभागधेयजन्मनि बहुदिवसोपचीयमानमिव मन्मथव्यथाविकारमुपलक्षितवानस्मि । यतः ।

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।

---

लोचनपथगोचरं तस्याः स्वरूपमिदानीमपि प्रत्यक्षमिव विभाव्यमानं निर्वर्णयति—**सेति** । रमणीयस्य भावो रामणीयकम् । 'योपधाद्गुरूपोत्तमात्' इति वुञ् । आभिरूप्यमिति यावत् । तस्य निधिर्निक्षेपः शङ्खपद्मादिवत् । तस्याधिष्ठातृदेवता वा । सौन्दर्यस्य सर्वावयवसौष्ठवस्य निकेतनं मन्दिरं वा । सखे, तस्या निर्माणे कारणमुपादानमिन्द्वादि । न तु भौतिकम् । मदनश्च वेधाः । न तु साधारणो वेदाभ्यासजडः । यदाह—'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः' इत्यादि । अनेन नायिकागुणवर्णनेन तद्विषयो महानुरागोऽपि श्रेयानिति बीजगुणप्रशंसनाद्विलोभनं नाम मुखसंधेरङ्गमुक्तम् । यथा—'तद्गुणाख्या विलोभनम्' इति । गुणस्वरूपनिरूपणाद्गुणस्तुतिरूपा चतुर्थ्यवस्था माधवस्य प्रदर्शिता । यथा—'रूपौदार्यगुणैर्लीलाचेष्टाहसितवीक्षितैः । दर्शनालापमाधुर्यैर्नास्त्यतस्तत्समा वधूः ॥' इति । 'यत्रेदृशी शिवा वाणी भवेत्सैव गुणस्तुतिः' इति । वितर्कश्च व्यभिचारी व्यज्यते । यथा—'ऊहो वितर्क इत्युक्तः परार्थेषु यथामति' इति । संशयापह्नवयोः संसृष्टिः ॥ २४ ॥

**अथेति** । प्रणयिनीभिः प्रेमविषयाभिरनुचरीभिः परिसरवर्तिनीभिः । कुसुमसंचयस्यावचय एव लीला तस्यामभिलाषवतीभिरभ्यर्थमाना स्वयमेव गन्तुकामापि शालीनतया कुण्ठितेच्छा सती तदपनोदनाय मनोविनोदिनीभिः प्रार्थ्यमाना तमेव यत्राहं स्थितः । तस्याश्च कस्मिंश्चिदपि लोकोत्तरे । महाभागधेयादश्वमेधाद्यपि तत्कर्मकलापं यदुत्पादने वराकप्रायं तादृशसुचरितविशेषाज्जन्म यस्य तस्मिन् । अन्यादृशस्य तदभिलाषपात्रतालक्षणत्रिभुवनसाम्राज्यसिंहासनाधिरोहणसौभाग्यानर्हत्वात् । बहुदिवसोपचीयमानमतिचिरकालात्प्रवर्धमानं मन्मथाज्जाता या व्यथा तज्जन्यं विकारमुपलक्षितवानस्मि । उन्नयने लिङ्गान्याह—यतः ।

**परिमृदितेति** । परिमृदितापचयेन म्लायमाना मृणाली बिसतन्तुरिव । 'जातेरस्त्रीविषयादयोपधात्' इति ङीप् । म्लानं ग्लानिमुपगतम् । कार्श्यं नाम मदनदशा सूचिता । क्रियासु स्नानपानादिकासु परिवारप्रार्थनाभिः परिजनस्य चाटुवाक्य

कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोलः ॥ २५ ॥

सा मम दर्शनात्प्रभृत्यमृतवर्तिरिव चक्षुषोर्निरतिशयमानन्दमुत्पादयन्त्ययस्कान्तमणिशलाकेव लोहधातुमन्तःकरणमुपसंहृतवती । किं बहुना ।

संतापसंततिमहाव्यसनाय तस्या-
मासक्तमेतदनपेक्षितहेतु चेतः ।
प्रायः शुभं च विदधात्यशुभं च जन्तोः
सर्वंकषा भगवती भवितव्यतैव ॥ २६ ॥

---

पादप्रणामादिभिरनुनयैः कथमपि कृच्छ्रेण प्रवृत्तिः । न तु स्वारस्येन । क्रियाद्वेषरूपारतिर्नाम मन्मथावस्था दर्शिता । व्याधिवशादप्येतत्संभवतीत्यन्यदसाधारणं लिङ्गमाह—कलयतीति । अभिनवेति । सद्यःकृतद्विरदरदनच्छेदकमनीयः कपोलश्च निष्कलङ्कस्य हिमांशोर्लक्ष्मीं शोभां कलयति च । पाण्डिम्नो निमित्तान्तरात्संभवेऽपि निष्कलङ्केन्दुबिम्बसादृश्यमन्यत्र न संभवतीति विप्रलम्भैकानुभावत्वम् । अत्र यद्यपि शरीरग्लान्यादयोऽनुभावाः केवलमुपनिबद्धास्तथाप्येतदनुभावनियता निर्वेदग्लानिजडताविषादौत्सुक्यचिन्तामोहावेगप्रभृतयो व्यभिचारिणो महाभागधेयस्य जन्मनीति निर्दिष्टालम्बनविभावो मदनोद्यानादयश्चोद्दीपनविभावाः प्रतीयन्त इति विभावानुभावव्यभिचारिपोषितरत्याख्यस्थायीभावपरिपूर्णोऽभिलाषविप्रलम्भशृङ्गाररसो ध्वन्यते ॥ २५ ॥ **सा ममेत्यादि** । अमृतमयतूलिकेव दर्शनेनैव चक्षुषोर्निरतिशयं निराकृतोऽतिशयः प्रकर्षोऽन्येषामानन्दानां येन तमानन्दमुत्पादयन्ती । मम पुनरन्तःकरणमयस्कान्तमणिशलाका लोहकर्षकमणिशलाका स्वसंनिधानमात्रेण लोहधातुमयो विकारमिवोपसंहृतवती स्वसमीपं प्रत्याकृष्टवती । **किं बहुनेति** । तदानीमुत्पन्नेन, आनन्त्यादनुभवैकप्रमाणत्वाच्च विशेषतो वक्तुमशक्येन, कथंचिन्निरूप्यमाणेन, मनोविकारविशेषेण किं प्रयोजनम् । इदं तावन्निष्पन्नमित्याह—**संतापेति** । एतन्मदीयं चेतोऽनपेक्षितो न विमृष्टो हेतुरासक्तौ निमित्तं बाह्योपाधिरूपं येन तादृशं सदासक्तम् । न चेदं शुभोदर्कम् । येनेदानीं कथंचिद्विषह्येत । किंत्वनर्थैकपर्यवसायीत्याह—संतापसंततिः संतन्यमानः संज्वर एव महदुत्कृष्टं व्यसनं मरणकारणं दुःखं तदर्थमेव । तत्प्राप्तिरूपस्य तापनिर्वापणौषधस्यातिदुर्लभत्वात् । इतःपरं मरणमेव शरणमिति भावः । तर्ह्येवं जानता त्वया किमिति मनो न निवार्यत इत्याशङ्क्य पुरातनकर्मवासनावशंवदानामस्माकं न कुत्रापि स्वातन्त्र्यमित्याह—**प्राय इति** । भगवती माहात्म्यवती । ईश्वरस्यापि तत्सापेक्षत्वात् । उक्तं हि—'जीवादृष्टसापेक्षो हि भगवाञ्जगन्ति निर्मिमीते' इति । सर्वंकषा सर्वकार्यनिमित्ततया सर्वार्थव्यापिनी । न हि तया विना किंचिन्निः-

**मकरन्दः**—स्नेहश्च निमित्तसव्यपेक्षश्चेति विप्रतिषिद्धमेतत्।
पश्य।

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः॥ २७॥

ततस्ततः।

**माधवः**—ततश्च तत्र

सभ्रूविलासमथ सोऽयमितीव नाम
सप्रत्यभिज्ञमिव मामवलोक्य तस्याः।

---

श्वासादिकमपि कार्यं भवितुं प्रभवति। तादृशी भवितव्यता प्राक्तनादृष्टपरिपक्तिरेव जन्तोः प्राणिमात्रस्य शुभमशुभं च विदधाति। यद्वदिष्टसंपादने न वयं स्वतन्त्रास्तद्वदनिष्टप्रतीकारेऽपि। कर्मवशाद्यद्यदुपनतं तत्तदवश्यमनुभोक्तव्यमित्यर्थः। अर्थान्तरन्यासोऽलंकारः॥ २६॥ **मकरन्दः—स्नेहश्चेति**। निमित्तसव्यपेक्षो बाह्योपाधिसापेक्षः। स्नेहत्वमौपाधिकत्वं चेत्येतद्धर्मद्वयमेकत्र धर्मिणि विरुद्धमित्यर्थः। यत्तु भावप्रकाशे स्नेहद्वैविध्यमुक्तम्, यथा—'मनसो यद्दयार्द्रत्वं विषयेषु च तत्त्वतः। भयशङ्कावसानात्मा स एव स्नेह उच्यते॥ द्विधा द्रवः स्यान्मनसः स्पर्शनाद्दर्शनादपि। जतुवद्वह्निसंस्पर्शाद्दर्शनाच्चन्द्रकान्तवत्॥ आर्द्रता शिशिरत्वं यत्सर्वावस्थासु मानसम्। ययोः परस्परस्यास्ते तदपि स्नेह ईरितः॥ द्विधा भवेत्स च स्नेहः कृत्रिमाकृत्रिमात्मकः। सोपाधिः कृत्रिमः स्नेहो निरुपाधिरकृत्रिमः॥ उपाधौ विनिवृत्ते तु तज्जन्योऽपि निवर्तते। स्नेहः स्वभावजो यावद्द्रव्यभावी भविष्यति' इत्यादिना, तत्सोपाधिके स्नेहे स्नेहत्वोपचारात्स्नेहशब्दप्रयोग इति मन्तव्यम्। स्वाभाविकस्नेहस्य बाह्योपाधिनैरपेक्ष्यमेवोपपादयति—**पश्येत्यादि**। दृष्टान्तमुखेनेममर्थमवधारयेत्यर्थः। **व्यतिषजतीति**। पदार्थान्भावानचेतनांश्चेतनांश्च। आन्तरो गूढः कार्यैकसमधिगम्यः कोऽपीदंतया निरूपयितुमशक्यो हेतुर्व्यतिषजति परस्परं संघटयति। पुनः प्रीतयः स्नेहा बहिरुपाधीन्बाह्यानि निमित्तानि न संश्रयन्ते। दृष्टान्तमाह—पतङ्गस्य रवेरुदये पुण्डरीकं विकसति। हिमरश्मौ चन्द्रे चोद्गत उदिते चन्द्रकान्तमणिर्द्रवति। न चात्र परिदृश्यते बाह्योपाधिः कश्चिदृते स्वभावसौहार्दात्। तद्वत्कस्यचित्कुत्रचिदवलोकनमात्रेणान्तःकरणं विकसति द्रवीभवतीति स्वाभाविकस्नेहस्य महिमायमित्यर्थः। दृष्टान्तालंकारः॥ २७॥ **ततस्तत इति**। अनन्तरवृत्तान्तं ब्रूहीति शेषः॥ **माधवः—ततश्चेति**। तदनन्तरं तत्र तस्मिन्नेवावसरे। **सभ्रूविलासेति**। तस्याश्चतुरेण विदग्धेन सखीजनेन मामवलोक्य। अथ मदवलोकनानन्तरं स्मितपु-

अन्योन्यमेव चतुरेण सखीजनेन
मुक्तास्तदा सितसुधामधुराः कटाक्षाः ॥ २८ ॥

**मकरन्दः**—(स्वगतम्।) कथं प्रत्यभिज्ञापि नाम।

**माधवः**—अथ ताः सलीलमुत्तालकरकमलतालिकातरलवलयावलीकमुत्रस्तकलहंसविभ्रमाभिरामचरणसंचरणरणरणायमानमञ्जुमञ्जीररणितानुविद्धमेखलाकलापकिङ्किणीरणरणत्कारमुखरं प्रतिनिवृत्य 'भर्तृदारिके, दिष्ट्या वर्धामहे। यदत्रैव कोऽपि कस्या अपि वल्लभस्तिष्ठति' इति मामङ्गुलीदलविलासेनाख्यातवत्यः।

धामधुरा दरहसितामृतसाहचर्यमनोहराः कटाक्षा आकूतद्योतका दृष्टिविशेषा अन्योन्यं मुक्ताः प्रहिताः। मां दृष्ट्वा स्मितपूर्वकं परस्परावलोकनं कृतवत्य इत्यर्थः। अथ मामवलोक्येत्यवलोकनक्रियां विशिनष्टि—सप्रत्यभिज्ञमिवेति। प्रत्यभिज्ञा नाम पूर्वानुभूतस्य पुरोवर्त्यैक्यावगाहिनी धीः। सा च परबुद्धित्वान्न मया प्रत्यक्षीकृता, किंतूत्प्रेक्षितेति इवशब्देन द्योतयति। कथं त्वयैतदुत्प्रेक्षितमित्याशङ्क्य बीजमाह—सोऽयमितीव नामेति। नाम प्रसिद्धौ। यो मालतीजीवितवल्लभो माधवो नाम प्रसिद्धः सखीजनकथासु स एवायमितीव तत्तेदन्तांशावच्छेदः प्रत्यभिज्ञोत्प्रेक्षाबीजम्। तस्यापि तदिदंशब्दाभिलापरूपस्य तदानीमभावात्। ज्ञानाकारस्य अप्रत्यक्षत्वात् सोऽप्युत्प्रेक्षित एवेतीवशब्देन सूचयति। तदपि कथमुन्नीतमित्याशङ्क्य स्फुटं तल्लिङ्गमाह—सभ्रूविलासमिति। भ्रुवोर्विलासो विक्षेपः। योऽस्माभिर्भर्तृदारिकाचित्तचोरो माधवो नाम गोष्ठीषु प्रसज्यते स एवायमित्येवंरूपार्थद्योतिका चेष्टा भ्रूलतोन्नमनचातुरी तत्सहितं यथा भवति तथा पूर्वानुभूतत्वपुरोवर्तित्वलक्षणतत्तेदन्ताभिव्यञ्जिका भ्रूचेष्टा पदार्थाभिनयरूपत्वाच्चेष्टायाः। तेन तया तत्तेदन्तावच्छेदनेनासाधारणधर्मेण मद्विषया तासां प्रत्यभिज्ञाभ्यूहितेत्यर्थः। भाविकमलंकारः ॥२८॥ **मकरन्दः—स्वगतम्। कथमिति।** नामेति संभावनायाम्। अननुभूतपूर्वे कथं तासां प्रत्यभिज्ञासंभव इति वितर्कः। इदं चात्मगतं वेदितव्यम्। अन्यथा माधवेनोत्तरस्य वक्तव्यतापत्तेः। **माधवः—अथेति।** अनन्तरं तस्याः पुरत एव मत्समीपमागतास्ताः परिचारिका मां दृष्ट्वा प्रतिनिवृत्त्य पश्चादागच्छन्त्यै तस्यै। अङ्गुल्य एव दलानि। अङ्गुलीनां दलत्वरूपणं करस्य कमलत्वं द्योतयति। तेषां विलासोऽग्राम्यललितक्रिया तेन मां कथितवत्यः। कथं प्रतिनिवृत्त्येत्यपेक्षायां त्रीणि क्रियाविशेषणानि। तत्र सलीलं लीलया सहितं यथा भवति तथा। लीला नामापाङ्गव्यापारेणाभीष्टार्थानुकरणम्। यथा—'मनोमधुरवागङ्गचेष्टितैः प्रीतिचोदितैः। प्रियानुकरणं लीला सा स्यात्स्त्रीपुंसयोरपि ॥' उत्ताला उन्नताः करकमलयोस्तालिका ऊर्ध्वप्रसारिताङ्गुलीककरतलद्वयपरस्परास्फालनं तेन तरला वलयावली कङ्कणश्रेणिर्यथा स्यात्तथा। उत्त्रस्ता उद्विग्ना मत्ताश्च ये कलहंसास्तेषां विभ्रमो विशिष्टभ्रमणं मनोज्ञा गतिस्तद्वदभिरामं चरणसंचरणं

**मकरन्दः**—हन्त, महतः प्रथमानुरागस्योद्भेदः ।

**कलहंसः**—एदाणं सरसरमणिज्जाणुवन्धिणी क्खु इत्थिआकहा ।

**मकरन्दः**—ततस्ततः ।

**माधवः**—

अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः ।
तद्भूरिसात्त्विकविकारमपास्तधैर्य-
माचार्यकं विजयि मान्मथमाविरासीत् ॥ २९ ॥

---

१. अनयोः सरसरमणीयानुबन्धिनी खलु स्त्रीकथा ।

---

तेन रणरणायमानं मनोज्ञं यन्मञ्जीरं नूपुरं तस्य रणितेन शिञ्जितेनानुविद्धः संभिन्नो यः काञ्चीदामनिविष्टक्षुद्रघण्टिकारणरणत्कारस्तेन मुखरं यथा स्यात्तथेति । किमित्याख्यातवत्य इत्यपेक्षायां भर्तृदारिके दिष्ट्या भाग्येन वर्धामहे । यस्मादत्रैव प्रदेशे 'या लतान्विष्यते सैव लग्ना संप्रति पादयोः' इति रीत्या पुरत एव कोऽप्ययम् । असाविति साक्षान्निर्देष्टुमनुचितत्वात्तत्प्रच्छादनाय सामान्योक्तिः । कस्या अपीत्यत्रापि तवेत्यनौचित्याद्गूढोक्तिः । वल्लभो दयितस्तिष्ठतीति । केचित्तु स्त्रीलिङ्गमप्ययुक्तं मन्यमानाः 'कस्यापि' इति पठित्वा जनस्येति व्याचक्षते ॥ **मकरन्दः** । हन्तेति हर्षे । महतोऽतिप्ररूढस्य पूर्वानुरागस्योद्भेदः प्रकाशः । प्रतिभातीति शेषः । उद्भेदो नाम मुखसंध्यङ्गम् । यथा—'उद्भेदो गूढभेदनम्' इति ॥ **कलहंसः** । अनयोः सरसरमणीयानुबन्धिन्यविच्छिन्ना स्त्रीकथा । वर्तत इति शेषः ॥ **मकरन्दः—ततस्तत इति ॥ माधवः-अत्रान्तर इति ।** अस्मिन्नवसर आयताक्ष्यास्तस्या मान्मथमाचार्यकम् । मन्मथ एव हि कुमारीजनस्यात्यन्तापरिचितत्वादात्मिको दीयमानविविधविलासशिक्षायामाचार्यः । तस्याचार्यकमाचार्यभावः । 'योपधाद्गुरूपोत्तमाद्वुञ्' । विविधशृङ्गारचेष्टाशिक्षाप्रावीण्यमाविरासीत्प्रादुरभूत् । कीदृशम् । वाग्विभवातिवृत्तवैचित्र्यमुक्तिप्रकारसर्वस्वोल्लङ्घिविचित्रभावम् । अत एव किमपि विशेषतो निर्देष्टुमशक्यम् । उल्लसितो विभ्रमो यत्र । विभ्रमः शृङ्गारचेष्टाविशेषः । यथा—'वागङ्गसत्त्वाभिनयभूषास्थानविपर्ययः । त्वरया कल्पितोऽभीष्टदर्शने यः स विभ्रमः ॥' इति । तन्मनसैव केवलमनुसंधीयमानं भूरिसात्त्विकविकारं प्रचुरतरस्तम्भादिसात्त्विकभावम् । सात्त्विकभावादिर्यदुक्तम्—'तद्भावभावनं येन भवेत्तदनुकूलतः । तत्सत्त्वं तेन निर्वृत्ताः सात्त्विका इत्युदीरिताः ॥' यथा—'स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभेदश्च वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥' इति । अपास्तधैर्यमन्योन्यदर्शनादुभयोरप्यपाकृतचित्तस्थैर्यम् । विजयि जयशीलम् । कुत्राप्यकुण्ठितप्रसरमिति । अत्र परिपूर्णशृङ्गारानुभवनिबन्धना-

ततश्च ।

स्तिमितविकसितानामुल्लसद्भ्रूलतानां
मसृणमुकुलितानां प्रान्तविस्तारभाजाम् ।
प्रतिनयननिपाते किंचिदाकुञ्चितानां
विविधमहमभूवं पात्रमालोकितानाम् ॥ ३० ॥

त्तदुचितमोहावेगादिव्यभिचारिप्रतीतेरालम्बनोद्दीपनविभावसंनिधानपूर्णः शृङ्गाररसध्वनिः । परिकरश्चालंकारः ॥ २९ ॥ अतश्च चिरकालप्रवृत्तस्य गरीयसः पूर्वानुरागस्य शब्दविकल्पस्मरणसंतानोपचितस्य जीवितसर्वस्वायमानस्य तस्यैव सालम्बनविभावस्य सांमुख्यादन्योन्यकटाक्षमिश्रीभावादुत्पूरस्य सुधाकरकरस्पर्शादिव क्षीरसागरस्यापूरितान्तरतया परिपूर्णकुम्भोचलनन्यायेन मुहुर्बहिरुचलतो निरतिशयपरिपोषात्मिकां रसतामापन्नस्य तरङ्गच्छटा इव प्रथमानुभावभूताः शृङ्गारदृष्टयो मदालम्बनाः प्रादुरासन्नित्याह—**ततश्च । स्तिमितेति** । अहमालोकितानां शृङ्गारदृष्टिविशेषाणां विविधं पात्रमभूवम् । 'प्रसादललिता कान्ता शालिनी मन्मथाशया । विचलद्भ्रूकटाक्षा च शृङ्गारे दृष्टिरिष्यते ॥' इति । तद्विशेषं दर्शयितुं विशिनष्टि—स्तिमितानामुन्मीलनानन्तरमेव पुरोवर्तिनि मयि निपत्य दर्शनलोभेन तत्रैव विषये निश्चलानाम् । स्तिमितं नाम शृङ्गारदृष्टिविकारः । यथा—'स्वगोचरान्न चाल्येत यत्तत्स्तिमितमुच्यते' इति । ततो विकसितानां विषयगताशेषविशेषग्राहिणाम् । विकसितदृष्टिविकारो यथा—'विकासितं यद्विषये विशेषमवगाहते' इति । अतो विषयास्वादजन्मानन्दभावनयोल्लसन्ती किंचिदुच्छ्वसन्ती चतुराख्यभ्रूकर्मसहिता भ्रूलता येषाम् । चतुरं नाम भ्रूकर्म । यथा—'चतुरं किंचिदुच्छ्वासान्मधुरा रचना भ्रुवोः' इति । प्रसन्नाख्यश्चानेन दृग्विकार उक्तः । यथा—'प्रसन्नं तद्भवेत्सभ्रूविलासं सस्मितं च यत्' इति । अतो मसृणानामनुरागपेशलानाम् । मसृणदृग्विकारो यथा—'मसृणं तत्तु विज्ञेयमनुरागकषायितम्' इति । ततः सुखपारवश्यान्मुकुलितानामनुन्मीलितानाम् । मुकुलिता दृष्टिरनेनोक्ता । मुकुलिताख्यश्च दृग्विकारो यथा—'स्फुरिताश्लिष्टपक्ष्माग्रा मुकुलोर्ध्वपुटोच्छ्रिता । सुखोन्मीलिततारा च मुकुला दृष्टिरिष्यते ॥ दृष्टिर्मुकुलिता स्वप्नसुखनिद्रासु वर्तते ॥' इति । अनेन विकूणिताख्यदृग्विकार उक्तः ॥ विकूणितं यथा—'भागत्रयस्य संकोचो विकासस्त्वपरस्य च । यस्या दृष्टेर्विलक्षेण तद्विकूणितमुच्यते ॥' इति । ततः पुनर्दर्शनस्पृहया प्रान्तेऽपाङ्गदेशे विस्तारभाजां विस्त्वराणाम् । सम्यगाश्लिष्टविषयाणामिति यावत् । अपाङ्गदृष्टिर्हि तत्रैव निपतन्ती सम्यग्विषयं परिच्छिनत्ति । अनेन विस्तारी सस्पृहश्चेति दृग्विकारद्वयमुक्तम् । यथा—'येनाश्लिष्टो हि विषयस्तद्विस्तारीति कथ्यते । भूयोभूयः स्पृहा यत्र दृष्टेस्तत्सस्पृहं भवेत् ॥' इति । ततः प्रतिनयनस्य तदवलोकनाय प्रहितस्य मन्नेत्रस्य निपात आभिमुख्येन युगपदुपस्थाने लज्जया किंचिदाकुञ्चितानामीषत्संकुचितानाम् । संकुचितं नाम दृग्विकारो यथा—'अपाङ्गभागसंकोचो यत्र तत्कुञ्चितं भवेत्' इति । बहुवचनेन धारावाहिन्यायेन

ततश्च ।

अलसवलितमुग्धस्निग्धनिष्पन्दमन्दै-
रधिकविकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै-
रपहृतमपविद्धं पीतमुन्मूलितं च ॥ ३१ ॥

---

प्रवृत्तिप्रतीतेर्लोलाख्यो दृष्टिविकार उक्तः। यथा—'धारावाहिकसंचारो यस्य तल्लोलमुच्यते' इति । विविधपदेनान्यानपि मधुरसाभिलाषसोत्कण्ठितसोत्सुकसमन्मथप्रणयिप्रेमगर्भविकोचललितकोमलमुखाञ्शृङ्गारदृष्टिविकारविशेषान्संगृह्णाति । तल्लक्षणानि विस्तरभयान्न लिखितानि । परिकर एवालंकारः ॥ ३० ॥ इदानीं तादृगवलोकनपात्रमभूवम् । तस्मात्पुनस्तादात्मिकीमवस्थामाह—**ततश्च । अलसेति ।** पक्ष्मले अतिसान्द्रपक्ष्ममाले अक्षिणी यस्यास्तस्या कटाक्षैः 'अपाङ्गे तारविक्षेपः कटाक्ष इति कथ्यते' इत्युक्तलक्षणैर्दृष्टिविशेषैः पूर्वोक्तैर्मे हृदयमशरणं सत्तदा मम पारवश्येनाकिंचित्करत्वादन्येन च रक्षणस्याशक्यत्वात्तदभावाच रक्षितारमलभमानं सत् । अपहृतं बलादाच्छिद्य गृहीतम्। कटाक्षाणां मनोहरत्वात्तदा मनःशून्य इवाभवम् । प्रमुषितमतित्वात्ततस्तैरपहृत्य तदपविद्धमतितीक्ष्णत्वात्तेषां नाराचैरिव विक्षतम्। निशितशलाकाप्रकृतरन्ध्रमिव व्यथामन्वभूदित्यर्थः। ततश्च संतप्तमदननाराचकल्पत्वात्तेषां तदपवेधेन द्रवीभूय तत्रैव धाराजलन्यायेन विलीनत्वात्तैः पीतमिव । यथा पीतं सलिलादिकं पातुरन्तर्विलीयते, एवं कटाक्षेषु मन्मनो विलीनमित्यर्थः। ततश्च तैर्मदीयहृदयालवाले लीनस्यापि मनसः पुनरङ्कुरोदयशङ्कया तदुन्मूलितमुत्खातमूलं कृतम्। अपुनरुद्भवयोग्यं कृतमित्यर्थः। मनःपारवश्यातिशयोक्तिः। कविना प्रौढ्युत्कर्षादेवं निरूपितम्। केचित्तु—विदग्धो यथा कश्चिन्नालिकेरतरोस्तत्फलमपहृत्यायःशूलेनापविध्य सरन्ध्रं कृत्वा तदन्तःसलिलं निपीय तदन्तःसारमुन्मूल्य भक्षयति, एवं कटाक्षा अपि माधवादेव तरोर्मनःफलमपहृत्य गाम्भीर्यधैर्यादिना दृढत्वात्प्रथममपविध्य सक्षतं कृत्वा तदन्तर्गतं लज्जाविनयविवेकादिकं क्षतविवरनिर्गतं निपीय तावताप्यतृप्तत्वाच्चैतन्यलक्षणं मूलमुन्मूल्याग्रसन्नित्येवं नालिकेरफलसमाधिरुक्तेति व्याचक्षते । कीदृशैः कटाक्षैरित्यत आह—अलसेति । अलसाः प्रथमपातिताः । पुरतः प्रसारिताः पुरोवर्तिनि मय्येव निपातिताः । पश्चाद्विभाव्य व्रीडयेव प्रतिनिवृत्ताः । अलसादयः शृङ्गारदृष्टिविकाराः । तत्रालसं यथा—'अलसं तदभीष्टार्थाद्व्रीडाद्यैर्यन्निवर्तते' इति । ततो वलिताः पुनर्दर्शनोत्कण्ठया तिर्यगुदञ्चिताः । वलितं यथा—'वलितं तन्निवृत्तस्य भूयस्त्र्यश्रावलोकनम्' । 'त्र्यश्रं तिर्यगुदञ्चितम्' इति त्र्यश्रलक्षणम् । ततो मुग्धाः सव्याजभावगर्भस्वभावाः । मुग्धं यथा—'स्वभावालोकितं मुग्धं भावगर्भमपि च्छलात्' इति । ततः स्निग्धाः स्नेहपर्यायरतिभावानुविद्धाः स्निग्धा दृष्टिर्यथा—'स्निग्धं यद्रतिभावेन स्नेहप्रायेण संयुतम्' इति ।

अहं तु तस्याः सर्वाकारहृदयंगमायाः संभाव्यमानस्नेहरसेन संनिधिना विधेयीकृतोऽपि पारिप्लवत्वमात्मनो निह्नोतुकामः प्राक्प्रस्तुतस्य बकुलपुष्पदाम्नो यथाकथंचिदवशेषं ग्रथितवानेव । ततो मिलितवेत्रपाणिवर्षवरप्रायपुरुषपरिवारा गजवधूमारुह्य नगरगामिनं मार्गमिन्दुवदनालंकृतवती ।

यान्त्या मुहुर्वलितकंधरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या ।

---

ततो निष्पन्दा विषयादन्यत्र क्वापि न चलन्तः । निष्पन्दं यथा—'निष्पन्दं तद्यदन्यत्र दृष्टान्ते स्पन्दते क्वचित्' इति । ततो मन्दा विषयान्तरगमनानुद्युक्ताः । मन्थरदृष्टिरनेनोक्ता । यथा—'मन्थरा मन्दसंचारा' इति अधिकं विकसन्नाश्चर्यकारिवस्तुदर्शनलक्षणादुद्दीपनाद्विस्तारं रसभावोन्मुखत्वमुपनयन् । अन्तःकरणगतो विस्मयोऽद्भुतरसस्थायी । तेन स्मेराः स्फुरत्पक्ष्मपङ्क्तिभिरुत्फुल्लतारा येषां ते तथोक्ताः । स्मेरं यथा—'प्रस्फुरत्पक्ष्मतारं यत्तत्स्मेरमिति कथ्यते' इति । इयमेव विस्मयरसव्यञ्जिका विस्मिताख्या दृष्टिः । यथा—'विस्मयोत्फुल्लतारा च हृष्टोभयपुटाञ्चिता । समा विकसिता दृष्टिर्विस्मिता विस्मये स्मृता ॥' इति । अत्र कटाक्षैरुक्तरूपैरनुभावैस्तत्कारणस्य काष्ठां प्राप्तस्य माधवविषयस्य रतिभावस्य तत्समुचितव्यभिचारिणां प्रतीतेः, माधवस्याप्यपहृतमित्यादिना माल्यनुरागगोचरगाढानुरागतन्नियतव्यभिचारितत्तदुचितानुभावप्रतीतेः, युगपदन्योन्यालम्बनशृङ्गाररसध्वनिः । अत एव बीजस्य परस्परानुरागस्य परिनिष्पत्तेः परिन्यासो नाम मुखसंध्यङ्गमुक्तं भवति; यथा—'तन्निष्पत्तिः परिन्यासः' इति ॥ ३१ ॥ **अहंत्विति ।** सर्वैराकारैरवयवसंस्थानदृग्विलासाङ्गवलनादिभिर्मनोहरायास्तस्याः संभावितः पूर्वोक्तमद्गोचरदृष्टिविशेषैः संभाव्यमानः स्नेह एव रसो रसनीयत्वाद्यत्र तेन संनिधिना मत्समीपावस्थानेन विधेयीकृतो वशीकृतोऽपि।अन्यत्रोपरतेन्द्रियव्यापारोऽपि।आत्मनः पारिप्लवत्वं धैर्यभ्रंशं परेभ्यो निह्नोतुं कामो यस्य सः । पूर्वोपक्रान्तस्य केसरदाम्नः शेषं कथंचिदन्यमनस्कतयातिनिर्बन्धेन ग्रथितवानेव।ततो मिलितवेत्रेत्यादि वाक्यार्थः स्पष्टः । मदनोद्यानं तु चिरादपक्रान्तपूर्णचन्द्रमण्डलमिवाम्बरमन्धतमसावृतमिव किमप्यवलोकनयोग्यं नाभूदिति भावः । गमनसमये च तया कृतमात्मनः प्राणधारणं प्रत्याशानिबन्धनमाह—**यान्त्येति ।** यान्त्या गच्छन्त्या गमनसमयेऽपि मद्दर्शनौत्सुक्येन वलितकंधरं परिवर्तितग्रीवम् । अत एवावृत्तवृन्तशतपत्रनिभं कुसुमबन्धनादपवृत्तविकचपुण्डरीकदृशमाननं वहन्त्या तया पक्ष्मलाक्ष्या क्षिप्तेष्वपि बहुषु कटाक्षेषु नीरन्ध्रतरुशाखानिरुद्धतयोपरुद्धेषु कश्चिदेकः कटाक्षो दैवान्मम हृदये गाढं दृढं निखातो विदार्य हृदयमन्तःप्रवेशित इव । गाढमित्यनेन पुनरुद्धरणाशक्यत्वं सूचयति । दृढसंलग्नतयेदानीमपि तथैव वर्तमानोऽन्तःशल्यमिव व्यथयतीति भावः । मन्मथो धन्वी तामेव धनुर्लतामाधाय तत्कटाक्षमेव नाराचं

दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥ ३२ ॥

ततःप्रभृति

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च तनुते ॥ ३३ ॥

---

मन्मनसि लक्ष्ये कदाचिदप्यनुद्धरणीयं निखातवानिति समाधिः । कीदृशः कटाक्षः । अमृतेन विषेण च दिग्धः । पतनसमये निरतिशयानन्दजनकत्वादिदानीमपि जीवनहेतुत्वाच्चामृतेन दिग्धः । दुर्विषहविप्रयोगवेदनाहेतुत्वाद्विषेण दिग्ध इति द्रष्टव्यम् । अनेन विधानं नामाङ्गमुक्तम् । यथा—'विधानं सुखदुःखकृत्' इति । निखात इवेति तीक्ष्णतया कटाक्षस्य नाराचत्वसंभावनात् । उत्प्रेक्षालंकारः ॥३२॥

**तत इति । परिच्छेदेति** । तत्कटाक्षनिखातमारभ्य कोऽपि विकारो वैकृतः । अन्तरमन्तःकरणं जडयति प्रतिपत्तिशून्यं करोति । तत्रैव तापं च कुरुते संतापयति । जाड्यसंज्वरयोर्मदनावस्थयोरियमुक्तिः । तत्र जाड्यं यथा—'जाड्यमप्रतिपत्तिः स्यात्सर्वकार्येषु सर्वदा । इष्टानिष्टं न जानाति सुखदुःखं न वेत्ति च ॥ प्रश्ने न किंचित्प्रब्रूते न शृणोति न पश्यति । हाहेति भाषणाकाण्डहुंकारशिथिलाङ्गता ॥ कार्श्यवैवर्ण्यनिश्वासस्तम्भस्पर्शानभिज्ञता । एते जाड्यभवा भावा मीनकेतनमानिताः ॥' इति । संज्वरो यथा—'अविषह्यो मनस्तापः संज्वरः परिकीर्तितः । येनाङ्गारनदीमध्ये विलुठन्निव भाव्यते ॥' इति । किं च जाड्यमतिशीतलद्रव्यसंश्लेषात्स्तब्धत्वम् । तेन जडयति । अतिशैत्यात्स्तब्धयति । तापं च तनुत इत्युक्ते विरोधप्रतीतिः । शैत्यस्वभावस्य तापहेतुताविरोधात् । परिहारस्तु वलितग्रीवावलोकनस्य स्नेहसूचकत्वात् । गाढानुरागामृतानुलिप्ततयेदानीमनुसंधीयमानोऽपि । अमृतनिमग्नमिव कटाक्षः करोति । पुनस्तत्प्राप्तिनैराश्यप्रतिपादनेन विचिन्त्यमानो विषमिव व्यथयतीति । तेन विरोधाभासोऽलंकारः । कीदृशो विकार इत्यत आह—परिच्छेदेति । इयानेतावानित्यवधारणात्मकं ज्ञानं परिच्छेदः । तदतीतस्तदविषयः । तथा सकलवचनानामभिधालक्षणादिसर्वप्रकारशब्दव्यापाराणामविषयोऽगोचरः । अनेन विशेषणद्वयेन वाङ्मनसयोरगम्यत्वमुक्तम् । न चासौ पूर्वानुभूतेन केनचिदपि विकारेण तादृगयमित्युपमातुं शक्य इत्याह—पुनरिति । जन्मान्तरे किमनुभूतमिति न ज्ञायते । प्राग्जन्मवृत्तस्याजातिस्मरैरस्मरणात् । अस्मिंस्तु जन्मनि पुनर्नैतः पूर्वमीदृशो विकारोऽनुभवपथमवतीर्णो येनायमुपमीयेतेति भावः । तथा विवेकस्याज्ञानविरोधिनः शास्त्रश्रवणादिजन्मनो विज्ञानस्य प्रकर्षेण ध्वंसादत्यन्तसमुच्छेदादुपचितः प्रवृद्धो यो महामोहो दृढो भ्रमोऽविद्या तेन गहनो विषम इत्यर्थः । अनेन चोन्मादो नाम मदनावस्था सूचिता । यथा—

अपि च ।

परिच्छेदव्यक्तिर्न भवति पुरःस्थेऽपि विषये
भवत्यभ्यस्तेऽपि स्मरणमतथाभावविरसम् ।
न संतापच्छेदो हिमसरसि वा चन्द्रमसि वा
मनो निष्ठाशून्यं भ्रमति च किमप्यालिखति च ॥ ३४ ॥

**कलहंसः**—दिढं क्खु एसो कए वि अज्ज अवहरिदो । अवि-णाम मालदी एव्व सा हवे ।

---

१. दृढं खल्वेष कयाप्यद्यापहृतः । अपि नाम मालत्येव सा भवेत् ।

---

'उन्मादो विरहोत्थो य अतस्मिंस्तद्ग्रहाग्रहः । सर्वावस्थासु सर्वत्र सर्वथा सर्वदा मनः ॥ तद्गतं तत्कथाह्लादि प्रद्वेष्टीष्टानपीतरान् । दीर्घं मुहुर्निश्वसिति तिष्ठत्यनिमिषेक्षणः ॥ विहारकाले रुदति क्रन्दति ध्यायति क्षणम् । ग्लायति स्पन्दते स्वस्मिन्हसति स्तौति मुह्यति ॥ इत्थमुन्मादजा भावाः कथिता नाट्यकोविदैः ॥' इति । एतैरेव विशेषणैः कोऽपीति व्याख्यातम् ॥३३॥ इदानीमस्य विकारस्य कार्याण्यनुभवाश्चापरिच्छेद्या इत्याह—**परिच्छेदव्यक्तीरिति** । पुरःस्थेपीन्द्रियसंनिकृष्टे ग्रहणयोग्ये विषये परिच्छेदेन घटोऽयं पटोऽयमित्यवधारणात्मकेन सम्यगनुभवेन कृता व्यक्तिरभिव्यक्तिस्तत्र स्फुरणं तज्जन्यं प्राकट्यं वा न भवति । अनेन मनसो विकारोपहतत्वाच्चक्षुरायनवस्थानेन बाह्यार्थप्रमायामव्यापार उक्तः । स्मरणेऽपि न सम्यग्व्याप्रियत इत्याह—भवतीति । अनभ्यस्ते सकृदापाततो गृहीते कदाचिदनुभवो न संस्कारमादध्यात् । आहितो वा संस्कारो दार्ढ्याभावात्कदाचिन्न स्मृतिं जनयेदपि । पुनर्गृहीते वस्तुनि दृढतरं संस्काराधानाद्यथानुभवं स्मृत्या भाव्यम् । इह पुनरभ्यस्तेऽपि विषये न यथानुभवं स्मृतिरुत्पद्यते विद्यमानेष्वपि सदृशवस्तुदर्शनादिषु संस्कारोद्बोधकारणेषु । प्रत्युत दोषवशादतथाभावेनातथात्वेन विरसं विपर्यस्तं स्मरणं भवति । क्वचिदपि पूर्वानुभूते स्मरणं नोत्पद्यते । अपि तु स्मृतिविपर्यय एवेत्यर्थः । हिमसरसि तुषारवाप्यां वा चन्द्रमसि वामृतमयशरीरे संतापच्छेदो न भवति । केनापि शिशिरद्रव्येणानिर्वापणात्संतापो न निवर्तेत इत्यर्थः । तेन त्वया न कस्मिंश्चिदपि शैत्योपचारे प्रयतितव्यमिति भावः । तथापि मनो निष्ठया निर्वहणेन शून्यम् । कंचिदर्थमनुसंधातुमुपक्रम्य मध्य एव तस्यात्यन्तविस्मरणात्प्रक्रान्तनिर्वहणासमर्थमित्यर्थः । तत्र हेतुमाह—भ्रमति चेति । क्वचिदप्यर्थे न क्षणं तिष्ठतीत्यर्थः । 'जडयति च तापं च तनुते' इत्युक्तयोरेव जाड्यसंतापयोरेतद्विवचनमिति मन्तव्यम् । विरोधाभास एवालंकारः अतिशयोक्तिर्वा ॥ ३४ ॥ **कलहंसः**—दृढं खल्वेष कयाप्यद्यापहृतः । अपि नाम मालत्येव सा भवेत् । दृढं यथा वनितान्तरवार्तामपि न सहते तथा । कयाप्यद्य यात्रासमये नयनपथपतितया । यात्रा हि यूनोः प्रथमावलोकने प्राथमिकोपायः । यथा—'यात्रा पुर-

**मकरन्दः**—( स्वगतम् । ) अहो अभिषङ्गः । तत्किं निषेधयामि प्रियसुहृदम् । अथवा ।

मा मूमुहत्खलु भवन्तमनन्यजन्मा
मा ते मलीमसविकारघना मतिर्भूत् ।
इत्यादि नन्विह निरर्थकमेव यस्मि-
न्कामश्च जृम्भितगुणो नवयौवनं च ॥ ३५ ॥

( प्रकाशम् ) वयस्य, अपि विदिते तदन्वयनामनी ।

---

स्कन्दनमुत्सवो वा स्वप्नोऽथ चित्रं रतिसंकथा वा । भवन्त्युपायाः प्रथमावलोकने यूनोर्यतो वृद्धिमुपैति रागः ॥' इति । अपहृतः स्वायत्तचित्तः कृतः । सा एतच्चित्ताकर्षिणी । अपिनामेति संभावनायाम् । मालत्येव संभाविता । तस्या एवैतदभिलाषगोचरतायोग्यलावण्यशालित्वादिति भावः ॥ **मकरन्दः—स्वगतमिति।** अश्राव्यार्थप्रयोगे स्वगतमिति प्रयुज्यते । तदुक्तम्—'अश्राव्यश्राव्यभेदेन द्विधा वस्तु प्रकीर्तितम् । सर्वत्र नियतस्येति श्राव्यं च द्विविधं स्मृतम् ॥ अश्राव्यं स्वगतं तत्र प्रयोज्यं स्वगतं त्विति । सर्वश्राव्यं प्रकाशं स्यात्प्रकाशमिति तद्वदेत् ॥ श्राव्यं तु नियतस्यैव नाट्यधर्ममपेक्ष्य च । द्विधा विभज्यते तत्र जनान्तमपवारितम् । त्रिपताकाकरेणान्यानपवार्यान्तरा कथाम् । अन्योन्यामन्त्रणं यत्स्यात्तज्जनान्तिकमुच्यते ॥ रहस्यं कथ्यतेऽन्यत्र परावृत्त्यापवारितम् । वस्तुनिर्वाहकत्वेन नाट्यधर्मप्रसङ्गतः ॥' इति । अभिषङ्गोऽभिनिवेशः । अपूर्वोऽयमेकपदे चित्तासङ्गप्रकर्ष इत्यद्भुतावेशात्परिभावनं नाम संध्यङ्गमुक्तं भवति । 'परिभावोऽद्भुतावेशः' इति । **तत्किमिति।** इत्थमिदानीमस्योन्माददशा वर्तते । तेन समनन्तरदशोपनिपातात्पूर्वमेव किमेनमस्मादभिषङ्गान्निवारयामीति स्वात्मन्येव वितर्कः । एवं वितर्क्य निवारणमशक्यमिति निर्धारयति—**अथवा । मा मूमुहदिति** । अनन्यजन्मा स्वचित्तैकयोनिः कामो भवन्तं मा मूमुहन्न मोहं प्रापयतु । आशिषि लुङ् । तत्र मतिर्मलीमसो मलिनस्त्रिवर्गप्रत्यनीकत्वान्निन्दितो यो विकारो मन्मथाभिषङ्गस्तेन घना सान्द्रतरा छन्ना मा भूदित्याद्युपदेशजातमिहैवमवस्थेऽस्मिन्निरर्थकमकार्यकारित्वान्निष्फलम् । नन्वित्यात्मन एवावधारणे । नैरर्थक्ये हेतुमाह—यस्मिन्माधवे कामश्च जृम्भिताः संजातजृम्भाः प्रत्यग्रव्यक्तनिद्रा विजृम्भमाणगुणा विरहिजनप्राणहारिणो व्यापारा यस्य तथाभूतो वर्तते । यौवनं च प्रवृद्धविवेकप्रमोषणादिधर्मकं वर्तते । तस्मान्नेदानीमस्य किंचिदप्युपदेष्टव्यमस्ति । पाटच्चरलुण्ठितसर्वस्वं पथिकं प्रति 'चोरभूयिष्ठोऽयं मार्गः, तन्नानेन पथा गन्तव्यम्' इत्युपदेशवद्वृथैव बलवन्मन्मथाकृष्टमानसं प्रति मदनवशगो मा भूरित्युपदेशोऽतीतकालत्वाद्व्यर्थ एव । यदाह—'यो हि ब्रूयाद्भुक्तवन्तं मा भुक्था इति किं तेन कृतं स्यात्' इति ॥ ३५ ॥ एवमात्मन्येव निषेधाशक्यतां निर्धार्य तदभिलषितसंपादनेनैव तदुपद्रवं परिजिहीर्षुरानुकूल्यमवलम्ब्य पृच्छति—**प्रकाशमिति।** वयस्य, सा तावत्त्वदु-

**माधवः**—श्रूयताम् । अथ तस्याः करेणुकाधिरोहणसमय एव ततः सखीकदम्बकादन्यतमा वारयोषिद्विलम्ब्य कुसुमापचयक्रमेण नेदीयसी भूत्वा प्रणम्य कुसुमापीडव्याजेन मामेवमुक्तवती—'महाभाग सुश्लिष्टगुणतया रमणीय एष संनिवेशः । कुतूहलिनी च नो भर्तृदारिकास्मिन्वर्तते । तस्यामभिनवो विचित्रः कुसुमेषुव्यापारः । तद्भवतु कृतार्थता वैदग्ध्यस्य । फलतु निर्माणरमणीयता । समासादयतु सरस एष भर्तृदारिकायाः कण्ठावलम्बनमहार्घताम्' इति ।

---

पर्यनुरक्तेति त्वदुक्तेन तच्चेष्टाविशेषेण ज्ञातम् । कस्मिन्कुले जाता संबन्धयोग्या वा किंनामधेया वेत्येतदितः परं ज्ञातव्यम् । तत्साधनाय त्वया यत्किंचिद्विदितमिति प्रश्नः ॥ **माधवः—श्रूयतामित्यादि** । विलम्ब्य कुसुमापचयव्याजेन विलम्बं कृत्वा । कुसुमापचयक्रमेण तान्युपचिनोमि । तानि तानीत्येवंरूपेण नेदीयसी भूयः संनिहिता भूत्वा कुसुमापीडव्याजेन प्रणम्य शिरसि स्रग्बन्धनव्याजेन ललाटतटघटितकरकमलसंपुटा नमस्कृत्य । नमस्कारेण स्वभर्तृदारिकायास्त्वमेव भर्तेति तया सूचितम् । मामेवं वक्ष्यमाणमुक्तवती । सा तावत्पूर्वमेवावलोकितादिमुखान्माधवस्य सर्वकलाकौशलं ज्ञातवती सती निपुणं वक्तुमुपक्रमते—**महाभागेत्यादि** । महान्भागो भागधेयं यस्य । 'रूपनामभागभ्यो धेयः' इति स्वार्थे धेयप्रत्ययविधानाद्भाग एव भागधेयम् । आकृतिविशेषेणैवोपलक्ष्यमाणमहाभाग्यातिशयेत्यर्थः । एष संनिवेशः कुसुमसंनिवेशनप्रकारः स्रग्विरचनवैदग्ध्यं सुश्लिष्टगुणतया सुसंघटितग्रन्थिमत्सूत्रत्वेन रमणीयो मनोहरः । कुतूहलिनी चास्मिन्विदग्धातिशये कुसुमदामविरचनाविशेषे चास्माकं भर्तृदारिका । भूरिवसोरमात्यस्य राजतुल्यत्वात्तत्सुतापि भर्तृदारिकेत्युच्यते बहुमानसूचनाय । तस्यामधिकरणभूतायामभिनवोऽन्यत्रादृष्टपूर्वो विचित्रश्चमत्कारकारी कुसुमेषु विषये व्यापारो माल्यग्रथनारूपोऽस्ति । स्वयमस्यां कुसुमरचनायामतिशयेनासाधारणीं प्रसिद्धिमुपगता स्ववैदग्ध्यसदृशं भवतो माल्यग्रथनकौशलमुपलभ्येदानीं कौतुकाक्रान्तमानसा वर्तत इत्यर्थः । तत्तस्मात्त्वदीयस्य वैदग्ध्यस्य कुसुमदामरचनाप्रावीण्यस्य कृतार्थताविदग्धया तयोपलालनाच्चरितार्थता भवतु । यथाह—'आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्' इति । अस्या अपि स्रजो निर्माणस्य रमणीयताभिज्ञजनमनोरञ्जनेनैव फलेन फलतु अपचितकुसुमानां स्वस्वफलाजनकत्वेऽप्येतदेव फलमस्त्वित्यर्थः । तदेष ते सरसोऽम्लानः, तथा सारस्येन चातुर्येणान्वितः, तथा त्वयानुरागेण समर्पितः, कुसुमव्यापारो भर्तृदारिकायाः कण्ठावलम्बनेन ग्रीवालंकारतया धारणेन महार्घतां महामूल्यतामासादयतु प्राप्नोतु । यथा किंचिदुत्तमं रत्नमुत्तमकनकभूषणस्थापितं महामूल्यं भवति, तथेदमपि बकुलदामरत्नभूतं भर्तृदारिकाकण्ठाभरणत्वेन महामूल्यं भवत्विति प्रकृतोऽर्थः । अन्यस्तु—एषोऽस्मादृशस्य स-

मकरन्दः—अहो वैदग्ध्यम् ।

माधवः—तया मदनुयुक्तयाख्यातम्—'इयममात्यभूरिवसोः प्रसूतिर्मालती नाम । अहं च भर्तृदारिकायाः प्रसादभूमिर्धात्रेयिका लवङ्गिका नाम इति ।

कलहंसः—(सहर्षम् ।) किं णाम मालदित्ति । दिट्ठिआ विलसिदं भअवदा देवेण कुसुमाउहेण । जिदं अह्मेहिं ।

---

१. किं नाम मालतीति । दिष्टया विलसितं भगवता देवेन कुसुमायुधेन । जितमस्माभिः ।

---

खीजनस्य तटस्थसहृदयलोकस्य चाशास्यत्वेन बुद्धौ विपरिवर्तमानः संनिवेशो भवतोः संबन्धोऽभिलाषमात्रम् । तस्यां विषयेऽभिनवः केनापि विरहिणाननुभूतपूर्वः, अतएव विचित्रो विस्मयकारी कुसुमेषोर्व्यापारः । त्वामुद्दिश्य स्मरेण बलवदभिभूयत इत्यर्थः । तत्तस्मादन्योन्यसमागमेनोभयोर्वैदग्ध्यस्य सकलकलापरिज्ञानस्य कृतार्थता भवतु । त्वदीयवैदग्ध्यसारं सैव लोके वेदितुमर्हा तस्याश्च त्वमेवेत्यन्योन्यसदृशाभिज्ञविषयलाभादुभयोर्वैदग्ध्यं चरितार्थमस्त्वित्यर्थः । वैदग्ध्यलक्षणं च—'लौकिके वैदिके वार्थे तथा सामयिकेऽपि च । सम्यक्परिचयप्रौढिर्वैदग्ध्यमिति गीयते ॥' इति । निर्माणस्य भवदुभयसृष्टिलक्षणस्य विधातृव्यापारस्य रमणीयता सर्वलोकातिशायिसौन्दर्यसंपादकत्वेन मनोहरता भवदुभयसमागमेनैव फलेन फलतु । अन्यथेदृक्सृष्टिश्रमगुणोज्ज्वलस्त्रीपुंसनिर्माणप्रयासो विधेर्व्यर्थ एव भवेदिति भावः । तदेष त्रिभुवनरत्नभूतः सरसः सानुरागो रसिकाग्रणीश्च भवांस्तस्याः कण्ठावलम्बनेन कण्ठालिङ्गनेन महार्घतां प्राप्नोतु । सा ह्यमूल्यरत्नभूतं भवन्तं स्वकण्ठालिङ्गनसौख्येन रतिरमणपरीक्षके कल्पितेन महताधिकेन लावण्यद्रविणेन दरिद्रेतरयुवतिजनासंपाद्येन मूल्येन क्रेतुमर्हा नान्या काचिदिति भावः । अत्र कुसुमदामप्रार्थनाव्याजेन पूर्वं निष्पन्नार्थस्य मालतीविरहरूपस्य भाविनश्च निर्वहणपर्यन्तानुवर्तमानबकुलदामसाक्षिकसर्वव्यापारसूचनात्पताकास्थानकमिदम् । यथा—'अतीतानागते कार्ये कथ्येते यत्र वस्तुनः । अन्यापदेशव्याजेन पताकास्थानकं [हि] तत् ॥' इति । अत एव चिरकालावस्थायिनी म्लानापि सौरभ्यमयी बकुलमाला सैव कविना निर्दिष्टा न त्वितरकुसुममालेति ॥ **मकरन्दः** । वैदग्ध्यं तत्परिचारिकाया एवेदृशं वचनकौशलं चित्रमित्यर्थः ॥ **माधवः** । अनुयुक्तया केयं कस्य सुता वेति पृष्टया । कथितं तया—इयमित्यादि । प्रसूतिरपत्यम् । न तु दत्ता संकरजाता वा । तेन विवाहयोग्यता सूचिता । प्रसादभूमिर्विस्रम्भभाजनम् । तेन मयि शङ्का न कार्येत्युक्तम् । धात्रेयीत्यनुल्लङ्घ्यवचनत्वं सकलतन्मर्मज्ञानं चात्मनः सूचितम् ॥ **कलहंसः—सहर्षमिति** । यया लिखितमस्य प्रतिच्छन्दकमानीतं मया तस्यामेव मालत्यामासक्तोऽयमिति सफल इदानीं मम व्यापार इति हर्षहेतुः ।

**मकरन्दः**—( स्वगतम् । ) अमात्यभूरिवसोरात्मजेत्यपर्याप्तिर्बहुमानस्य । अपि च । मालती मालतीति मोदते भगवती कामन्दकी । तां च राजा नन्दनाय याचत इति किंवदन्ती श्रूयते । (प्रकाशम् ।) ततः ।

**माधवः**—तया चानुबध्यमानस्तां बकुलमालामात्मनः कण्ठादवतार्य दत्तवान् । असौ पुनरभिनिविष्टया दृशा मालतीमुखावलोकनविहस्ततया विषमरचितैकभागामपि तामेव मुहुर्मुहुर्बहुमन्यमाना महानयं प्रसाद इति प्रतिगृहीतवती । अनन्तरं च यात्राभङ्गप्रचलितस्य महतः पौरनैगमजनस्य संकुलेन विघटितायां तस्यामागतोऽस्मि ।

---

किं नाम मालतीति । अनेनास्यानुरागविषयभूता मालतीत्युच्यते । किं नामेति हर्षातिशयसूचका काकुः । तर्हि दिष्ट्या विलसितं विजृम्भितं भगवता देवेन कुसुमायुधेन । जितमस्माभिः । तद्दूत्यव्यापृतैः सर्वैरेव कार्यतत्परैरित्यर्थः । स्वामिनः प्राणसंकटसमये तदुज्जीवनौषधप्रतिच्छन्दकानयनेन तत्प्राणत्राणादात्मनि गौरवमारोप्यास्माभिरिति बहुवचननिर्देशः ॥ **मकरन्दः—स्वगतम् । अमात्येति ।** अमात्यात्मजेत्येतावन्मात्रगौरवं तस्या अपर्याप्तमित्यर्थः । नह्यमात्यदुहितेत्येव सा बहुमानास्पदम् । किंतु लोकातिशायिलावण्यप्रभृतिगुणयोगेनापि । तेन दैवादुपनतोऽप्यस्य कामविकारः समुचितविषयत्वाच्छ्लाघनीय एवेति भावः । गौरवापर्याप्तिमेवोपपादयति—**अपि चेति ।** अत्यादरसूचनार्थं वीप्सा । स्वयं सदैव एनां श्लाघत इत्यर्थः । **तां चेति ।** राजापि नर्मसुहृदे कन्यासहस्रं क्वचित्संपाद्य प्रदातुं शक्तोऽपि तदभिलाषास्पदमालतीसदृशयुवतिसंपादनाशक्तत्वान्नीचदूत्यमङ्गीकृतवान् । किमु वक्तव्यं तस्याः श्लाघनीयत्वमिति भावः ॥ **माधवः—तयेत्यादि ।** अनुबध्यमानः प्रियवचनैः पुनःपुनरभ्यर्थ्यमानः । प्रियोपभुक्तमुक्ततया मालतीं प्रति श्लाघ्यतां स्रजो दर्शयितुमात्मनः कण्ठादित्युक्तम् । **असावित्यादि ।** अभिनिविष्टया दुष्प्रापवस्तुप्राप्तेस्तदेकसंलग्नया दृशा तामेव स्रजं बहुमन्यमानेति संबन्धः । मालतीदर्शनेन मनसोऽन्यत्रासङ्गात्प्रस्तुतक्रियाविकलहस्ततया विषमं प्राग्ग्रथितभागापेक्षया विरूपमशोभनं यथा तथा रचितैकभागो मालतीदर्शनानन्तरग्रथितो भागो यस्यास्तामपि स्रजम् । सौन्दर्यात्तत्र तस्या न बहुमानः किं तु मद्ग्रथितत्वेनेति भावः । अत एव वक्ष्यति—'प्रेम्णा मद्ग्रथितेति वा प्रियसखीहस्तोपनीतेति वा' इति । **अनन्तरं चेत्यादि ।** पौरस्य नैगमस्य च जनस्य । पुरनिगमभेदः कथ्यते—'अद्रौ वनेऽथवा राष्ट्रे(?)सर्वजनावाससंकीर्णम् । क्रयविक्रयकैर्युक्तं पुरमुदितं यत्तदेव नगरमिति ॥ चातुर्वर्ण्यसमेतं सर्वजनावाससंकीर्णम् । बहुकर्मकारयुक्तं यत्तन्निगमं समुद्दिष्टम् ॥' इति । संकुलेन संमर्देन विघटितायां नयनविघटितायाम् । नयनसंनिकर्षाद्विभ्रष्टायां तिरोहितायामित्यर्थः ॥ मकरन्दः इदानीं माधवेनापि सामान्यतो ज्ञातं मालत्याः स्वस्मिन्ननु-

**मकरन्दः**—वयस्य, मालत्या अपि स्नेहदर्शनात्सुश्लिष्टमेतत् । यो हि कपोलपाण्डुतादिचिह्नः सूचितः प्रागनुरागस्तस्याः कामाभिषङ्गः सोऽपि त्वन्निबन्धन इति व्यक्तमेतत् । एतत्तु न ज्ञायते क्व दृष्टपूर्वस्तस्या वयस्य इति । न खलु तादृश्यो महाभागधेयजन्मानोऽन्यत्रासक्तचेतसो भूत्वा परत्र चक्षूरागिण्यो भवन्ति । अपि च ।

अन्योन्यसंभिन्नदृशां सखीनां
तस्यास्त्वयि प्रागनुरागचिह्नम् ।
कस्यापि कोऽपीति निवेदितं च

**माधवः**—किं चान्यत् ।

**मकरन्दः**—

धात्रेयिकायाश्चतुरं वचश्च ॥ ३६ ॥

---

रागमात्मन्यप्रत्ययादाशङ्क्यमानं लिङ्गैर्दृढं कृत्वा तन्मनोऽवस्थापयितुमाह—**मकरन्दः—वयस्येति** । तस्या अपि त्वद्वचनात्त्वय्यनुरागप्रतीतेरेतत्कार्यं साधु संघटितमित्यर्थः । न च मम दर्शनात्पूर्वमेव सा कपोलपाण्डिमाद्युपेता वर्तते, तेन मदन्यस्मिन्नेव क्वापि यूनि प्रागवलोकिते बद्धभावेयं न तु मयीत्याशङ्कनीयम् । यतस्त्वमेव कुत्रचित्पूर्वं दृष्टस्तस्याश्चिरादनुबध्यमानस्य मन्मथविकाराभिनिवेशस्य हेतुः । किं तु क्व वा तया प्रागवलोकितोऽभूरित्येतावदेव ज्ञातव्यमित्याह—**यो हीत्यादिना** । अहमेव तत्र हेतुरिति कुतोऽवधारणमित्यत आह—**न खल्विति** । तादृश्यः प्रशस्तकुलशीलगुणगणोज्ज्वला महाभागधेयजन्मानः प्रकृष्टसुचरितपरिपाकलब्धजनुषः । चक्षूरागश्चक्षुःप्रीतिरासामस्तीति तथा । यथा—'कुलीना गुणवत्यश्च कुमार्यो भाग्यभूषणाः । ईदृशास्त्वयशोदोषभाजनं नैव जातुचित् ॥ यद्यन्यासक्तचित्ता सा न चक्षुस्त्वयि पातयेत् । मनोऽन्यत्र दृगन्यत्र चेटीनां नोत्तमस्त्रियाः ॥' इति भावः । अन्यदपि त्वयि पूर्वानुरागे लिङ्गमस्तीत्याह—**अपि चेति** । **अन्योन्येति** । अन्योन्यसंभिन्नदृशां सप्रत्यभिज्ञं स एवायमिति निर्धारयितुं परस्परमुखावलोकनेन संमिश्रदृष्टीनां तस्याः सखीनां कस्यापि जनस्य कोऽपि दयित इहैव वर्तत इत्येवंरूपं निवेदितम् । स्वसख्यै प्रज्ञापनं चैकं तस्यास्त्वय्येवासौ पाण्डिमादिसूचितः प्रागनुराग इत्यस्मिन्नर्थे चिह्नं लिङ्गमित्यर्थः ॥ अथ माधवः स्वनिर्धारितं लिङ्गान्तरं लवङ्गिकाश्लिष्टवचनरूपमसावुद्भावयिष्यति वा न वेत्यौत्सुक्यात्तद्वचनावसरप्रतीक्षणमसहमानः कस्यापि कोऽपीति निवेदितं चेति चशब्देन किमन्यत्समुच्चिनोषीति पृच्छति—**माधवः—किं चेति** । चकारः । किमन्यत्प्रागनुरागलिङ्गं द्योतयतीत्यर्थः ॥ **मकरन्दः—धात्रेयिकाया इति** । चतुरं श्लिष्टम् । प्रागनुरागचिह्नमिति शेषः ॥ ३६ ॥

**कलहंसः**—(उपसृत्य ।) एदं अ[1] । (चित्रं दर्शयति ।)

( उभौ पश्यतः । )

**मकरन्दः**—कलहंसक, केनेदं माधवस्य रूपमभिलिखितम् ।

**कलहंसः**—जेण[2] एव्व से हिअअं अवहरिदं ।

**मकरन्दः**—अपि नाम मालत्या ।

**कलहंसः**—अह[3] इं ।

**माधवः**—वयस्य मकरन्द, प्रसन्नप्रायस्ते तर्कः ।

**मकरन्दः**—कुतोऽस्याधिगमस्ते ।

**कलहंसः**—मह[4] दाव मन्दारिआहत्थादो । ताए वि लवङ्गिआसआसादो ।

**मकरन्दः**—कथय किमाह मन्दारिका माधवालेख्यप्रयोजनं मालत्याः ।

**कलहंसः**—उक्कण्ठाविणोअणं[5] ति ।

**मकरन्दः**—वयस्य, समाश्वसिहि ।

या कौमुदी नयनयोर्भवतः सुजन्मा

---

१. एतच्च ।
२. येनैवास्य हृदयमपहृतम् ।
३. अथ किम् ।
४. मम तावन्मन्दारिकाहस्तात् । तस्या अपि लवङ्गिकासकाशात् ।
५. उत्कण्ठाविनोदनमिति ।

---

**कलहंसः** । एतच्च । इदमपि प्रागनुरागचिह्नमिति प्राप्तावसरश्चित्रमर्पयतीत्यर्थः॥ चित्रलेखनपर्यन्तस्य मालतीव्यापारस्य मकरन्देनापाततोऽधिगमात्केनेति सामान्यतो निर्देशः ॥ **कलहंसः** । पुनर्विमर्शपूर्वकं तेनैव वाचयितुमाह—येनैवास्य हृदयमपहृतमिति ॥ **मकरन्दः** । अपि नामेति प्रश्ने । लिखितमिति शेषः ॥ **कलहंसः** । अथ किमित्यङ्गीकारे । बाढं मालत्यैवेत्यर्थः ॥ **माधवः—वयस्येति** । प्रसन्नप्रायः संदेहलक्षणकालुष्यापगमान्निर्मलीभूतस्तर्कस्त्वय्येव सानुरक्तेत्यूहः । अत्र चित्रदर्शनात्त्वस्मिन्मालत्यनुरागनिश्चयेन सुखागमप्रतीतेः प्राप्तिर्नाम संध्यङ्गमुक्तं भवति । यथा—'प्राप्तिः कोऽपि सुखागमः' इति ॥ **मकरन्दः** । कलहंसक, कस्मादेतत्त्वया प्राप्तमित्यर्थः ॥ **कलहंसः** । मम तावन्मन्दारिकाहस्तात् । तस्या अपि लवङ्गिकासकाशात् ॥ **कलहंसः** । उत्कण्ठाविनोदनमिति ॥ **या कौमुदीति** । या त्वन्नेत्रचकोरयोश्चन्द्रिकेव निरतिशयसौहित्यकारिणी तस्याः सु-

तस्या भवानति मनोरथबन्धबन्धुः ।
तत्संगमं प्रति सखे न हि संशयोऽस्ति
यस्मिन्विधिश्च मदनश्च कृताभियोगः ॥ ३७ ॥

द्रष्टव्यरूपा च भवतो विकारहेतुस्तदत्रैवालिख्यताम् ।

**माधवः**—यदभिरुचितं वयस्याय । (लिखन्) सखे मकरन्द,

वारंवारं तिरयति दृशावुद्गतो बाष्पपूर-
स्तत्संकल्पोपहितजडिमस्तम्भमभ्येति गात्रम् ।
सद्यःस्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः
पाणिर्लेखाविधिषु नितरां वर्तते किं करोमि ॥ ३८ ॥

तथाप्यवहितोऽस्मि । (चिरादभिलिख्य दर्शयति ।)

**मकरन्दः**—(चित्रं निर्वर्ण्य ।) उपपन्नस्तावदत्रभवतोऽभिषङ्गः । (सकौतुकम् ।) कथमचिरेणैव निर्माय लिखितः श्लोकः । (वाचयति ।)

---

जन्मा त्वमपि मनोरथबन्धस्य दृढानुरागस्य बन्धुराश्रय इत्यर्थः । ततस्तस्याः संगमं प्रति संदेहो नास्ति । यतो यस्मिन्संगमे विधिरन्योन्यानुरूपनिर्माणेनोद्भूतप्रयासो मदनश्चाकस्मादेवोत्पादितगाढानुरागः कृताभियोगः एतत्कार्यसंगमे रचिताभिनिवेशो बद्धकच्छः । ततो न तदर्थं त्वया चिन्तनीयमित्यर्थः ॥ ३७ ॥ **द्रष्टव्येति** । अतिधीरस्यापि ते या मनोविकारमुत्पादयिता(त्री) सा मया द्रष्टव्यरूपा दर्शनीयाकृतिः । अनेन माधवस्य संशयं निरस्य परस्परानुरागस्य बीजस्य स्थापनात्समाधानं नाम संध्यङ्गमुक्तम् । यथा—'बीजागमः समाधानम्' । इति ॥ द्रष्टव्यरूपा दर्शनीयाकृतिः । केयं कलासु प्रागल्भ्यं प्रकाशितवती, तद्भवानपि तद्विलेखनेन व्याजेन तस्यै स्ववैदग्ध्यं प्रकटीकरोत्विति प्रतीतिः ॥ **माधवः** । वयस्यायेति । 'रुच्यर्थानाम्' इति संप्रदानत्वम् । तत्करोमीति शेषः । अथ तत्तदवयवसादृश्यलेखनार्थं मनसैव मालत्याः सर्वावयवसम्यङ्निर्वर्णनेन समुपजातबाष्पादिसात्त्विकभावो माधवश्चित्रक्रियायां स्वस्य दृक्करादिसामग्र्या अननुकूलतामुपपादयन्नाह—**वारंवारमिति** । लिखामि प्रियामिति संकल्प्य यत्किंचिद्भ्रूनेत्राद्यवयवस्य स्मरणं तत्समयसमुद्गतो बाष्पपूरो वारंवारं क्षणे क्षणे । 'वारश्चावसरः क्षणः' इति वचनात् । पुनःपुनरुन्मृज्यमानोऽपि दृशौ तिरयत्यावृणोति । अनेनाश्रुनामकः सात्त्विकभाव उक्तः । यथा—'अश्रु नेत्रोद्भवं वारि दुःखक्रोधप्रहर्षजम्' इति । तस्याः संकल्पेन चिन्तयोपहितः प्राप्तो जडिमा येन तद्गात्रं स्तम्भमभ्येति । जाड्यस्तम्भौ यथा—'क्रियास्वपाटवं जाड्यं चिन्तोत्कण्ठभयादिभिः। स्तम्भश्चेष्टाप्रतीघातो भयरागामयादिभिः ॥' इति । तथा सद्यस्तदुपस्मृतिक्षण एव स्विद्यन्स्वेदजलार्द्रो भवन्नयं मे पाणिर्लेखाविधिषु लेखनक्रियास्वविरतो-

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥ ३९ ॥

( प्रविश्य ।)

**मन्दारिका**—<sup>१</sup>कलहंस कलहंस, चोर चोर, पआणुसारेण ल-

---

१. कलहंस कलहंस, चोर चोर, पदानुसारेण लब्धोऽसि । कथं तावपि महानुभावावत्रैव । प्रणमामि ।

---

त्कम्पेनानवरतवेपथुना लोलाश्चला अङ्गुलयो यस्य स तादृशो वर्तते । तत्किं करोमि । इदानीं चित्रकर्मवैदग्ध्यप्रकटनं दुर्घटमित्यर्थः । स्वेदवेपथू यथा—'वपुर्जलोद्गमस्वेदो रतिघर्मश्रमादिभिः । रागरोगभयादिभ्यः कम्पो गात्रस्य वेपथुः ॥' इति ॥ ३८ ॥ तथापीत्यादि स्पष्टः ॥ **जगतीति** । जगति भुवने ते ते नवेन्दुकलादयो भावाः पदार्था जयिनो मन्मथसाहाय्याचरणेन विरहिजनवशीकरणशीलाः। प्रकृतिमधुराः स्वभावेनैव मनोहराः । 'इह वटे यक्षः' इति न्यायेन न केवलमन्धपरम्परया प्रसिद्धाः । अन्ये मालतीव्यतिरिक्ताः सन्त्येव येऽन्येषामदृष्टमालतीमुखाम्बुजानामविवेकिनां वा मनो मदयन्त्युत्सुकयन्ति । नैतदपूर्वम् । सन्तु नाम । तैः किमिदानीं तदपेक्षया वराकप्रायैरिति भावः । 'भिन्नरुचिर्हि लोकः' इति न्यायेनान्येषां यथा तथा वास्तु नाम । मम पुनर्विलोचनचन्द्रिका नेत्राह्लादकारिणी । लोके लोकप्रसिद्ध्या केवलमिदमुच्यते, न तु स्वापेक्षया । माधवस्य माल्त्यपेक्षया चन्द्रिकादेरतितुच्छत्वेन मालत्यामुत्कर्षप्रतिपादनार्थं चन्द्रिकात्वारोपस्य स्ववचोव्याहतत्वात् । तेन यथा लोकस्य चन्द्रिका नेत्रयोराह्लादकारिणी एवं मम मालतीत्येतावता चन्द्रिकात्वारोपः । न तूत्कर्षप्रतिपादनायेति व्याख्येयम् । एवं च व्याहतार्थदोष इति तु परिहृतम् । इयं मालती नयनविषयम् । भावप्राधान्येन निर्देशः। नेत्रगोचरतामापन्नेति यत्स एवास्मिञ्जन्मनि लोके कृत्स्नेऽपि प्रपञ्च एकोऽद्वितीयो महानुत्सवः सौख्यहेतुः । नान्ये चन्द्रकलादय इत्यर्थः । अतिशयोक्तिरलंकारः ॥ ३९ ॥ **प्रविश्य । मन्दारिकेति** । माधवाय प्रदर्श्य शीघ्रं प्रत्यानयेति कलहंसस्य हस्ते चित्रमर्पितवती मदनोद्यानात्प्रतिनिवृत्य क्रीडासौधवर्तिन्यां मालत्यामद्य विशेषदर्शनप्रबलतरोत्कण्ठाविनोदनाय क्व चित्रफलकमिति विमृशन्त्यां तदसंनिधानादुपजातसंभ्रमा मन्दारिका जनसंकुले कलहंसमन्विष्य तत्रादृष्टवती प्रविश्य वदतीति भावः । द्विरुक्तिः संभ्रमसूचनार्था । प्लुतश्च 'निगृह्यानुयोगे च' इति विहितो देशभाषास्वपि व्यवह्रियते । चोरेत्यामन्त्रणं मद्गृहाच्चित्रफलकं त्वया चोरेणानीतमित्युपहासपरम् । अत एवाह—**पादानुसारेण लब्धोऽसीति** ।

द्धोसि । (सलज्जम् ।) कहं दे वि महाणुहावा एत्थ एव्व । (उपसृत्य ।) पणमामि ।

**उभौ**—मन्दारिके, इत आगम्यताम् ।

**मन्दारिका**—[1]कलहंसक, उवणेहि चित्तफलअं ।

**कलहंसः**—[2]गिह्ण इमं ।

**मन्दारिका**—[3]केण किंणिमित्तं वा एत्थ मालदी अहिलिहिदा ।

**कलहंसः**—[4]जो एव्व जंणिमित्तं मालदीए ।

**मन्दारिका**—(सहर्षम् ।) [5]दिट्ठिआ उवदंसिदफलं विण्णाणं पआवइणो ।

**मकरन्दः**—सखि मन्दारिके, यदत्र वस्तुन्येष ते वल्लभः कथयति, अपि तत्तथा ।

**मन्दारिका**—[6]महाभाअ, तत्तहा ।

**मकरन्दः**—क्व पुनर्मालती माधवं प्राग्दृष्टवती ।

---

१. कलहंसक, उपनय चित्रफलकम् ।

२. गृहाणेदम् ।

३. केन किंनिमित्तं वात्र मालत्यभिलिखिता ।

४. य एव यन्निमित्तं मालत्या ।

५. दिष्ट्या उपदर्शितफलं विज्ञानं प्रजापतेः ।

६. महाभाग, तत्तथा ।

---

चोरो हि पदन्यासलिङ्गानुसरणेनैव गृह्यते । **सलज्जमिति** । तत्स्वामिसंनिधौ तेन सहोपहसनानौचित्यात् । कथं तावपि महानुभावावत्रैव ॥ इत आगम्यतामित्यादरोक्तिः । तस्याः समनन्तरकार्योपयोगात्तदनुनयार्थम् ॥ **मन्दारिका** । कलहंसक, उपनय चित्रफलकम् ॥ **कलहंसः** । गृहाणेदम् ॥ **मन्दारिका** । कलहंसकं प्रति । केन किंनिमित्तं वात्र मालत्यभिलिखिता ॥ **कलहंसः** । य एव यन्निमित्तं च मालत्या लिखितो माधवस्तेनैव तदर्थमेवोत्कण्ठाविनोदार्थमेव मालती लिखितेत्यर्थः । **मन्दारिका—सहर्षमिति** । कामन्दकीपरिजनस्यास्मदादेर्दूत्यव्यापारः फलोन्मुख इति हर्षहेतुः । दिष्ट्या उपदर्शितफलं विज्ञानं प्रजापतेः । ईदृशयुवद्वयनिर्माणं विधातुः शिल्पकौशलमनयोरन्योन्यानुरागप्रकर्षेण दर्शितफलं जातम् । परिणयरूपा परिणतिरेवेतः परमवशिष्टेति भावः ॥ **मकरन्दः** । अत्र प्रतिच्छन्दकरूपे वस्तुनि यदेष ते पतिः कथयति मालत्या लिखितमुत्कण्ठाविनोदनायेति । अपि प्रश्ने । किं तत्तथा सत्यमित्यर्थः ॥ **मन्दारिका** । महाभाग, तत्तथा ॥ **मकरन्दः—क्वेति** । येन

**मन्दारिका**—[1]लवङ्गिआ भणादि वादाअणगदेत्ति ।

**मकरन्दः**—नन्वमात्यभवनासन्नरथ्यैव बहुशः संचरावहे । तदुपपन्नमेतत् ।

**मन्दारिका**—[2]अणुमण्णादु महाभाओ । जाव एदं भअवदो देवस्स मअणस्स सुचरिअं पिअसहीए लवङ्गिआए णिवेदिस्सामि ।

**मकरन्दः**—प्राप्तावसरमेतद्भवत्याः ।

(मन्दारिका चित्रभाण्डं गृहीत्वा निष्क्रान्ता ।)

**मकरन्दः**—वयस्य, मध्याह्नोऽतिवर्तते । तदेहि । संस्त्यायमेव प्रविशावः ।

(उत्थाय परिक्रामतः ।)

**माधवः**—एवं हि मन्ये ।

घर्माम्भोविसरविवर्तनैरिदानीं
मुग्धाक्ष्याः परिजनवारसुन्दरीणाम् ।
तत्प्रातर्विहितविचित्रपत्ररेखा-
वैदग्ध्यं जहति कपोलकुङ्कुमानि ॥ ४० ॥

---

१. लवङ्गिका भणति वातायनगतेति ।

२. अनुमन्यतां महाभागः । यावदिदं भगवतो देवस्य मदनस्य सुचरितं प्रियसख्यै लवङ्गिकायै निवेदयिष्यामि ।

---

उत्कण्ठाविनोदनाय तद्रूपमलिखदिति भावः ॥ **मन्दारिका** । लवङ्गिका भणति वातायनगतेति ॥ एतद्गवाक्षमार्गेण दर्शनमित्यर्थः । **मन्दारिका** । अनुमन्यतां महाभागः । यावदिदं भगवतोऽप्रतिहतभावस्य देवस्याशक्यसंघटनेदृशमिथुनसंघटनानुगुणव्यापारात्मकक्रीडावतो मदनस्य सुचरितमन्योन्याकृतिनिर्माणसेतुपरस्परानुरागलक्षणं लवङ्गिकायै निवेदयिष्यामि । तयैवाहमत्र नियुक्ता, तस्मिमं वृत्तान्तं तस्यै निवेदयामि । सा पुनर्यथोचितमाचरिष्यतीति भावः ॥ **मकरन्दः—प्राप्तेति** । भवत्या । एतन्माधवालोकितस्य दृढीकृततदनुरागस्य तदभिलिखितमालतीरूपसंपादयिष्यमाणमालतीमनःप्रत्ययस्यास्य प्रतिच्छन्दकस्य लवङ्गिकायै निवेदनं प्राप्तोऽवसरो यस्य तत् । अवसरोचितमित्यर्थः ॥ संस्त्यायं सदनम् ॥ **घर्माम्भ इत्यादि** । मुग्धे सुन्दरे अक्षिणी यस्यास्तस्याः परिचारिकाणां वारविलासिनीनां कपोलकुङ्कुमानि कर्तॄणि कपोलयोरनुलिप्तानि कुङ्कुमानि । अनेनानुलेपनविशेष उक्तः । यथा—'वैदग्ध्येनोपरचितं स्तनयोर्वा कपोलयोः । उन्मादनं नयनयोर्यत्तस्यादनुलेपनम् ॥' इति । घर्माम्भसः स्वेदजलस्य विसरो विन्दुसमूहस्तस्य

अपि च ।

उन्मीलन्मुकुलकरालकुन्दकोश-
प्रच्योतद्घनमकरन्दगन्धबन्धो ।
तामीषत्प्रचलविलोचनां नताङ्गी-
मालिङ्ग्य पवन मम स्पृशाङ्गमङ्गम् ॥ ४१ ॥

**मकरन्दः**—( स्वगतम् । )

अभिहन्ति हन्त कथमेष माधवं
सुकुमारकायमनवग्रहः स्मरः ।

---

विवर्तनैः प्रसरणैः । तत्तदा मया दृष्टं प्रातःकाले विहिता या विचित्रा चमत्कारकारिणी पत्रलेखा पत्ररचना सैव वैदग्ध्यं तत्कर्मभूतं जहति त्यजन्तीति मन्ये । तर्कयामीत्यर्थः । स्वेदवशात्प्रमृष्टरचनानि विच्छिन्नचातुर्याणि कपोलकुङ्कुमानि मध्याह्ने स्युरिति भावः ॥ ४० ॥ अथोन्मादविजृम्भणमहिम्ना वायोरचेतनादपि तत्संगमं प्रार्थयन्नाह—**उन्मीलदित्यादि** । हे पवन, तामालिङ्ग्यैव, न तु तदनन्तरं किंचिद्विलम्ब्य, ममाङ्गमङ्गं प्रत्यवयवं स्पृश । प्रियतमामाश्लिष्यतस्त्वाङ्गसंस्पर्शोऽपि प्रियतमाङ्गसंस्पर्शकल्प एवेति भावः । यथाह—'वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश । त्वयि मे गात्रसंस्पर्शश्चन्द्रे दृष्टिसमागमः ॥' इति । तामिति । यादृशी पूर्वं दृष्टा तामेव स्मरति । ईषत्प्रचले विलासवशात्किंचिच्चञ्चले । अथवानिमिषदर्शनेन सख्यो ज्ञास्यन्तीति तत्प्रच्छादनाय किंचिच्चञ्चले लोचने यस्यास्ताम् । पीवरकुचभरेण विरहग्लान्या वा नतमवनतमङ्गं यस्यास्ताम् । पवनं विशिनष्टि—उन्मीलदिति । उन्मीलद्भिर्विकासोन्मुखैर्मुकुलैः कोरकैः करालो दन्तुरः । 'करालो दन्तुरे तुङ्गे विशाले विकृतेऽपि च' इति दर्शनात् । यः कुन्दकोशः कुन्दलताप्रतानं ततः प्रच्योतन्तो घना निबिडा ये मकरन्दाः पुष्परसास्तेषां गन्धस्य बन्धो तस्य सहचरेत्यनेन विलापाख्या मदनावस्था दर्शिता । यथा—'इह दृष्टमिह श्लिष्टमिहागतमिह स्थितम् । इह निर्वृतमत्रैव शयितं चाप्यलंकृतम् ॥ एवमादीनि वाक्यानि विलाप इति कथ्यते ॥ अन्तर्बहिः पुरः पश्चाद्दूरादारात्समीपतः ॥ क्वचित्पश्यति यात्येव क्वचित्क्वाप्यवतिष्ठते । आस्ते क्वचित्क्वचिच्छेते क्वचिन्निन्दति नन्दति ॥ इतश्चेतश्च रथ्यायां रौति भ्राम्यति धावति । एवं विलापजा भावा मनोभववशानुगाः ॥' इति ॥ ४१ ॥ **मकरन्दः—स्वगतम् । अभिहन्तीति** । हन्तेति विषादे । 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' इति दर्शनात् । अभिहन्त्याभीक्ष्ण्येन प्रहरति । अनवग्रहोऽप्रतिबन्धः । दुर्निवार इति यावत् । कथमिदमत्यन्तानुचितमारब्धमतिनृशंसेन मन्मथहतकेनेत्यर्थः । अचिरेणोत्पत्तिसमय एव यथा चिकित्सानवसरपरो हतः स्यात्, तथा प्रवृद्ध इत्यर्थः । विकृतं दोषत्रयम् । विकृतसंबन्धिविवर्तो वैकृतविवर्त उद्रिक्तदोषत्रयपरिणतिरूपः सांनिपातिको

अचिरेण वैकृतविवर्तदारुणः
कलभं कठोर इव कूटपाकलः ॥ ४२ ॥

तदत्रभवती कामन्दकी नः शरणम् ।

**माधवः**—( स्वगतम् । )

पश्यामि तामित इतः पुरतश्च पश्चा-
दन्तर्बहिः परित एव विवर्तमानाम् ।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्ती-
मासज्ञतिर्यगपवर्तितदृष्टिवक्रम् ॥ ४३ ॥

( प्रकाशम् ) । वयस्य, मम हि संप्रति

---

ज्वरः । स चासौ दारुणश्चेति विग्रहः । कठोरोऽतितीव्रः । 'कूटपाकलो गजरोगविशेषः । कूटेन कपटेनाकस्मादागत्य तस्मिन्नेव निपातयतीति कूटपाकलः । यथा—'यथाभिहन्यात्कूटेन मृगयूथं वनेचरः । तथा पातात्मको नागं हन्ति वै कूटपाकलः ॥ मृगः कूटेन शबरैर्हन्यते दारुणं यथा । तथा तेन द्विपः सीदत्यतः स्यात्कूटपाकलः ॥' इति । केचित्कूटीभूय संघीभूय दोषत्रयेण जनितो गजज्वरविशेषः कूटपाकल इति व्याचक्षते । अनेनोन्मादावस्था सूचिता । उपमालंकारः ॥ ४२ ॥ **तदत्रेति** । नान्या गतिरस्तीत्यर्थः । इयमर्थसंप्रसारणरूपा युक्तिर्मुखसंधेरङ्गम् । यथा—'संप्रसारणमर्थानां युक्तिरित्यभिधीयते' इति । माधवस्तु तामेव गमनसमये दृष्टामिदानीं सर्वत्रापि विलोकयन्नात्मन्येव स्वकीयमुन्मादातिशयं विमृशन्नाह—**पश्यामीति** । तामेव गमनसमये दृष्टामिदानीं बहुधा विवर्तमानाम् । प्रातिभासिकाकारो विवर्तः । प्रतिभासमात्रशरीरतया स्फुरन्तीम् । बाहुविध्यं व्यनक्ति—इत इत इति । कदाचित्कर्णान्तिकमागत्य रहस्याख्यानसस्पृहामिव पर्यायेण पार्श्वद्वये मदीयबाहुसंस्पर्शरोमाञ्चकञ्चुकितैकपयोधरं निषेदुषीम्, अन्यदा पुरतोऽभिमुखमुपविश्य 'किमित्येवमतिविषण्णः खिद्यसे । सर्वथा त्वदायत्तजीविताहम्' इति प्रौढवनितावन्मामनुनयन्तीम्, क्षणान्तरे पुनः पश्चान्मां मन्दसंचारमागत्य मन्नयने पिधाय कराभ्यां 'काहं कथय' इति मां विनोदयन्तीम्, कदाचिदसौ किमन्यां वा निरन्तरं निध्यायति मामेवेति विचारयितुमिवान्तः प्रविशन्तीम्, तत्र च स्वात्मानमेवोपास्यामिव परदेवतामाकारान्तरेण मदिच्छापरिकल्पितेन भासमानामवलोक्य वनितान्तरशङ्कया 'नूनं शठोऽसि । नाहं त्वत्संनिधौ वर्तितुमुत्सहे' इत्यसूययेव बहिर्निर्गत्य चेलाञ्चले गृह्यमाणामपि बलादपसरन्तीम्, कदाचिद्योगिनीमिव परिगृह्य बहूनि शरीराणि परितः परिवृत्य मामनेकप्रकारैर्विलासैरानन्दयन्तीमिति स्वमनोरथविजृम्भणप्रपञ्चनप्रकारः । पुनः कीदृशीम् । विकसन्मनोहरकनककमलसदृशम् । आसङ्गेन मय्यासक्ततया तिर्यगपवर्तिता तिर्यग्वलिता दृष्टिर्यस्य तत्तादृशं वक्त्रं वहन्ती-

प्रसरति परिमाथी कोऽप्ययं देहदाह-
स्तिरयति करणानां ग्राहकत्वं प्रमोहः ।
रणरणकविवृद्धिं बिभ्रदावर्तमानं
ज्वलति हृदयमन्तस्तन्मयत्वं च धत्ते ॥ ४४ ॥

( इति निष्क्रान्ताः सर्वे ।)

**इति महाकविश्रीभवभूतिविरचिते मालतीमाधवे प्रथमोऽङ्कः ।**

---

मिति ॥ ४३ ॥ एवं स्वात्मनि विमृष्टमेवार्थं वयस्याय मकरन्दाय निवेदयन्नाह— **प्रसरतीति** । कोऽप्यनिर्वाच्यः केनाप्यविदितनिदानः परिमाथी परिमथनशीलः सद्य एव विपत्तिशङ्काकार्ययं देहदाहो मदनज्वरः प्रसरति सर्वावयवव्याप्तो वर्तते । ज्वराख्यस्य दशाविशेषस्य लक्षणमुक्तम् । प्रमोहः 'सुखदुःखादिजनितो मोहश्चित्तस्य मूढता' इत्युक्तरूपः करणानामिन्द्रियाणां ग्राहकत्वं स्वस्वविषयग्रहणशक्तिं तिरयति नाशयति । रणरणकस्योत्कण्ठाया विवृद्धिं बिभ्रत् । आवर्तमानं मदनानलेन क्वाथ्यमानम् 'आवर्तनं क्वाथनं स्यात्' इति वचनात् । हृदयमन्तर्ज्वलति । यथा तैलादिकमतिक्वाथेन प्रज्वलति तद्वदिति । कथं तर्हीदानीं प्राणधारणमित्यत आह—तन्मयत्वं मालतीतादात्म्यमेवामृतनिषेकप्रायम् । संजीवनौषधमित्यर्थः ४४

चापलं यदकारीदं बालेनापि सता मया ।
गुणैकग्राहिणामेतत्प्रीतयेऽस्तु महात्मनाम् ॥

**इति श्रीमद्भारद्वाजकुलतिलकपर्वतनाथयायजूकनन्दनत्रिपुरारिसूरिविरचितायां मालतीमाधवभावप्रदीपिकायां प्रथमाङ्कविवरणम् ॥**

---

# द्वितीयोऽङ्कः ।

( ततः प्रविशतश्चेट्यौ । )

**एका**—हेला, संगीतसालापरिसरे अवलोइआदुईआ भअवदी कामन्दई किं वि मन्तअन्ती आसी ।[1]

**द्वितीया**—सहि, तेण किल माहवप्पिअवअस्सेण मअरन्देण सअलो मअणुज्जाणउत्तन्तो भअवदीए णिवेदिदो । तदो भट्टिदारिअं दट्ठुकामाए पउत्तिणिमित्तं अवलोइदा अनुप्पेसिदा । मए वि ताए कहिदं जह लवङ्गिआदुईआ विवित्ते भट्टिदारिआ वट्टदित्ति ।[2]

---

१. सखि, संगीतशालापरिसरेऽवलोकिताद्वितीया भगवती कामन्दकी किमपि मन्त्रयन्त्यासीत् ।

२. सखि, तेन किल माधवप्रियवयस्येन मकरन्देन सकलो मदनोद्यानवृत्तान्तो भगवत्यै निवेदितः । ततो भर्तृदारिकां द्रष्टुकामया प्रवृत्तिनिमित्तमवलोकितानुप्रेषिता । मयापि तस्यै कथितं यथा लवङ्गिकाद्वितीया विविक्ते भर्तृदारिका वर्तत इति ।

---

जयत्यपूर्वं पाण्डित्यमहो कुसुमधन्वनः ।
आ विरञ्चप्रपञ्चैकसंप्रदायप्रवर्तकम् ।
केनाप्यनुपदिष्टेषु प्रगल्भा येन बालिका ॥

कविरिदानीमङ्कान्तरमारभमाणो लवङ्गिकागमनानन्तरभाविवृत्तान्तसूचनायार्थोपक्षेपकं प्रवेशकं तावत्प्रस्तौति—**तत इत्यादि** । प्रवेशकस्तु—'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । प्रवेशकस्तु नाट्यादौ नीचपात्रप्रयोजितः ॥' इति । चेट्यौ दास्यौ । एतादृशानामेव प्रवेशकार्हत्वात् । यदाह—'परिजनकथानुबन्धः प्रवेशको नाम विज्ञेयः' इति ॥ **एका** । हलेति सख्या आमन्त्रणम् । संगीतशालापरिसरेऽवलोकिताद्वितीया भगवती कामन्दकी किमपि मन्त्रयन्त्यासीत् । प्राकृते बहुलग्रहणादद्यतनभूतेऽपि लङ्प्रयोगः । अवलोकितया तदा त्वं किमभाषिष्ठा इत्यर्थः ॥ **द्वितीया** । सखि, तेन किल माधवप्रियवयस्येन मकरन्देन सकलो मदनोद्यानवृत्तान्तो भगवत्यै निवेदितः । मकरन्देन निश्चितं खलु कामन्दकी नः शरणमिति । ततः सुहृद्विपत्प्रतीकारार्थं तत्समर्थायै कामन्दक्यै तत्सर्वं निवेदितवानित्यवलोकितामुखाच्छ्रुतमित्यर्थः । ततो भर्तृदारिकां द्रष्टुकामया भगवत्या प्रवृत्तिनिमित्तं क्व वा कथं वा वर्तत इति भर्तृदारिकायाः समवस्थापरिज्ञानार्थमवलोकितानुप्रेषिता । मयापि तस्यै अवलोकितायै कथितं यथा लवङ्गिकाद्वितीया विविक्ते भर्तृदारिका व-

**प्रथमा**—सहि[1], लवङ्गिआ खु केसरकुसुमाइं अवइणुम्मि त्ति गआ मअणुज्जाणं किं संपदं णिउत्ता ।

**द्वितीया**—अह इं[2] । तं खु आपतन्तीं एव्व हत्थे घेत्तूण अपरिअणा भट्टिदारिआ उपरिअलिन्दं समारूढा ।

**प्रथमा**—णूणं[3] तस्स महाणुहावस्स संकहाए अत्ताणं विणोदेइ ।

**द्वितीया**—( निःश्वस्य । ) कुदो[4] क्खु से आस्सासो । एदिणा अज्ज सविसेसदंसणेण अदिभूमिं क्खु ताए अहिणिवेसो गमिस्सदि । अण्णं अ । कल्ले एव्व णन्दणस्स कारणादो महाराओ भट्टिदारिअं पत्थअन्तो अमच्चेण विण्णत्तो ।

**प्रथमा**—किं[5] त्ति ।

---

१. सखि, लवङ्गिका खलु केसरकुसुमान्यवचिनोमीति गता मदनोद्यानं किं सांप्रतं निवृत्ता ।

२. अथ किम् । तां खल्वापतन्तीमेव हस्ते गृहीत्वापरिजना भर्तृदारिकोपर्यलिन्दं समारूढा ।

३. नूनं तस्य महानुभावस्य संकथयात्मानं विनोदयति ।

४. कुतः खल्वस्या आश्वासः । एतेनाद्य सविशेषदर्शनेनातिभूमिं खलु तस्या अभिनिवेशो गमिष्यति । अन्यच्च । कल्य एव नन्दनस्य कारणान्महाराजो भर्तृदारिकां प्रार्थयमानोऽमात्येन विज्ञप्तः ।

५. किमिति ।

---

र्तेत इति ॥ **प्रथमा**—सखि, लवङ्गिका खलु केसरकुसुमान्यवचिनोमीति तत्रैव विलम्बितवती नास्माभिरागच्छन्तीभिः सह मदनोद्यानादेवागता किं सांप्रतं संप्राप्ता ॥ **द्वितीया** । अथ किम् । बाढं संप्राप्तेत्यर्थः । तां खल्वापतन्तीमेव हस्ते गृहीत्वापरिजना प्रतिषिद्धसकलपरिचारिका भर्तृदारिकोपर्यलिन्दं क्रीडागृहबहिर्द्वारप्रान्तवर्तिन्या वेदिकाया ऊर्ध्वभागं समारूढा ॥ **प्रथमा** । नूनं तस्य महानुभावस्य संकथयात्मानं विनोदयति । त्वया किमुक्तं तेन च किमुक्तमिति तत्प्रसङ्गेनैवोत्कण्ठाविनोदनं करोतीत्यर्थः । **द्वितीया** । **निःश्वस्येति** । मालतीमनोरथान्तरायाधिगमान्निःश्वासः । कुतः खल्वस्या आश्वासः । एतेनाद्य सविशेषदर्शनेनातिभूमिं परां काष्ठां खलु तस्या अभिनिवेशोऽनुरागप्रकर्षो गमिष्यति । अन्यदप्यभिनिवेशविवृद्धौ निमित्तं सूचयति—कल्ये च प्रभातसमय एव नन्दनस्य कारणान्महाराजो भर्तृदारिकां प्रार्थयमानोऽमात्येन विज्ञप्तः ॥ **प्रथमा** । किमिति विज्ञप्तम् ।

**द्वितीया**—[1]पहवइ णिअस्स कण्णआजणस्स महाराओ त्ति। अदो आमरणं खु मालदीए हिअअसल्लं माहवाणुराओ त्ति तक्केमि।

**प्रथमा**—[2]अवि णाम भअवदी एत्थ किं वि भअवदित्तणं दंसइस्सदि।

**द्वितीया**—[3]अइ असंबद्धमणोरहे, एहि।

(इति निष्क्रान्ते।)

**प्रवेशकः।**

(ततः प्रविशत्युपविष्टा सोत्कण्ठा मालती लवङ्गिका च।)

---

१. प्रभवति निजस्य कन्यकाजनस्य महाराज इति। अत आमरणं खलु मालत्या हृदयशल्यं माधवानुराग इति तर्कयामि।

२. अपि नाम भगवत्यत्र किमपि भगवतीत्वं दर्शयिष्यति।

३. अयि असंबद्धमनोरथे, एहि।

---

कथयेति शेषः ॥ **द्वितीया**। प्रभवति निजस्य कन्यकाजनस्य महाराज इति। विज्ञस इति शेषः। अत आमरणं खलु तस्या मालत्या माधवानुरागः शल्यमनभिलषितवरप्रदानशङ्काविषाक्तं मन्मथनाराचफलतुल्यमिति तर्कयामि ॥ **प्रथमा**। अपि नाम भगवती किमप्यत्र भगवतीत्वं दर्शयिष्यति। मालत्यामतिवत्सला कामन्दकी तन्मनोरथसंपादने स्वकीयज्ञानवैराग्यैश्वर्यादिसंपत्तिरूपं माहात्म्यं प्रकटयिष्यतीति संभाव्यत इत्यर्थः ॥ **द्वितीया**। अयि असंबद्धमनोरथे, एहि। प्रकृतकृत्यानुसरणायेति शेषः ॥ एवं मकरन्देन कामन्दक्यै माधवावस्थानिवेदनम्, लवङ्गिकाप्राप्तिम्, मालतीलवङ्गिकयोः प्रवेशम्, तदनन्तरं मालत्यवस्थापरिज्ञानार्थं कामन्दक्यागमनम्, तया च प्रसज्यमानं नन्दनवृत्तान्तं सूचयित्वा चेट्यौ निष्क्रान्ते॥ **प्रवेशकः ॥ तत इत्यादि**। लवङ्गिकाद्वितीया विविक्ते वर्तेत इति सूचितप्रवेशे मालतीलवङ्गिके प्रविशत इत्यर्थः। नन्वत्र नायकप्रवेशाभावात्प्रत्यक्षनायकचरितवर्णनाख्याङ्कलक्षणाभावात्कथमस्याङ्कत्वम्। नेतृग्रहणेन नायिकाया अप्येकशेषेण ग्रहणाददोषः। किं चाङ्कद्वयस्याप्येकदिनव्यापारत्वात्, एकसंध्यात्मकत्वाच्च पूर्वाङ्कशेष एवायं पात्रप्रवेशनिर्गमसौकर्यार्थं नायकव्यापारानुसंधानं परिसमाप्य नायिकाव्यापारानुसंधानात्मकसौकर्यार्थं चाङ्कान्तरं कृतमिति मन्तव्यम्। कथमङ्कद्वयस्यैकसंधित्वमिति चेदुच्यते—'अन्वितानां कथांशानां परमेते प्रयोजने। संबन्धः संधिरित्युक्तोऽवान्तरैकप्रयोजने ॥' इत्येवंरूपम्। तदत्र मालतीमाधवयोर्विवाहलक्षणपरमप्रयोजनसमन्वितानामवान्तरैकप्रयोजने तदन्योन्यानुरागस्य बीजस्य दृढीकरणलक्षणे प्रवृत्तानामद्यतनकामन्दक्यवलोकितादिप्रयत्नो मदनोद्यानचित्रफलकवृत्तान्ततो नन्दनप्रसङ्गोद्भावनेन मालतीमनोदृढीकरणं माधवस्य कुलशीलवयोरूपादिप्रख्यापनं चेत्येतेषां कथांशानां संबन्धः साङ्गो मुखसंधिः।

**मालती**—[1]सँहि, तदो तदो ।

**लवङ्गिका**—[2]तँदो तेण महाणुहावेण उवणीदा इअं वउलमाला । ( इत्यर्पयति । )

**मालती**—( मालां गृहीत्वा सहर्षं निर्वर्ण्य । ) [3]सँहि, एक्कपासविसमपडिबद्धा इअं विरअणा ।

**लवङ्गिका**—[4]एँत्थ अरमणिज्जत्तणे तुमं एव्व अवरद्धासि ।

**मालती**—[5]कँहं विअ ।

**लवङ्गिका**—[6]जेँण सो दुव्वासामलङ्गो तह विहत्थीकिदो ।

**मालती**—[7]सँहि लवङ्गिए, सव्वहा आसासणसीलासि ।

**लवङ्गिका**—[8]सँहि, एत्थ का आसासणसीलदा । णं भणामि ।

---

१. सखि ततस्ततः ।
२. ततस्तेन महानुभावेनोपनीतेयं बकुलमाला ।
३. सखि, एकपार्श्वविषमप्रतिबद्धेयं विरचना ।
४. अत्रारमणीयत्वे त्वमेवापराद्धासि ।
५. कथमिव ।
६. येन स दूर्वाश्यामलाङ्गस्तथा विहस्तीकृतः ।
७. सखि लवङ्गिके, सर्वथाशासनशीलासि ।
८. सखि, अत्र काश्वासनशीलता । ननु भणामि सोऽपि प्रिय-

---

'मुखं बीजसमुत्पत्तिर्नानार्थरससंभवा' इत्युक्तलक्षणात् । इत्यलं प्रपञ्चेन ॥ **मालती** । सखि, ततस्ततः । मदनोद्याने स्वविलम्बं माधवसमीपगमनं चतुरैर्वचनैर्वकुलदामप्रार्थनं चेत्येतावदुक्तवतीं लवङ्गिकां प्रत्युपरितनवृत्तान्तश्रवणकौतुकोत्कर्षात्ससंभ्रमप्रश्नः । आदरसूचनार्था वीप्सा । अनन्तरवृत्तान्तं कथयेति शेषः ॥ **लवङ्गिका** । ततस्तेन महानुभावेनोपनीतेयं बकुलमाला ॥ **मालती** । निर्वर्ण्य सादरं विलोक्य । सखि, एकपार्श्वविषमप्रतिबद्धेयं विरचना ॥ **लवङ्गिका** । अत्रारमणीयत्वे त्वमेवापराद्धासि । **मालती** । कथमिव । माधवकर्तृकायाः स्रग्विरचनाया एकपार्श्ववैषम्ये कथमहं निमित्तं भवामीत्यर्थः । **लवङ्गिका** । येन स दूर्वाश्यामलाङ्गस्तथा विहस्तीकृतः । वस्तुतो ग्रथनक्रियायां विकलहस्तः कृतः । त्वमेव स्वसौन्दर्यसंपदा गम्भीरमपि तन्मनः समाकर्षन्ती प्रस्तुतक्रियाविकलहस्तं कृतवती । तत इदं विरचनावैषम्यं जातमिति भावः ॥ **मालती** । सखि लवङ्गिके, सर्वथाश्वासनशीलासि । मत्समाश्वासनाय केवलमिदं त्वयोच्यते । तस्य मय्यनुरागोऽसंभावित इति भावः ॥ **लवङ्गिका** । सखि, कात्राश्वासनशी-

सो वि पिअसहीए मन्दमारुअप्पअलिअपप्फुल्लपुण्डरीअविब्भमेहिं पढमारद्धवउलावलीविरअणावदेससंअमणबलामोडिअवित्थरन्तेहिं लोअणेहिं विअम्भमाणविह्मअत्थिमिददीहपेरन्तपरिअन्तणाविलासुल्लसिअभूलदाविभाविदाणङ्गसरसंरम्भविब्भमविअड्ढं ओलोअन्तो पच्चक्खीकिदो एव्व ।

**मालती**—( लवङ्गिकां परिष्वज्य । ) [1]आम पिअसहि, किं दाव तस्स साहाविआ एव्व ते मुहुत्तसंणिहाइणो जणस्स विप्पलम्भइत्तआ विलासा, आदु पिअसही जहा संभावेदि ।

---

सख्या मन्दमारुतप्रचलितप्रफुल्लपुण्डरीकविभ्रमाभ्यां प्रथमारब्धबकुलावलीविरचनापदेशसंयमनबलात्कारविस्तृताभ्यां लोचनाभ्यां विजृम्भमाणविस्मयस्तिमितदीर्घपर्यन्तपरियन्त्रणाविलासोल्लसितभ्रूलताविभावितानङ्गशरसंरम्भविभ्रमविदग्धमवलोकयन्प्रत्यक्षीकृत एव ।

१. आम प्रियसखि, किं तावत्तस्य स्वाभाविका एव ते मुहूर्तसंनिधायिनो जनस्य विप्रलम्भयितृका विलासाः आहोस्वित्प्रियसखी यथा संभावयति ।

---

लता । प्रत्यक्षसिद्धेऽर्थे किं मय्यविश्वासेनेत्यर्थः । ननु भणामि । सोऽपि प्रियसख्या प्रत्यक्षीकृत एवेत्यन्तेन संबन्धः । न मयैवेति भावः । मन्दमारुतप्रचलितप्रफुल्लपुण्डरीकविभ्रमाभ्यां प्रथमारब्धबकुलावलीविरचनापदेशेन यत्संयमनं त्वदवलोकनजनिताकारविक्रियासंवरणं तन्मूलो यो बलात्कारस्तेन विस्तृताभ्याम् । बलामोडिएति बलात्कारे देशीपदम् । लोचनाभ्यां विजृम्भमाणविस्मयस्तिमितदीर्घपर्यन्तपरियन्त्रणाविलासोल्लसितभ्रूलताविभावितानङ्गशरसंरम्भविभ्रमविदग्धम् । विजृम्भमाणोऽद्भुतरसतामापाद्यमानो यो विस्मयस्तेन स्तिमितौ निष्पन्दीकृतौ दीर्घावायतौ च यौ लोचनप्रान्तौ तयोः परियन्त्रणा नियमनं सैव विलासस्तेनोल्लसिताभ्यां भ्रूलताभ्यां विभावितो योऽनङ्गशरसंरम्भः स एव विभ्रमस्तेन विदग्धं यथा स्यात्तथेति विग्रहः । अवलोकयन्प्रत्यक्षीकृत एव । तस्य साभिलाषदृष्टिभिरेव लब्धानुरागो विभाव्यत इति भावः ॥ **मालती** । परिष्वज्य । स्वमनोभववृत्तान्तप्रत्यक्षसंवादप्रदर्शनजनितो हर्षः परिष्वङ्गे निमित्तम् । आमेति संवादे । अङ्गीकार इति केचित् । मम मनसि वर्तमानमेव त्वयाप्युक्तं तदेवमेव खल्वित्यर्थः । प्रियसखि, किं तावत्तस्य स्वाभाविका एव ते मुहूर्तसंनिधायिनो जनस्य तत्क्षणमात्रसंनिहितस्य पांसुरपादस्य । स्वभावविशेषानभिज्ञस्येति यावत् । विप्रलम्भयितृका वञ्चयितारो विलासाः आहोस्विद्यथा प्रियसखी संभावयति । किं तस्य सहजैरेव विलासैरपरिचयाद्वयं विप्रलब्धाः, किं वा त्वदुक्तरीत्यानुरागसूचका एवेति भावः ॥

**लवङ्गिका**—( विहस्य सासूयमिव । ) [1]तुमं वि सहावेण एव्व तस्सिं अवसरे असंगीदअं णत्तिदासि ।

**मालती**—( सलज्जं विहस्य । ) [2]हुं, तदो तदो ।

**लवङ्गिका**—[3]तदो पडिणिउत्तमाणजत्ताजणसंकुलेण अन्तरिदे तस्सिं मन्दारिआघरं उवगदह्मि । ताए चित्रफलअं पहादे हत्थीकिदं आसी ।

**मालती**—[4]किंणिमित्तं ।

**लवङ्गिका**—[5]तं क्खु माहवाणुअरो कलहंसओ कामेदि । सा तस्स दंसइस्सदित्ति । तदो पिअणिवेदिआ मन्दारिआ संउत्ता ।

**मालती**—( स्वगतम् । सानन्दम् । ) [6]णूणं देण वि कलहंसएण

---

१. त्वमपि स्वभावेनैव तस्मिन्नवसरेऽसंगीतकं नर्तितासि ।

२. हुं, ततस्ततः ।

३. ततः प्रतिनिवर्तमानयात्राजनसंकुलेनान्तरिते तस्मिन्मन्दारिकागृहमुपगतास्मि । तस्याश्चित्रफलकं प्रभाते हस्तीकृतमासीत् ।

४. किंनिमित्तम् ।

५. तां खलु माधवानुचरः कलहंसकः कामयते । सा तस्य दर्शयिष्यतीति । ततः प्रियनिवेदिका मन्दारिका संवृत्ता ।

६. नूनं तेनापि कलहंसकेनैतत्प्रतिच्छन्दकमात्मनः प्रभोर्दर्शितं भविष्यति । सखि, किमिदानीं ते प्रियम् ।

---

**लवङ्गिका** । निश्चित्यापि भावगुप्तये केवलमियं संदिग्ध इति विहस्य निश्चितेऽप्यर्थे ममापि किमाच्छाद्यत इति सासूयम् । आहेति शेषः । सावज्ञमित्यव्ययं प्रणयक्रोधे । त्वमपि स्वभावेनैव तस्मिन्नवसरेऽसंगीतकं स्त्रीगानशून्यम् । 'स्त्रीणां रङ्गोपविष्टानां गानं संगीतकं मतम्' इति वचनात् । नर्तितासि । यदि तस्य सहजविलासैस्त्वं वञ्चितासि तर्हि त्वदीया अपि विलासाः स्वाभाविकास्तद्वञ्चिका एव । न त्वनुरागप्रभवा इति । प्रतिबन्दितः प्रकृतार्थनिर्धारणमेतत् ॥ **मालती** । इतः परं गोपनाशक्तेः सलज्जम् । हुमिति प्रश्ने । ततस्ततः वक्तव्यशेषं ब्रूहीत्यर्थः ॥ **लवङ्गिका** । ततः प्रतिनिवर्तमानयात्राजनसंकुलेनान्तरिते तस्मिन्माधवे मन्दारिकागृहमुपगतास्मि । तस्याश्चित्रफलकं प्रभाते हस्तीकृतं न्यासीकृतमासीत् ॥ **मालती** । किंनिमित्तम् ॥ **लवङ्गिका** । तां खलु माधवानुचरः कलहंसकः कामयते । सा तस्य दर्शयिष्यतीति हेतोस्तस्या हस्ते दत्तमासीदित्यर्थः । ततो मन्दारिका प्रियनिवेदिका संवृत्ता ॥ **मालती** । स्वगतम् । नूनं तेनापि कलहं-

एदं पडिच्छन्दअं अत्तणो पहुणो दंसिदं हविस्सदि । ( प्रकाशम् । ) सहि, किं दाणीं दे पिअं ।

**लवङ्गिका**—एदं क्खु संदाविदस्स तुह संदावआरिणो दुल्लहमणोरहावेसदूसहाआसदज्झन्तचित्तस्स खणमेत्तणिव्वावइत्तअं तुह पडिच्छन्दअं । ( इति चित्रं दर्शयति । )

**मालती**—( सहर्षोच्छ्वासं चिरं निर्वर्ण्य । ) अह्मो, दाणीं वि हिअअस्स मे अणासासो । जेण एदं वि आसासणं विप्पलम्भोत्ति संभाविआदि । कहं अक्खराइं पि । ( 'जगति जयिनः' इत्यादि पठति । सानन्दम् । ) महाभाअ, सरिसं क्खु दे णिम्माणस्स वअणमहुरदाए । दंसणं उण तक्कालमणोहारि परिणामदीहसंदावदारुणं अ । धण्णाओ

१. एतत्खलु संतापितस्य तव संतापकारिणो दुर्लभमनोरथावेशदुःसहायासदह्यमानचित्तस्य क्षणमात्रनिर्वापयितृकं तव प्रतिच्छन्दकम् ।

२. अहो, इदानीमपि हृदयस्य मेऽनाश्वासः । येनेदमप्याश्वासनं विप्रलम्भ इति संभाव्यते । कथमक्षराण्यपि । महाभाग, सदृशं खलु ते निर्माणस्य वचनमधुरतया । दर्शनं पुनस्तत्कालमनोहरं परिणामदीर्घसंतापदारुणं च । धन्याः

सकेनैतत्प्रतिच्छन्दकमात्मनः प्रभोर्दर्शितं भविष्यतीति । कथमन्यथा मन्दारिका प्रियनिवेदिका स्यादिति भावः । प्रकाशम् । सखि, किमिदानीं ते प्रियम् । यन्मन्दारिकया निवेदितमित्यर्थः । **लवङ्गिका** । एतत्खलु संतापितस्य त्वदप्राप्त्या संतप्यमानस्य तव संतापकारिणो दुर्लभे त्वय्येव विषये यो मनोरथावेशस्तेन यो दुःसहायासस्तेन दह्यमानस्य चित्तस्य क्षणमात्रनिर्वापयितृकं तव प्रतिच्छन्दकम् । ममेदानीं प्रियमिति शेषः । त्वया यथा तद्दर्शनमन्तरेण जीवितुमपारयन्त्या चित्रदर्शनेनापि प्राणान्धारयितुं प्रतिच्छन्दकं लिखितं तेनाप्येवमेव त्वत्प्रतिकृतिर्लिखितेत्येतदेव मे प्रियम् । अन्योन्यानुरागप्रकर्षस्य प्राप्तिबीजस्य निश्चयादिति भावः ॥ **मालती** । सहर्षोच्छ्वासम् । समाश्वासः प्रियस्य स्वस्यामत्यन्तानुरागनिश्चयहेतोः । तल्लिखितात्मप्रतिरूपस्य दर्शनात् । हर्षाश्वासौ 'मनःप्रसादो हर्षः स्यादिष्टप्राप्तिस्तवादिभिः' इति लक्षणात् । क्वचित् 'सहर्षसाध्वसम्' इति पाठः । तत्र कुमारीजनानुचितपरपुरुषानुरागप्रत्यायकमेतत्कस्य वा बन्धुजनस्य दृक्पथं गच्छेदिति साध्वसहेतुः अहो इदानीमपि हृदयस्य मेऽनाश्वासः । येनेदमप्याश्वासनं विप्रलम्भ इति संभाव्यते । कथमक्षराण्यपि । दृश्यन्त इति शेषः । जगतीति विवृतं प्राक् । सानन्दमिति । श्लोकार्थानुसंधानमानन्दहेतुः । महाभाग, सदृशं खलु निर्माणस्य वचनमधुरतया । निर्माणे वचने च तुल्यैव मधुरतेत्यर्थः । दर्शनं पु-

क्खु ताओ इत्थिआओ जाओ तुमं ण पेक्खन्दि । पेक्खिअ अत्तणो हिअअस्स वा पहवन्दि ।

**लवङ्गिका**—[1]सहि, एवं वि णत्थि दे आसासो ।

**मालती**—[2]कहं विअ ।

**लवङ्गिका**—[3]जस्स कारणादो तुमं उक्खण्डिअबन्धणं कङ्केल्लिपल्लवं विअ हिअअं धारेन्दी किलन्दणोमालिआकुसुमणीसहा कुसुमाउहेण पडिहिज्जसि, सो वि जाणाविदो भअवदा मम्महेण संदावस्स दूसहत्तणम् ।

**मालती**—[4]सहि, कुसलं दाणीं तस्स महापहावस्स होदु । मह उण सुदुल्लहो आसासो । (साम्रम् । संस्कृतमाश्रित्य ।)

---

खलु ताः स्त्रियो यास्त्वां न प्रेक्षन्ते । प्रेक्ष्यात्मनो हृदयस्य वा प्रभवन्ति ।

१. सखि, एवमपि नास्ति ते आश्वासः ।

२. कथमिव ।

३. यस्य कारणात्त्वमुत्खण्डितबन्धनं कङ्केल्लिपल्लवमिव हृदयं धारयन्ती क्लाम्यन्नवमालिकाकुसुमनिःसहा कुसुमायुधेन परिहीयसे, सोऽपि ज्ञापितो भगवता मन्मथेन संतापस्य दुःसहत्वम् ।

४. सखि, कुशलमिदानीं तस्य महाप्रभावस्य भवतु । मम पुनः सुदुर्लभ आश्वासः ।

---

नस्तत्कालमनोहरं परिणामेऽसंदर्शनसमये दीर्घसंतापदारुणं च । धन्याः खलु ताः स्त्रियो यास्त्वां न प्रेक्षन्ते । पुण्यवशात्कथंचित्पश्यन्त्योऽप्यात्मनो वा हृदयस्य प्रभवन्ति । यास्त्वां न पश्यन्ति ताः स्वजन्मनैष्फल्याद्दृष्ट्वापि यास्त्वन्यमनस्काः पशुकल्पतयानादरणीयत्वादुभयेऽप्यधन्या इति व्यतिरेको ध्वन्यते ॥ **लवङ्गिका** । सखि, एवमप्याश्वासितेऽपि नास्ति त आश्वासः ॥ **मालती** । कथमिव । किमिदानीमनन्यथासिद्धमाश्वासननिमित्तं दृष्टमिति तयैव वाचयितुमवगतेऽपि प्रश्नः ॥ **लवङ्गिका** । यस्य कारणात्त्वमुत्खण्डितबन्धनमुच्छिन्नमूलं कङ्केल्लिपल्लवमशोकपल्लवमिव हृदयं धारयन्ती क्लाम्यन्नवमालिकाकुसुमनिःसहातिसुकुमारा कुसुमायुधेन परिहीयसे परिहानिं तनुतां प्राप्यसे, सोऽपि ज्ञापितो भगवता मन्मथेन संतापस्य दुःसहत्वम् । तल्लिखितश्लोकवशाद्भवत्या इव तस्यापि गाढानुरागप्रतीतिरेवाश्वासननिमित्तमिति भावः ॥ **मालती** । सखि, कुशलमिदानीं तस्य महाप्रभावस्य भवतु । मम पुनः सुदुर्लभ आश्वासः । मम पुनरिदानीमेव चरमावस्था भवतु । मदवस्थासदृशावस्थत्वं तस्य मा भवतु । तादृशस्य त्रिभुवनालंकारस्य दुर्लभजन्मत्वादिति भावः । सास्रम् । वेदनाया अतिदुःसहत्वात्तस्यो विपत्तिशङ्कया सास्रत्वम् । **संस्कृतमाश्रित्येति** । यदाहुः—'वेश्यानामप्सरसामन्तःपुरिकाणु

मनोरोगस्तीव्रो विषमिव विसर्पन्नविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥ १ ॥

**लवङ्गिका**—एॅव्वं एदं । पच्चक्खसोक्खदाइणो परोक्खदुक्खदूसहा सज्जणसमाअमा होन्दि । अवि अ पिअसहि, जस्स वादाअणन्दरमुहुत्तदंसणेण वि सुसमिद्धहुदवहाअन्तपुण्णचन्दोदया णिक्करुणकामव्वावारसंसइदजीविदा दे सरीरावत्था, तस्स एॅव्व संपदं सविसेसदंसणादो अज्ज संतप्पसि त्ति किं एत्थ भणिदव्वम् । ता

१. एवमेतत् । प्रत्यक्षसौख्यदायिनः परोक्षदुःखदुःसहाः सज्जनसमागमा भवन्ति । अपि च प्रियसखि, यस्य वातायनान्तरमुहूर्तदर्शनेनापि सुसमिद्धहुतवहायमानपूर्णचन्द्रोदया निष्करुणकामव्यापारसंशयितजीविता ते शरीरावस्था, तस्यैव सांप्रतं सविशेषदर्शनादद्य संतप्यस इति किमत्र भणि-

चाग्र्यमहिषीणाम् । संस्कृतमपि योग्यं स्यात्प्रस्तावेनागतं किंचित्' इति ॥ मालत्याश्चान्तःपुरिकास्वन्तःपातः । अत एव भर्तृदारिकाव्यवहारोऽपि । **मनोरोग इति** । विषमिवाविरतमनवरतं विसर्पन्सर्वधातुषु व्याप्नुवन् । प्रमाथी तीव्रः सद्यो विपत्तिकृत् । अयं मान्मथो मनोरोगो मन्मथव्यथालक्षणो व्याधिः । निर्धूमं धूमरहितं यथा विधुतः संधुक्षितः पावक इव ज्वलति । तथा गरीयान्सांनिपातिको ज्वर इव प्रत्यङ्गं सर्वेष्वप्यवयवेष्वित इतोऽन्तर्बहिश्च हिनस्ति पीडयति । ततो मां दुस्तरादसाध्यसनात्त्रातुं तातोऽपत्यस्नेहपरवशोऽपि तावन्नरपतिमनोरञ्जनप्रवणत्वान्न प्रभवति । पुमपत्येष्वधिकत्वाद्वात्सल्यस्य पितुः कन्यकाजने माता निरतिशयप्रेमनिघ्नहृदया यद्यपि भवति तथाप्यम्बा भर्तृपराधीना न मां रक्षितुं समर्था । जनन्यपेक्षयापि सहपांसुक्रीडनादिभिः समदुःखसुखाः स्वमनोनिर्विशेषाः सख्यस्तथापि भवती मद्विषयेऽस्वतन्त्रत्वान्न रक्षणक्षमा । किं तु यदि रक्षणे समर्थः स्यात्स एवैकोऽमृतसंजीवनौषधिरिव माधवः । स च मम दुर्लभ एवेति मरणमेवेदानीं शरणम्, नान्यत्किंचिदित्यर्थः । विषज्वलनज्वराख्योपमानत्रयोपादानं नैकेनायमुपमातुं शक्यत इत्यतिशयसूचनार्थम् । संज्वरोन्मादौ चानेनोक्तौ । तल्लक्षणं प्रागेवोक्तम् ॥ १ ॥ **लवङ्गिका** । एवमेतत् । प्रत्यक्षसौख्यदायिनः परोक्षदुःखदुःसहाः सज्जनसमागमा भवन्ति । नेदमाश्चर्यं यदत्र संतापः । कुत इत्यत्र हेतुमाह—**अपि चेति** । **प्रियसखीति** । यस्य वातायनान्तरमुहूर्तदर्शनेनापि सुसमिद्धहुतवहायमानपूर्णचन्द्रोदया निष्करुणकामव्यापारसंशयितजीविता ते शरीरावस्था । भवतीति शेषः । तस्यैव सांप्रतं सविशेषदर्शनेनाद्य संतप्यस इति किमत्र भणितव्यम् । तदत्र प्रियसखि, श्लाघनीयं दुर्लभविषये यो मनोरथस्तस्य

एत्थ पिअसहि, सलाहणिज्जं दुल्लहमणोरहफलं जीअलोअस्स जं गुरुआणुराअसरिसो महाभाअवल्लहसमाअमो त्ति एत्तिअं जाणीमो।

**मालती**—सहि, दइदमालदीजीविदे साहसोवण्णासिणि, अवेहि। (सास्रम्।) अहवा। अहं एव्व वारंवारं विलोअअन्ती पलाअंतपढिट्ठाविदधीरत्थणावट्ठम्भेण अत्तणो हिअएण दूरं विलीअन्तलज्जत्तेण दुव्विणअलहुआ एत्थ अवरद्धम्मि। तहावि पिअसहि। (संस्कृतमाश्रित्य।)

---

तव्यम्। तदत्र प्रियसखि, श्लाघनीयं दुर्लभमनोरथफलं जीवलोकस्य यद्गुरुकानुरागसदृशो महाभागवल्लभसमागम इत्येतावज्जानीमः।

१ सखि, दयितमालतीजीविते साहसोपन्यासिनि, अपेहि। अथवा। अहमेव वारंवारं विलोकयन्ती पलायमानप्रतिष्ठापितधीरत्वावष्टम्भेनात्मनो हृदयेन दूरं विलीयमानलज्जात्वेन दुर्विनयलघ्व्यत्रापराध्यामि। तथापि प्रियसखि।

---

फलं तत्सिद्धिरूपं जीवलोकस्य प्राणिवर्गस्यैतदेव यद्गुरुकानुरागस्य गरीयसः परस्परप्रेमबन्धस्य सदृशोऽनुरूपो महाभागवल्लभसमागम इत्येतावज्जानीमो वयम्। शरीरवियोगानन्तरं कस्य किं वा फलमिति केवलं शिवो वेद। जीवतां पुनः स्वजन्मसाफल्यमभिलषतां प्राग्भवीयसुचरितातिरेकात्तुल्यानुरागो महाभागश्च प्रणयिजनो यदि लभ्यते, तर्हि यथाकथंचिदपि तत्समागम एव श्लाघ्यं मनोरथफलमित्येष सकलजनसंमतो राद्धान्त इत्यर्थः॥ **मालती**। सखि, दयितमालतीजीविते साहसोपन्यासिनि, अपेहि। तव तावन्मदीयं जीवितमेव दयितं प्रियतमम्। तेन मज्जीवलोभेन कन्यकाजनविरुद्धमत्यन्तगुरुबन्धुवर्गानङ्गीकृताशयं कुलकलङ्कं स्वयमेव स्वप्रदानसाहसं उपन्यस्यसि। नैवमुपदेष्टव्यम्। ततः साहसोपदेशादपसरेति निषेधो वाच्यः। तवैव मे जीवितं दयितम्, न तु गुरूणामन्येषाम्। तस्मात्त्वयैव प्राणसख्या मम मनो यथा शङ्काशूकविहीनं भवति तथोपदेष्टव्यमिति विधिर्व्यङ्ग्यः। **सास्रमिति**। स्नेहात्केवलं त्वया यद्यपि साहसोपदेशः क्रियते तथाप्युपदेशमात्रेण न तत्फलिष्यति। केवलं गुरुजनाज्ञातिक्रमणसाहसाध्यवसायः कृतो भवेत्। ततो ममाविनयस्य फलं मयैवानुभोक्तव्यम्। किमत्र त्वया कर्तव्यमिति रुदन्त्याहेत्यर्थः। अथवा। अहमेव वारंवारं बहुकृत्वो विलोकयन्ती। तस्येत्यध्याहारः। पलायमानं सत्प्रतिष्ठापितं पुनर्निरुध्य स्थापितं यद्धीरत्वं तस्यावष्टम्भोऽवलम्बनं यस्य तादृशेनात्मनो हृदयेन दूरं विलीयमानलज्जात्वेन दुर्विनयलघ्व्यत्रापराध्यामि। कुलकुमारीजनमर्यादामतिलङ्घ्य बहुशस्तमवलोकयन्त्या मम नैतद्व्यसनं गरीय इति भावः। विलोकयन्तीति चक्षुःप्रीतिः, पलायमानेति चित्तासङ्गः, दूरं विलीयमानेति त्रपानाशश्च कथित इति द्रष्टव्यम्। तथापि प्रिय-

ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किं वा मृत्योः परेण विधास्यतः ।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥ २ ॥

**लवङ्गिका**—( स्वगतम् । ) [1]एत्थ दाणीं को उवाओ ।

( नेपथ्यार्धप्रविष्टा ।)

**प्रतिहारी**—[2]ऐसा भअवदी कामन्दई ।

**उभे**—[3]किं भअवई ।

**प्रतिहारी**—[4]भट्टिदारिअं दट्ठुआमा आअदा ।

**उभे**—[5]तदो किं विलम्बिअदि ।

---

१. अत्रेदानीं क उपायः ।
२. एषा भगवती कामन्दकी ।
३. किं भगवती ।
४. भर्तृदारिकां द्रष्टुकामागता ।
५. ततः किं विलम्ब्यते ।

---

सखि । **ज्वलत्वित्यादि** । रात्रौ रात्रौ सर्वासु शुक्लकृष्णपक्षरात्रिषु मद्वैरात्परित्यक्तस्वीयकालनियमोऽत एव सर्वदाखण्डकलो विरहिजनजीवितेन्धननिचयजाज्वल्यमानसंपूर्णकलाच्छलज्वालाजालजटिलः शशी विप्रयुक्ताबलाजनवधपातकेनैव शशाख्येन धूमेनाङ्कितो विपरीतलक्षणया शिशिरकरादिव्यपदेश्यो दहनो ज्वलतु । यथेच्छं मामेवेन्धनं दहतु । तमेव दहनमादाय मदन एव दहतु । उभौ चैतौ मृत्योः परेण मरणादधिकं किं वा विधास्यतः करिष्यतः । स च मृत्युर्मयैवाङ्गीकृत इत्यङ्गीकृता ग्लानिर्दोषायेति भावः । मम पुनः श्लाघ्यो निखिलजनश्लाघनीयगुणस्तातो दयितः । निर्मलकुलप्रसूता जननी दयिता । अमलिनमियन्तं कालं कलङ्कलेशेनापि विवर्जितं कुलं दयितम् । न पुनरयं हृदयवर्तिजीवितादपि स्पृहणीयत्वात्ततोऽपि प्रथमपरिगणनीयो माधवाख्यो जनो दयितः । तथा तं विना वराकप्रायं तत्परित्यागसाहसव्यवसायेऽप्यविलीयमानतयातिकृतघ्नम् । अत एव पश्चादुपात्तं जीवितमपि न दयितमिति वाच्योऽर्थः । भावस्तु बहुधा परिस्फुरन्नपि विस्तरभयान्न लिखितः सहृदयैरूहनीयः ॥ २ ॥ **लवङ्गिका** । स्वगतम् । अत्रेदानीं क उपायः । मया सूचितं साहसोपदेशं न गृहीतवती, संनिहिता चान्तिमा दशा । किमत्र विधेयमित्यर्थः ॥ अत्रेदानीं क उपाय इति विचारयन्त्या लवङ्गिकाया उपश्रुतिव्याजेनोपायमिवोपदिशन्ती नेपथ्यार्धप्रविष्टा प्रतिहारी वदति—एषा भगवती कामन्दकीति ॥ अत्रेदानीं क उपाय इति संबन्धप्रतीत्या

( निष्क्रान्ता प्रतिहारी । मालती चित्रं छादयति । )

**लवङ्गिका**—(स्वगतम् ।) सुसमाहिदं क्खु जादम् ।

( ततः प्रविशति कामन्दक्यवलोकिता च । )

**कामन्दकी**—साधु सखे भूरिवसो, साधु । प्रभवति निजस्य कन्यकाजनस्य देव इत्युभयलोकाविरुद्धमुत्तरमुपन्यस्तम् । अपि च । अद्य मन्मथोद्यानवृत्तान्तेन भगवतो विधेरप्यनुकूलतामवगच्छामि । बकुलावलीचित्रफलकव्यतिकरस्तु कमप्यद्भुततमं प्रमोदमुल्लासयति । इतरेतरानुरागो हि विवाहकर्मणि परार्ध्यं मङ्गलम् । गीतश्चायमर्थोऽङ्गिरसा यस्यां मनश्चक्षुषोर्निर्बन्धस्तस्यामृद्धिरिति ।

**अवलोकिता**—ऐसा मालदी ।

---

१. सुसमाहितं खलु जातम् ।

२. एषा मालती ।

---

वगत इति नोक्तम् । अत एव मालतीलवङ्गिके पृच्छतः—किं भगवती संदिशति । आगच्छतीत्यर्थः ॥ **प्रतिहारी** । भर्तृदारिकां द्रष्टुकामागता—**उभे** । किं ततो विलम्ब्यते । बहिरेव । भवत्येति शेषः ॥ **लवङ्गिका** । स्वगतम् । सुसमाहितं खलु जातम् । भद्रं संपन्नं यत इदानीमेव भगवती समागतेत्यर्थः ॥ **कामन्दकी—साध्वित्यादि** । उभयलोकाविरुद्धमुभयोर्लोकयोरिहलोकपरलोकयोरविरुद्धं छलोक्तिरूपतया सत्यानृतात्मकम् । तथा हि सर्वो ह्यसत्कुटुम्बो महाराजस्य परिकरः । तेन निजस्य स्वकीयस्य यथेष्टविनियोगार्हस्य कन्यकाजनस्य देवः प्रभवतीति राजचित्तानुरञ्जनेनैहिकसुखहेतुत्वादिहलोकाविरुद्धत्वम् । निजस्यैव कन्यकाजनस्य प्रभवति देवः । न तु मदीयस्येति सत्यस्यैवोक्तत्वात्पूर्वप्रवृत्तसुहृत्संबन्धप्रतिज्ञाभङ्गप्रत्यवायपरिहाराच्च परलोकाविरुद्धत्वम् । अयं भावः—यदि राज्ञा याचितो न दास्यामीति मुखतो निषेधाद्दृष्टेन राजाज्ञोल्लङ्घनदोषेण दण्डनीयो भवेत् । अथ यदि राजदाक्षिण्येन ददामीति निश्चित्य वदेत्सुहृत्संबन्धप्रतिज्ञानिर्वाहाय परमुखप्रवृत्त्या कृतविवाहोद्योगः सन्नन्यथाभाषणदोषेण प्रत्यवायः स्यात् । एवं तु च्छलेन वदन्नुभयलोकविरुद्धमुक्तवानिति । यद्वा उभयोर्लोकयोर्व्यवहारयोः कृत्रिमविवाहनन्दनानुसरणरूपयोरविरुद्धम् । यद्वा उभयोर्लोकयोर्जनयोर्माधवनन्दनवर्ग्ययोरविरुद्धमिति । दृष्टसामग्रीमुक्त्वा दैवानुकूल्यमप्यस्तीत्याह—**अपि चेति** । व्यतिकरो विनिमयः । मालतीलिखितचित्रफलकस्य माधवेन दर्शनं माधवग्रथितबकुलदाम्नो मालतीकण्ठाभरणत्वमित्येवं व्यतिकरः परिवृत्तिः । प्रमोदं प्रकृष्टं हर्षमुल्लासयति । इतरेतरानुरागप्रकर्षहेतुत्वात्स एव चेह बीजमित्याह—**इतरेति** । परार्ध्यं श्रेष्ठम् । निर्बन्ध आसक्तिः । ऋद्धिर्मङ्गलोद्गमः ॥

**कामन्दकी**—( निर्वर्ण्य । )

निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा
कलाशेषा मूर्तिः शशिन इव नेत्रोत्सवकरी ।
अवस्थामापन्ना मदनदहनोद्दाहविधुरा-
मियं नः कल्याणी रमयति मनः कम्पयति च ॥ ३ ॥

अपि च ।

परिपाण्डुपांसुलकपोलमाननं
दधती मनोहरतरत्वमागता ।
रमणीयजन्मनि जने परिभ्रमँ-
ल्ललितो विधिर्विजयते हि मान्मथः ॥ ४ ॥

नियतमनया संकल्पनिर्मितः प्रियसमागमोऽनुभूयते । तथा ह्यस्या

नीवीबन्धोच्छ्वसनमधरस्पन्दनं दोर्विषादः
स्वेदश्चक्षुर्मसृणमुकुलाकेकरस्निग्धमुग्धम् ।

---

**अवलोकिता** । एषा मालती ॥ **कामन्दकी—निकाममित्यादि** । अत्यर्थं कृशाङ्गी । कार्श्यं नाम मदनावस्था दर्शिता । सरसकदलीगर्भवत्सुभगेति मार्दवं सौकुमार्यं पाण्डुता कार्श्यं च प्रकाश्यते । एवमतिकृशत्वेऽपि कृष्णचतुर्दश्यां कलामात्रशेषा शशिनो मूर्तिरिव नयनानन्दकारिणी । मदनदहनेन यदुद्भवो दाहस्तेन विधुरां विह्वलामवस्थामापन्ना प्राप्ता । कल्याणी मङ्गललक्षणोपेता । इयं नोऽस्माकं मनो रमयत्यस्मद्व्यापारानुकूलमाधवानुरागप्रकर्षसूचकावस्थाशालित्वादाह्लादयति कम्पयति च । दुःसहमन्मथव्यथादूयमानतया सुकुमारतया च कदाचिदनिष्टाशङ्कयोद्वेजयति चेत्यर्थः ॥ ३ ॥ **परीति** । पाण्डुपांसुलौ क्रियाद्वेषेण कुङ्कुमानुलेपनादिसंस्कारशून्यतया धूसरौ कपोलौ यस्य तादृशमाननं दधत्यपि कथमियमतिशयेन मनोहरत्वं प्राप्ता चित्रमिदम् । अथवा नेदमाश्चर्यं यतो रमणीयजन्मनि सहचरसौन्दर्यशालिनि जने परिभ्रमंस्तत्र व्याप्रियमाणो ललितः सुकुमारो मान्मथो विधिरवस्थाविशेषो विजयते सर्वोत्कर्षेण प्रकाशते । सहजसौन्दर्यशालिनां मन्मथविकारोऽपि शोभातिशयं पुष्णातीत्यर्थः ॥४॥ नियतं निश्चितम् । यतः संभोगानुभावा दृश्यन्त इति भावः । तानेवाह—तथा ह्यस्या इत्युपस्कारः । **नीवीत्यादि** । नीवी नामान्तरीयनिवसनग्रन्थिरुच्छयाख्यः । तत्संबन्धस्योच्छ्वसनं श्लथत्वम् । उपलभ्यत इत्यध्याहार्यं क्रियासंबन्धः-सर्वत्र द्रष्टव्यः । बाह्यसंभोगानन्तरं रतारम्भसमये क्रमेण कुचकलशदोर्मूलनाभिप्रदेशसंचारिणः काञ्चीदामाकर्षणव्यग्रस्य प्रियतमकरस्य भावनया तत्स्पर्शसुखनिर्भरोद्भिन्ननितम्बबिम्बविस्रंसमाननीवीयमुपलक्ष्यत इति भावः । रतारम्भविधानं रतिरहस्ये यथा—

गात्रस्तम्भः स्तनमुकुलयोरुत्प्रबन्धः प्रकम्पो
गण्डाभोगे पुलकपटलं मूर्छना चेतना च ॥ ५ ॥

(उपसर्पति ।)

(लवङ्गिका मालतीं चालयति । उभे उत्तिष्ठतः ।)

**मालती**—[1]भअवदि, वन्दामि ।

**कामन्दकी**—महाभागधेयजन्मतायाः फलस्य भाजनं भूयाः ।

**लवङ्गिका**—[2]भअवदि, एदं पवित्तं आसणम् ।

---

१. भगवति, वन्दे ।

२. भगवति, एतत्पवित्रमासनम् ।

---

'अलिकचिबुकगण्डं नासिकाग्रं च चुम्बन्पुनरुपहितसीत्कं तालु जिह्वां च भूयः । कलितललितनाभीकक्षवक्षोरुहोरुः श्लथयति दृढधैर्यः क्षोभयित्वाथ नीवीम् ॥' इति । अधरस्पन्दनमित्यनेन त्रितयमपि तदेतत्कन्यकायां प्रयोज्यमिति कन्यकाजनविहितस्य विकुञ्चितस्फुरितघटिताख्यचुम्बनत्रयस्य मध्ये स्फुरितं नाम चुम्बनमुक्तम् । तल्लक्षणं रतिरहस्ये—'स्फुरितमधिमुखान्तन्यस्तमोष्ठं जिघृक्षुः स्फुरदधरपुटाभ्यां यत्र गृह्णाति भर्ता' इति । दोर्विषादो भुजलताशैथिल्यम् । अनेन नायकस्य रतितन्त्रचतुरतया पूर्वमेव नायिकाया रतिभावप्राप्तिरुक्ता । यदाह—'स्निग्धता वपुषि मीलनं दृशोर्मूर्च्छना च रतिलाभलक्षणम्' । इति । स्वेदः सात्त्विकभावविशेषो रतिजन्यः । यदाह—'वपुर्जलोद्गमस्वेदोरतिघर्मश्रमादिभिः' इति ॥ चक्षुश्चास्या मसृणं मुकुलमाकेकरं स्निग्धमुग्धं च । 'मसृणमधुरम्' इति क्वचित्पाठः । सुखपारवश्यादुपजायमानदृष्टिविकारविशेषा मसृणादयः । तत्राकेकरदृष्टिर्यथा—'आकुञ्चितपुटापाङ्गसंगतार्धनिमेषिणी । मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा स्मृता ॥' मधुरं यथा—'शीतलीक्रियते तापो येन तन्मधुरं स्मृतम्' । इति । मसृणमुकुलस्निग्धमुग्धानां लक्षणं स्तिमितालसेति श्लोकद्वयव्याख्यानावसरे प्रागेवोक्तम् । गात्रस्य स्तम्भो रागवशान्निश्चेष्टत्वं सात्त्विकभावः । यथा—'स्तम्भश्चेष्टाप्रतीघातो भयरागमदादिभिः' इति । स्तनमुकुलयोरुल्लङ्घितः प्रबन्धः प्रकृष्टो बन्धः प्रबन्धः स्थैर्यं येन तादृशः । प्रकम्पो वेपथुः सात्विकभावः । यथा—'रागरोगभयादिभ्यः कम्पो गात्रस्य वेपथुः' इति । गण्डाभोगे विस्तारिणि कपोलतले पुलकपटलं रोमाञ्चः सात्त्विकभावः । यथा—'रागरोगाङ्गरागाद्यै रोमाञ्चो रोमविक्रिया' इति । मूर्छना संज्ञाशैथिल्यम् । प्रलयो नाम सात्त्विकभावः । यथा—'अस्तेन्द्रियत्वं प्रलयः सुखदुःखभयादिभिः' इति । अस्तेन्द्रियत्वमिन्द्रियव्यापारोपरमश्चेतना च वर्तते । तेन नात्यन्तिकः प्रलय इति भावः । एवमनुभावनिबन्धपरिपोषात्समुचितव्यभिचार्यालम्बनप्रतीतेश्च संभोगशृङ्गारो व्यापारः ॥५॥ **लवङ्गिका** । चालयति । प्रियसंभोगानुभवनिमीलितनेत्रां बोधयतीत्यर्थः । **मालती** । भगवति, वन्दे ॥ **कामन्दकी** । फलस्य तादृशवरसमागमलक्षणस्य ॥ **लवङ्गिका** । भगवति, एतत्पवित्रमासनम् । 'विविक्तम्' इति पाठे

( सर्वा उपविशन्ति । )

**मालती**—कुसलं[1] भअवदीए ।

**कामन्दकी**—( निःश्वस्य । ) कुशलमिव ।

**लवङ्गिका**—( स्वगतम् । ) पत्थावणा[2] क्खु एसा कवडणाडअस्स । (प्रकाशम् ।) गुरुअबाहभरत्थम्भमन्थरिदकण्ठप्पडिलग्गणिग्गमं अण्णारिसं विअ अज्ज भअवदीए वअणम् । ता किं दाणीं उव्वेअकारणं हविस्सदि ।

**कामन्दकी**—नन्वयमेव चीरचीवरविरुद्धः परिचयः ।

**लवङ्गिका**—कहं[3] विअ ।

**कामन्दकी**—अयि, त्वमपि किं न जानीषे ।

इदमिह मदनस्य जैत्रमस्त्रं
सहजविलासनिबन्धनं शरीरम् ।

---

१. कुशलं भगवत्याः ।

२. प्रस्तावना खल्वेषा कपटनाटकस्य । गुरुकवाष्पभरस्तम्भमन्थरितकण्ठप्रतिलग्ननिर्गममन्यादृशमिवाद्य भगवत्या वचनम् । तत्किमिदानीमुद्वेगकारणं भविष्यति ।

३. कथमिव ।

---

शुद्धमित्यर्थः ॥ **मालती** । कुशलं भगवत्याः ॥ **कामन्दकी** । निःश्वस्य । कुशलमिव ॥ **लवङ्गिका** । स्वगतम् । प्रस्तावना खल्वेषा कपटनाटकस्य । कपटमसदृशवरप्रदाने वार्तोपन्यासच्छलेनोद्वेगमुत्पाद्य मालतीमनसि कृत्रिमपरिणयाध्यवसायदृढीकरणं तदेव नाटकम् । तस्यैषा निःश्वाससहकृता कुशलमिवेति वास्तवकुशलाभावोक्तिः प्रस्तावना । आमुखमित्यर्थः । निःश्वासेवशब्दद्योतितां तस्या वैयाकुलीमेव स्फोरयितुं तां पृच्छति । प्रकाशम् । गुरुकवाष्पभरस्तम्भमन्थरितकण्ठप्रतिलग्ननिर्गममन्यादृशमिवाद्य भगवत्या वचनम् । तत्किमिदानीमुद्वेगकारणं भविष्यति ॥ **कामन्दकी** । चीरैर्जीर्णवस्त्रखण्डैर्निर्मितस्य चीवरस्य कन्थायाः तत्परिग्रहोपलक्षितस्य । परिव्राजकस्येति यावत् । विरुद्धो भवादृशेन संसारिजनेन सहायं परिचय एव । उद्वेगनिमित्तमित्यर्थः ॥ **लवङ्गिका** । कथमिव । अस्मत्परिचयः कथमुद्वेगहेतुस्तद्वक्तव्यमित्यर्थः ॥ **कामन्दकी** । अयीति संबोधने । त्वमपि । त्वया खलु प्राणसख्या सर्वं मालत्या इष्टमनिष्टं च विचारणीयम् । तत ईदृशमनिष्टमिदानीमपि कथं त्वया न ज्ञातमित्यर्थः । **इदमिति** । मदनस्य जयशीलमायुधमकृत्रिमविलासास्पदमिदं मालत्याः शरीरम् । अनुचिताय येन केनचिदपि कुलशीलरूपयौवनादिना वरगुणेन संबन्धायोग्याय वराय यत्संप्रदानं राजदाक्षिण्याद्भूरिवसुना चिकीर्षितं तेन शोच्यं

अनुचितवरसंप्रदानशोच्यं
विफलगुणातिशयं भविष्यतीति ॥ ६ ॥

(मालती वैचित्र्यं नाटयति ।)

**लवङ्गिका**—[1]अत्थि एदं जं णरेन्दवअणाणुरोहेण णन्दणस्स पडिवण्णा मालदित्ति सअलो जणो अमच्चं जुउच्छइ ।

**मालती**—(स्वगतम् ।) [2]कहं उवहारीकिदह्मि राइणो तादेण ।

**कामन्दकी**—आश्चर्यम् ।

गुणापेक्षाशून्यं कथमिदमुपक्रान्तमथवा
कुतोऽपत्यस्नेहः कुटिलनयनिष्णातमनसाम् ।
इदं त्वैदंपर्यं यदुत नृपतेर्नर्मसचिवः
सुतादानान्मित्रं भवतु स भवान्नन्दन इति ॥ ७ ॥

**मालती**—(स्वगतम् ।) [3]राआराहणं क्खु तादस्स गुरुअं, ण उण मालदी ।

---

१. अस्त्येतद्यन्नरेन्द्रवचनानुरोधेन नन्दनस्य प्रतिपन्ना मालतीति सकलो जनोऽमात्यं जुगुप्सते ।

२. कथमुपहारीकृतास्मि राज्ञस्तातेन ।

३. राजाराधनं खलु तातस्य गुरुकम्, न पुनर्मालती ।

---

दुःखजनकम् । अत एव समानुरागसदृशवरसंप्रयोगाभावाच्च विफलगुणातिशयं भः
विष्यतीति हेतोर्बाल्यादेतस्यां दुहितृनिर्विशेषं कृतवात्सल्यायां महानुद्वेग इत्यर्थ-
॥६॥ **मालती** । वैचित्र्यं वैलक्षण्यम् ॥ **लवङ्गिका** । अस्त्येतद्यन्नरेन्द्रवचनानुरो-
धेन नन्दनस्य प्रतिपन्ना मालतीति सकलो जनोऽमात्यं जुगुप्सत इति । सर्वलोक-
जुगुप्सितत्वेन पिता भूरिवसुः परित्याज्य इति भावः ॥ **मालती** । स्वगतम् ।
कथमुपहारीकृतास्मि राज्ञस्तातेन । यथा दुर्गायै पशूपहारं दत्वा कश्चित्स्वाभिलषितं
साधयति, तथा स्वकार्यमात्रपरेणापत्यस्नेहविहीनेन तातेन कथं मरणायैव राजाधी-
नाहं कृतेत्यर्थः । यद्वा संनिहितविदूषकग्राह्यं फलादिकमिवोपायनं कथं कृतास्मी-
त्यर्थः ॥ **कामन्दकी** । **गुणापेक्षेति** । कुलरूपवयोविद्याप्रभृतिवरगुणापेक्षया शू-
न्यमिदं नन्दनाय सुताप्रदानरूपं वैशसनं कथमुपक्रान्तममात्येन । अथवा कुटिल-
नयः स्वजनव्ययेनापि स्वकृत्यनिर्वाहोपायस्तत्र निष्णातं कुशलम् । 'निनदीभ्यां
स्नातेः कौशले' इति मूर्धन्यादेशः । मनो येषां तेषामपत्यस्नेहः कुतः । ततो नेद-
माश्चर्यमित्यर्थः । अपत्यव्ययेनापि कार्यं साधयतस्तस्य कोऽभिप्राय इत्यत आह—
इदं त्विति । नृपतेर्नर्मसचिवः स भवान्पूज्यो नन्दनः सुतादानान्मित्रं भवत्विति
यदिदं त्वैदंपर्यं तात्पर्यम् ॥ ७ ॥ **मालती** । राजाराधनं खलु तातस्य गुरुकम्,

**लवङ्गिका**—[1]जहा भअवदी आणवेदि तं तह एव्व । अण्णहा तस्सिं वरे दुद्दंसणे अदिक्कन्दजोव्वणे किं ति ण विआरिदं अमच्चेण ।

**मालती**—(स्वगतम् ।) [2]हा, हदह्मि समुपत्थिदाणत्थवज्जपडणा मन्दभाइणी ।

**लवङ्गिका**—[3]ता पसीद । भअवदि, परित्ताहि एत्तो जीवन्तमरणादो पिअसहिं । तुह वि एसा दुहिदा एव्व ।

**कामन्दकी**—अयि सरले, किमत्र भगवत्या शक्यम् । प्रभवति प्रायः कुमारीणां जनयिता दैवं च । यच्च किल कौशिकी शकुन्तला दुष्यन्तमप्सराः पुरूरवसं चकम उर्वशीत्याख्यानविद आचक्षते, वासवदत्ता च पित्रा संजयाय राज्ञे दत्तमात्मानमुदयनाय प्रायच्छदित्यादि, तदपि साहसकल्पमित्यनुपदेष्टव्यमेव । सर्वथा

राज्ञः प्रियाय सुहृदे सचिवाय कार्या-
द्दत्वात्मजां भवतु निर्वृतिमानमात्यः ।

---

१. यथा भगवत्याज्ञापयति तत्तथैव । अन्यथा तस्मिन्वरे दुर्दर्शनेऽतिक्रान्तयौवने किमिति न विचारितममात्येन ।

२. हा, हतास्मि समुपस्थितानर्थवज्रपतना मन्दभाग्या ।

३. तत्प्रसीद । भगवति, परित्रायस्वास्माज्जीवन्मरणात्प्रियसखीम् । तवाप्येषा दुहितैव ।

---

न पुनर्मालती ॥ **लवङ्गिका** । यथा भगवत्याज्ञापयति । कुतोऽपत्यस्नेह इत्यादि यदुक्तं तत्तथैव । अन्यथा तस्मिन्वरे दुर्दर्शने कुरूपेऽतिक्रान्तयौवने किमिति न विचारितममात्येन ॥ **मालती** । स्वगतम् । हा, हतास्मि समुपस्थितानर्थवज्रपतना मन्दभाग्या ॥ **लवङ्गिका** । तत्प्रसीद । भगवति, परित्रायस्वास्माज्जीवन्मरणात्प्रियसखीम् । तवाप्येषा दुहितैव । त्वमप्यस्या मातृत्वादभिमताय वराय दातुमीशिष इति भावः ॥ **कामन्दकी** । अयि सरले, ऋजुप्रकृतिके । दैवं चेति । जनकमप्युल्लङ्घ्य यदि करोति दैवमेव करोति नान्य इत्यर्थः । दैवानुकूल्यमस्ति चेन्मया नोपेक्ष्यत इति भावः । **यच्चेति** । यच्छकुन्तलादिभिः कृतं तत्साहसमिति कृत्वा नोपदेष्टुं योग्यम् । शास्त्रलोकप्रसिद्ध्यादिभिर्यन्निवेदितं तत्र यदि स्वयमेव स्वात्महितं विचार्य प्रवर्तते तदा साहाय्यमात्रमस्माभिः कर्तुं शक्यम् । न तु कर्तव्यमित्युपदेष्टुं शक्यमित्यर्थः । अथ च साहसमित्येवं नोपदेष्टव्यम । किं तु स्वजीवितव्यये प्राप्त इदमेव युक्तमित्येवोपदेष्टव्यमित्यपि प्रतीतिः । अनेन माधवस्य समागमानुगुणप्रोत्साहनं भेदयति । सर्वथेत्युपस्कारः । **राज्ञ इति** । राज्ञः प्रियाय प्रेमभाजनाय सुहृदे सौहार्दशालिने । प्रियसुहृदोः किंचिद्भेदाद्भेदेनोपादानम् । तद्यथा भावप्रकाशे–'सत्यवागार्जवरतिरुपकुर्वन्प्रियं वदन् ।

दुर्दर्शनेन घटतामियमप्यनेन
धूमग्रहेण विमला शशिनः कलेव ॥ ८ ॥

**मालती**—(स्वगतम् ।) हा[1] ताद, तुमं वि मम णाम एव्वं त्ति जिदं भोगतिण्हाए ।

**अवलोकिता**—चिराइदं[2] भअवदीए । णं भणामि अस्सत्थ-चित्तो महाभाओ माहवो त्ति ।

**कामन्दकी**—इदं गम्यते । वत्से, अनुजानीहि माम् ।

**लवङ्गिका**—(जनान्तिकम् ।) सहि[3] मालदि, संपदं भअवदीए सआसादो तस्स महाणुहावस्स उग्गमं जाणीमो ।

---

१. हा तात, त्वमपि मम नामैवमिति जितं भोगतृष्णया ।

२. चिरायितं भगवत्या । ननु भणाम्यस्वस्थचित्तो महाभागो माधव इति ।

३. सखि मालति, सांप्रतं भगवत्याः सकाशात्तस्य महानुभावस्योद्गमं जानीमः ।

---

भजते यः स्वयं प्रीतिं प्रियः स परीकीर्तितः ॥ दुःखे विपदि संमोहे कार्यकालात्यये-ऽपि च । हितान्वेषी च हितकृद्यः सुहृत्सोऽभिधीयते॥'इति । तेनातीव विस्रम्भस्था-नत्वं सूचितं न केवलं मित्रमात्रम् । अपि तु सचिवाय स्वतुल्याय नन्दनायात्मजां कार्याद्धेतोर्दत्त्वामात्यो निर्वृतिमान्भवतु। संप्रधारणे लोट् । दुर्दर्शनादेवानर्थहेतुना-नेन नन्दनेन सह धूमग्रहेण । धूमकेतुरपि । दर्शनादेवानर्थं सूचयति । विमला चन्द्र-कलेव । इयमपि घटतां नियतेर्दुर्लङ्घ्यत्वादिति भावः । इदं च संप्रसारणं मालत्या उद्वेगातिशयजननेन स्वविधेयतानयनार्थम् ॥ ८ ॥ **मालती** । स्वगतम् । हा तात, त्वमपि मम नामैवमिति जितं भोगतृष्णया। त्वमप्यपत्यवत्सलो विवेकी च। मम नाम नान्यदीयस्य जनस्य स्नेहैकालम्बनाया दुहितुरपि। एवं जीवितनिरपेक्षः।भोगतृष्णये-त्युक्ते केनान्येन भोगतृष्णा जेतव्या । तस्मात्तया जितम् । अकुण्ठितप्रसरत्वं प्राप्तमि-त्यर्थः । एवं नन्दनस्य दुष्टताममात्यस्य च स्वकार्यैकपरतामुक्त्वानन्तरं माधवस्य कु-लरूपवैदग्ध्यप्रकाशनेनानुकूल्यं विवक्षन्त्या कामन्दक्या अभिप्रायज्ञावलोकिता गम-नकालनिवेदनव्याजेन प्रसङ्गं संपादयति ॥ **अवलोकिता** । चिरायितं भगवत्या । त्वरितं गन्तव्य-मिति शेषः । **कामन्दकी** । इदं गम्यते । इदमिति गमनक्रियाविशेषणम् । प्रत्यक्षत्व-कथनेन संनिधानसूचनार्थमिदम् ॥ **लवङ्गिका** । जनान्तिकलक्षणं तूक्तम् । उभयो-रभिप्रायज्ञा लवङ्गिका कामन्दक्या विवक्षां मालत्याः शुश्रूषां ज्ञात्वा शनैर्मालत्याः कर्णे वदतीत्यर्थः । सखि मालति, सांप्रतं भगवत्याः सकाशात्तस्य महानुभावस्योद्गममुत्प-

**मालती**—(जनान्तिकम्।) [1]अत्थि मे कोऊहलम्।

**लवङ्गिका**—(प्रकाशम्।) [2]को एसो माहवो णाम, जस्सिं भअवदी एव्वं सिणेहगुरुअं अत्ताणं धारेदि।

**कामन्दकी**—अप्रस्ताविनी महत्येषा कथा।

**लवङ्गिका**—[3]तह वि आअक्खिअ भअवदी पसादं करेदु।

**कामन्दकी**—श्रूयताम्। अस्ति विदर्भराजस्यामात्यः समग्रपुरुषप्रकाण्डचक्रचूडामणिर्देवरातो नाम। यमशेषभुवनमहनीयपुण्यमहिमानमात्मनः सातीर्थ्यात्पितैव ते जानाति योऽसौ यादृशश्चेति। अपि च।

व्यतिकरितदिगन्ताः श्वेतमानैर्यशोभिः
सुकृतविलसितानां स्थानमूर्जस्वलानाम्।
अगणितमहिमानः केतनं मङ्गलानां
कथमिव भुवनेऽस्मिंस्तादृशाः संभवन्ति ॥ ९ ॥

---

१. अस्ति मे कौतूहलम्।
२. क एष माधवो नाम; यस्मिन्भगवत्येवं स्नेहगुरुकमात्मानं धारयति।
३. तथाप्याख्याय भगवती प्रसादं करोतु।

---

त्तिस्थानं कुलं विशुद्धमिति यावज्जानीमः ॥ **मालती**। जनान्तिकमेव। अस्ति मे कौतूहलम्। अस्मिन्नर्थे तत्पृच्छेत्यर्थः ॥ **लवङ्गिका**। प्रकाशम्। क एष माधवो नाम, यस्मिन्भगवत्येवं स्नेहगुरुकमात्मानं धारयति ॥ **कामन्दकी**। अप्रस्ताविनी प्रस्तावनानुपयुक्ता। महती बहुवक्तव्यसद्भावाद्विस्तृता। शीघ्रं मया गन्तव्यम्। तदिदानीमवसराभावादप्रस्तुतत्वाच्च किमनया। शुश्रूषातिशयोत्पादनार्थमनादरोक्तिः ॥ **लवङ्गिका**। तथाप्याख्याय भगवती प्रसादं करोतु ॥ **कामन्दकी-श्रूयतामिति**। समग्रस्य कृत्स्नस्य पुरुषप्रकाण्डचक्रस्य पुरुषश्रेष्ठसमूहस्य चूडामणिश्चूडारत्नम्। श्रेष्ठ इत्यर्थः। सातीर्थ्यं सहाध्ययनम्। 'सतीर्थ्यास्त्वेकगुरवः' इत्यमरः। **व्यतिकरितेति**। श्वेतमानैर्धवलीभवद्भिर्यशोभिर्व्यतिकरिता जातव्यतिकरा दिगन्ता येषां ते। व्यतिकरो मिश्रीभावः। ऊर्जस्वलानां प्रबलानाम्। राशीभूतानामिति यावत्। सुकृतविलसितानां भागधेयविजृम्भणानाम्। 'प्रकृतिविलसितानाम्' इति पाठे स्वभावोत्कर्षाणां स्थानमास्पदम्। अगणितमहिमानोऽपरिच्छेद्यानुभावा मङ्गलानामभ्युदयानां केतनं चिह्नभूता वा यत्र ते तत्र मङ्गलमिति। तादृशा अस्मिन्भुवने कथमिव संभवन्ति। न कथंचिदित्यर्थः। **व्यतिकरितेति**। व्यतिकरो व्याप्तिर्मिश्रणं वास्य संजातो येभ्यो येषु दिगन्तेषु। चेतयन्ति चेतयमानानि। केतनं चिह्नं मङ्गलानामभ्युदयानां यत्र तादृशाः पुरुषास्तत्र मङ्गलमित्याशयः। ऊर्जस्वलानां तेजस्विनां शूराणां स्थानमुत्पत्तिः। एतेन सहजशूरो माधव इति भावः। अत एव श्मशाने मा-

**मालती**—(सहर्षम् ।) [1]सहि, तं क्खु भअवदीए गहीदणामहेअं सव्वहा तादो सुमरेदि ।

**लवङ्गिका**—[2]सहि, समं किल भअवदीए गुरुसआसादो विज्जाहिगमो किदो त्ति तक्कालवेदिणो मन्तअन्ति ।

**कामन्दकी**—

तत उदयगिरेरिवैक एष
स्फुरितगुणद्युतिसुन्दरः कलावान् ।
इह जगति महोत्सवस्य हेतु-
र्नयनवतामुदियाय बालचन्द्रः ॥ १० ॥

**लवङ्गिका**—(अपवार्य ।) [3]अवि णाम माहवो हवे ।

**कामन्दकी**—

असौ विद्याशाली शिशुरपि विनिर्गत्य भवना-
दिहायातः संप्रत्यविकलशरच्चन्द्रवदनः ।

---

१. सखि, तं खलु भगवत्या गृहीतनामधेयं सर्वथा तातः स्मरति ।

२. सखि, समं किल भगवत्या गुरुसकाशाद्विद्याधिगमः कृत इति तत्कालवेदिनो मन्त्रयन्ते ।

३. अपि नाम माधवो भवेत् ।

---

लतीविपन्निस्तारे कृतनिबन्धनो भविता । शूरानुरागिण्यो हि युवतयो भवन्तीत्यपि दर्शितं भवतीति व्याख्यानान्तरम् ॥ ९ ॥ **मालती** । सखि, तं खलु भगवत्या गृहीतनामधेयं सर्वथा तातः स्मरति । स्वयं देवरातनामाग्रहणे मालत्या भाविश्वशुरत्वव्यवसायो बीजम् ॥ **लवङ्गिका** । समं किल तयोर्भगवत्या गुरुसकाशाद्विद्याधिगमः कृत इति तत्कालवेदिनो मन्त्रयन्ते ॥ **कामन्दकी—तत इत्यादि** । ततोऽस्माद्देवरातादुदयगिरेरिवैक एषः । पित्रोरेकपुत्रतयातीव प्रेमपदत्वमुक्तम् । स्फुरिताः प्रकाशा गुणा गाम्भीर्यादय एव द्युतयस्ताभिः सुन्दरः । कलावांश्चतुःषष्टिकलाभिज्ञः। इह जगति नयनवतां चक्षुष्मन्मात्रस्य सर्वस्यापि प्राणिजातस्य महोत्सवस्य हेतुराह्लादकारी । लावण्यसंपदनेनोक्ता । बालश्चन्द्र इव बालचन्द्रः । प्रथमयौवनमनेनोक्तम् । उदियायोद्भूतः । श्लेषोपमागर्भो रूपकालंकारः ॥ १० ॥ **लवङ्गिका** । अपि नाम माधवो भवेत् । यत्र तवानुरागः स एव माधव एवंगुणविशिष्टः संभाव्यत इत्यर्थः ॥ **कामन्दकी—असाविति** । असौ देवरातनन्दनो विद्याभिः शालत इति विद्याशाली शिशुः सन्नपि भवनाद्विनिर्गत्य संप्रतीहायातः संपूर्णशरच्चन्द्रवदनः । यस्यावलोकनप्रदेशे । यत्र स्थिता सोऽवलोक्यते तत्रेत्यर्थः । नारीणां पौरयोषितासु-

यदालोकस्थाने भवति पुरमुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव ॥ ११ ॥

तदत्र च बालसुहृदा मकरन्देन सह विद्यामान्वीक्षिकीमधीते । स एष माधवो नाम ।

**मालती**—(सानन्दं जनान्तिकम् ।) सहि लवङ्गिए, सुदं महाउलप्पसूदो महाभाओ त्ति ।

**लवङ्गिका**—(जनान्तिकम् ।) सहि, कुदो वा महोअहिं वज्जिअ पारिजाअस्स उग्गमो ।

**कामन्दकी**—अहो कालातिपातः । संप्रति हि

क्षिपन्निद्रामुद्रां मदनकलहच्छेदसुभगा-
मुपात्तोत्कम्पानां विहगमिथुनानां प्रथमतः ।

---

१. सखि लवङ्गिके, श्रुतं महाकुलप्रसूतो महाभाग इति ।
२. सखि, कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गमः ।

---

न्मादतरलैरकुण्ठितप्रसरैर्लोलैश्च कटाक्षैः पुरमिदं कुवलयितवातायनं संजातकुवलयगवाक्षमिव भवति । पूर्णचन्द्रदर्शनेन कुवलयोल्लासो हि युक्तः । सकलवनितालोचनीयलावण्यस्य तस्याभिलाषवती भवतीत्यहो ते सौभाग्यमिति भावः ॥ ११ ॥ **तदत्रेति** । त्वदनुरागाविष्ट एव विद्याभ्यासव्याजेनेहागत्य वर्तत इति भावः । **स इति** । य एष कथितो देवरातात्मजः स एव माधव इत्यस्माभिर्निर्दिष्ट इत्यर्थः ॥ **मालती** । सखि लवङ्गिके, श्रुतं महाकुलप्रसूतो माधव इति ॥ **लवङ्गिका** । सखि, कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गमः । पारिजातकल्पस्तादृशादेव महोदधिकल्पादुत्पत्तिमर्हति । न तु क्षुद्रपल्वलकल्पान्नीचादित्यर्थः । तदनेन 'निःश्वस्य । कुशलमिव' इत्यादिना 'स एष माधवो नाम' इत्यन्तेन संदर्भेण प्रासङ्गिकनन्दनवृत्तान्तसूचनम्, तद्गुणहीनत्वम्, पितुःस्वकार्यपरतयापत्यस्नेहराहित्यम्, शकुन्तलावृत्तान्तस्य निषेधमुखेन सूचनम्, तुल्यसंविधानेन माधवसमागमोपायनिवेदनम्, तद्गुणप्रख्यापनेन तत्रानुरागदृढीकरणं चेत्येतावतोऽर्थस्य कामन्दक्या तटस्थयैव संविधानचातुर्येण कृतत्वात्पताकास्थानमिदम् । यथा—'आगन्तुकेन भावेन यदभिव्यक्तिकारकम् । वस्तुनो भाव्यवस्थस्य पताकास्थानकं तु तत् ॥ अतीतानागते कार्ये कथ्येते यत्र वस्तुनः । अन्यापदेशव्याजेन पताकास्थानकं तु तत् ॥' इति । अत एव कामन्दकी वक्ष्यति—'अवलोकिते, साधु संप्रति मया तटस्थयैव मालतीं प्रति निसृष्टार्थदूत्यस्य लघूकृतो भारः' इति ॥ **कामन्दकी** । अहो कालातिपातः । प्रस्तुतकथाव्यासङ्गवशादतिक्रान्तः कालोऽपि न विचारित इत्यर्थः । कालातिपातमेवाह—**संप्रति हि** । **क्षिपन्निति** । विहगमिथुनानां

दधानः सौधानामलघुषु निकुञ्जेषु घनता-
मसौ संध्याशङ्खध्वनिरनिभृतः खे विचरति ॥ १२ ॥

वत्से, सुखं स्थीयताम् । (इत्युत्तिष्ठति ।)

**मालती**—(अपवार्य ।) कहं उवहारीकिदह्मि राइणो तादेण । राआराहणं क्खु तादस्स गुरुअं, ण उण मालदी । (सास्रम् ।) हा ताद, तुमं वि मह णाम एव्वं ति सव्वहा जिदं भोअतिण्हाए । (सानन्दम् ।) कहं महाउलप्पसूदो सो महाभाओ । सुट्ठु भणिदं पिअसहीए कुदो वा महोअहिं वज्जिअ पारिजादस्स उग्गमो त्ति । अवि णाम तं उणो वि पेक्खिस्सं ।

**लवङ्गिका**—अवलोइदे, इदो एदिणा संजवणेण ओदरह्म ।

**कामन्दकी**—(अपवार्य ।) अवलोकिते, साधु संप्रति मया तटस्थयैव मालतीं प्रति निसृष्टार्थदूत्यस्य लघूकृतो भारः । कुतः

---

१. कथमुपहारीकृतास्मि राज्ञस्तातेन । राजाराधनं खलु तातस्य गुरुकम्, न पुनर्मालती । हा तात, त्वमपि मम नामैवमिति सर्वथा जितं भोगतृष्णया । कथं महाकुलप्रसूतः स महाभागः । सुष्ठु भणितं प्रियसख्या कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गम इति । अपि नाम तं पुनरपि प्रेक्षिष्ये ।

२. अवलोकिते, इत एतेन संजवनेनावतरावः ।

---

चक्रवाकद्वन्द्वानां मदनकलहच्छेदेन मन्मथसंगरपर्यवसानेन सुभगां श्रान्त्यतिशयविनोदकतया मनोहरां निद्रामुद्रां स्वापावस्थां प्रथमतः प्रमुख एव क्षिपन्नपसारयन् । संध्याशङ्खध्वनिना हि कोकद्वन्द्वानां निशासंनिधानप्रतीतेर्भाविविरहदुःसहत्वानुसंधानादुत्पन्नवेपथूनामिति विशेषणम् । तथा गुरुतरेषु हर्म्यमध्यदेशेषु प्रतिध्वानेन घनतां बहुलतां दधानोऽसौ राज्ञां भवनेषु संध्यासमयनिवेदनार्थं क्रियमाणः शङ्खध्वनिरनिभृतोऽमन्दः खे विचरति । प्रसरतीत्यर्थः ॥१२॥ **मालती ।** अपवार्य वलितग्रीवं परावृत्य । महाकुलप्रसूतः स महाभागः । तन्महाकुलीनत्वे सानन्दत्वेन सर्वथा स एव मे पतिर्नान्य इत्यध्यवसायः सूचितः । सुष्ठु भणितं प्रियसख्या कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गम इति । अपि नाम तं पुनरपि प्रेक्षिष्ये । इतः परमेकवारं तद्दर्शनं वा लभ्यते चेत्तावतापि कृतार्थाहमित्युत्कण्ठातिशयो दर्शितः ॥ **लवङ्गिका ।** इत एतेन संजवनेनावतरावः । संजवनं चतुःशालम् । 'संजवनं त्विदम् । चतुःशालम्' इत्यमरः ॥ **कामन्दकी ।** अपवार्य । 'निसृष्टार्थदूतीकल्पस्तन्त्रयितव्यः' इति यदुक्तं प्राक्, तदिदानीं निर्व्यूढमित्यवलोकितया सहापवार्याहेत्यर्थः । लघूकृतो भूयान्कर्तव्यांशः साधितः । इतः

वरेऽन्यस्मिन्दोषः पितरि विचिकित्सा च जनिता
पुरावृत्तोद्गारैरपि च कथिता कार्यपदवी ।
स्तुतं माहाभाग्यं यदभिजनतो यच्च गुणतः
प्रसङ्गाद्वत्सस्येत्यथ खलु विधेयः परिचयः ॥ १३ ॥

(इति निष्क्रान्ताः सर्वे ।)

**इति महाकविश्रीभवभूतिविरचिते मालतीमाधवे द्वितीयोऽङ्कः ।**

---

परमल्पमेवावशिष्टमित्यर्थः । कृताशङ्कं कर्तव्यांशं च विशेषतो निरूपयति—**वर इति** । अन्यस्मिन्वरे नन्दने दोषः । पितरि विचिकित्साप्तत्वसंदेहमूलं वैमुख्यं च जनितं यद्वात्स्यायनसूत्रं कन्यासंप्रयुक्तकाधिकरणे निसृष्टार्थदूतीकृत्यनिरूपणप्रकरणेऽन्यवरपितॄणां च दोषानभिप्रायविरुद्धान्प्रतिपादयेदिति मातापित्रोश्च गुणानभिज्ञतामनपेक्षतां लुब्धतां शठतां चपलतां बान्धवानां प्रतिपादयेदिति पूर्वसूत्रादनुषज्यते । शकुन्तलावृत्तान्तादीतिहासोद्घाटनैः कार्यपदवी कर्तव्यसरणिश्च कथिता । यच्च सूत्रम्—'याश्चान्या अपि समानजातीयाः कन्याः शकुन्तलाद्याः स्वरुच्या भर्तारं प्राप्य मोदन्ते स्म, ताश्चास्याः प्रदर्शयेत्' इति, तथा वत्सस्य माधवस्याभिजनत आभिजात्याद्धेतोर्यन्माहाभाग्यं महाभागधेयत्वं गुणतश्च रूपविद्यागुणेभ्यो यन्माहात्म्यं तत्प्रसङ्गत एव, अन्यथा पक्षपातप्रतीतेः । स्तुतम् । यदपि सूत्रं 'तस्याः स्वरुच्या नायकगुणान्भूयिष्ठान्परिवर्णये'दिति । एवं तावन्माधवानुरागो दृढीकृतः । इतः परं परिचयो विस्रम्भयोग्यत्वमनुचितेऽपि व्यापारे विनियुज्यमाना झटित्यविशङ्कं येन करोति तादृशः प्रणयो विधेयश्चेत्येतावन्मात्रमवशिष्टमित्यर्थः । अनेन करणं नाम मुखसंधेरङ्गमुक्तं भवति । यथा—'करणं प्रकृतारम्भः' इति ॥ १३ ॥

जयन्त्यमृतनिष्यन्दिरसोत्कर्षानुरञ्जिताः ।
मधुरोदात्तगम्भीरा भवभूतिकवेर्गिरः ॥

**इति श्रीमद्भारद्वाजकुलतिलकपर्वतनाथयायजूकनन्दनत्रिपुरारिसूरिविरचितायां मालतीमाधवभावप्रदीपिकायां द्वितीयाङ्कविवरणम् ॥**

# तृतीयोऽङ्कः ।

(ततः प्रविशति बुद्धरक्षिता ।)

**बुद्धरक्षिता**—(परिक्रम्य आकाशे ।) [1]अवलोइदे, अवि जाणासि कहिं भअवदी ।

**अवलोकिता**—(प्रविश्य ।) [2]बुद्धरक्खिदे, किं पमुद्धासि । जो को वि कालो भअवदीए पिण्डपारणवेलं विसज्जिअ मालदीं अणुवट्टमाणाए ।

**बुद्धरक्षिता**—[3]हुं । तुमं उण कहिं पत्थिदासि ।

**अवलोकिता**—[4]अहं क्खु भअवदीए माहवसआसं अणुप्पेसिदा । संदिट्ठं अ तस्स संकरउरसंबन्धि कुसुमाअरुज्जाणं गदुअ कुञ्जणिउञ्जपेरन्तरत्तासोअगहणे चिट्ठेत्ति । गदो अ तत्थ माहवो ।

---

१. अवलोकिते, अपि जानासि क्व भगवती ।

२. बुद्धरक्षिते, किं प्रमुग्धासि । यः कोऽपि कालो भगवत्याः पिण्डपारणवेलां विसृज्य मालतीमनुवर्तमानायाः ।

३. हुं । त्वं पुनः क्व प्रस्थितासि ।

४. अहं खलु भगवत्या माधवसकाशमनुप्रेषिता । संदिष्टं च तस्य शंकरपुरसंबन्धि कुसुमाकरोद्यानं गत्वा कुञ्जनिकुञ्जपर्यन्तरक्ताशोकगहने तिष्ठेति । गतश्च तत्र माधवः ।

---

अनङ्गशासनवधूमनङ्गोज्जीवनौषधीम् ।
अभङ्गुरकृपारज्यदपाङ्गामाश्रये शिवाम् ॥

कविरिदानीमङ्कान्तरमारभमाणस्तदर्थसूचनार्थं प्रवेशकं प्रस्तौति—**तत इत्यादिना** । असंनिहितामप्यवलोकितामाकाशभाषितेन संबोधयन्ती बुद्धरक्षिता वदति । आकाशभाषितं यथा—'अप्रविष्टैः सहालापो भवेदाकाशभाषितम्' इति । अवलोकिते, अपि जानासि क्व भगवती । वर्तत इति शेषः ॥ **अवलोकिता** । बुद्धरक्षिते, किं प्रमुग्धासि मोहं प्राप्तवत्यसि । 'विस्मृतासि' इति पाठे कर्तरि निष्ठा । विस्मृतवतीत्यर्थः । यः कोऽपि कालो भगवत्याः पिण्डपारणवेलां विसृज्य मालतीमनुवर्तमानायाः । भैक्ष्याभ्यवहारकालमप्युल्लङ्घ्य मालत्यनुवर्तनार्थं गताया भगवत्या महान्कालो जात इत्यर्थः ॥ **बुद्धरक्षिता** । हुमिति स्मरणे । त्वं पुनः क्व प्रस्थितासि ॥ **अवलोकिता** । अहं खलु भगवत्या माधवसकाशमनुप्रेषिता । संदिष्टं च तस्य शंकरपुरसंबन्धि कुसुमाकरोद्यानं कामोद्यानं गत्वा कुञ्जनिकुञ्जपर्यन्तरक्ताशोकगहने तिष्ठेति । कुञ्जं मालाकुसुमम् ।

**बुद्धरक्षिता**—[1]अवलोइदे, किं ति माहवो तत्थ अणुप्पेसिदो ।

**अवलोकिता**—[2]अज्ज किसणचउद्दसित्ति जणणीए समं मालदी संकरउरं गमिस्सदि । तदो एव्वं किल सोहग्गं वड्ढइ त्ति देवदाराहणणिमित्तं सहत्थकुसुमावअअं उद्दिसिअ लवङ्गिआदुदीअं मालदिं तं एव्व कुसुमाअरुज्जाणं आणइस्सदि । तदो अण्णोण्णदंसणं हविस्सदि त्ति । तुमं उण कहिं पत्थिदा सि ।

**बुद्धरक्षिता**—[3]अहं क्खु संकरउरं एव्व पत्थिदाए पिअसहीए मदअन्तिआए आमन्तिदा । अदो भअवदीए पादवन्दणं कदुअ तहिं एव्व गच्छामि ।

**अवलोकिता**—[4]तुमं क्खु भअवदीए जस्सिं पओअणे णिउत्ता तत्थ को उत्तन्दो ।

**बुद्धरक्षिता**—[5]मैए क्खु भअवदीए समादेसेण तासु तासु विस्स-

---

१. अवलोकिते, किमिति माधवस्तत्रानुप्रेषितः ।

२. अद्य कृष्णचतुर्दशीति जनन्या समं मालती शंकरपुरं गमिष्यति । तत एवं किल सौभाग्यं वर्धत इति देवताराधननिमित्तं स्वहस्तकुसुमावचयमुद्दिश्य लवङ्गिकाद्वितीयां मालतीं तदेव कुसुमाकरोद्यानमानेष्यति । ततोऽन्योन्यदर्शनं भविष्यतीति । त्वं पुनः क्व प्रस्थितासि ।

३. अहं खलु शंकरपुरमेव प्रस्थितया प्रियसख्या मदयन्तिकयामन्त्रिता । अतो भगवत्याः पादवन्दनं कृत्वा तत्रैव गच्छामि ।

४. त्वं खलु भगवत्याः यस्मिन्प्रयोजने नियुक्ता तत्र को वृत्तान्तः ।

५. मया खलु भगवत्याः समादेशेन तासु तासु विस्रम्भकथास्वीदृशस्ता-

---

गतश्च तत्र माधवः । **बुद्धरक्षिता** । अवलोकिते, किमिति माधवस्तत्रानुप्रेषितः । **अवलोकिता** । अद्य कृष्णचतुर्दशीति जनन्या समं मालती शंकरपुरं गमिष्यति । तत एवं किल सौभाग्यं वर्धत इति देवताराधननिमित्तं स्वहस्तकुसुमावचयमुद्दिश्य लवङ्गिकाद्वितीयां मालतीं तदेव कुसुमाकरोद्यानमानेष्यति । भगवत्येवेति शेषः । ततोऽन्योन्यदर्शनं भविष्यतीति । त्वं पुनः क्व प्रस्थितासि ॥ **बुद्धरक्षिता** । अहं खलु शंकरपुरमेव प्रस्थितया प्रियसख्या मदयन्तिकयामन्त्रिताहूता । अतो भगवत्याः पादवन्दनं कृत्वा तत्रैव गच्छामि ॥ **अवलोकिता** । त्वं खलु भगवत्या यस्मिन्प्रयोजने मदयन्तिकामकरन्दसंघटनरूपे नियुक्ता तत्र को वृत्तान्तः । वर्तत इति शेषः । **बुद्धरक्षिता** । मया खलु भगवत्याः समादेशेन तासु तासु विस्रम्भकथास्वीदृशस्तादृश इति मकरन्दस्योपरि प्रियसख्या

म्भकहासु ईरिसो तादिसो त्ति मअरन्दस्स उवरि पिअसहीए मदअन्तिआए परोक्खाणुराओ तहा दूरं आरोविदो जहा से मणोरहो अवि णाम तं पेक्खामि त्ति ।

**अवलोकीता**—[1]साहु बुद्धरक्खिदे, साहु । एहि गच्छह्म ।

(इति निष्क्रान्ते ।)

**प्रवेशकः ।**

---

(प्रविश्य ।)

**कामन्दकी**—

तथा विनयनम्रापि मया मालत्युपायतः ।
नीता कतिपयाहोभिः सखीविस्रम्भसेव्यताम् ॥ १ ॥

संप्रति हि

व्रजति विरहे वैचित्र्यं नः प्रसीदति संनिधौ
रहसि रमते प्रीत्या वाचं ददात्यनुवर्तते ।

---

दृश इति मकरन्दस्योपरि प्रियसख्या मदयन्तिकायाः परोक्षानुरागस्तथा दूरमारोपितो यथैवमस्या मनोरथोऽपि नाम तं पश्यामीति ।

१. साधु बुद्धरक्षिते साधु । एहि गच्छावः ।

---

मदयन्तिकायाः परोक्षानुरागस्तथा दूरमारोपितो यथैवमस्या मनोरथोऽपि नाम तं पश्यामीति ॥ **अवलोकिता** । साधु बुद्धरक्षिते, साधु । एहि गच्छावः ॥ इति निष्क्रान्ते ॥ प्रवेशकः ॥ अथावलोकितासूचितप्रवेशा प्रविशति कामन्दकी । **कामन्दकी—तथेति** । तथा तेन प्रकारेण गुरुजनोचितभक्तिश्रद्धयोपलक्षितेन विनयेन कुलकन्यकाजनोचितस्वभावेन नम्रा प्रह्वापि मालती मयोपायतः सतततत्समीपावस्थानम्, विदग्धभङ्ग्या कुन्तलविरचनम्, स्तनमुकुलगण्डफलकेषु चित्रपत्रलेखनम्, सहाक्षक्रीडानर्मालापैर्विनोदनम्, अपूर्ववस्तूपहरणमित्येवमादिबहुप्रकारेणोपायेन कतिपयैरल्पैरेवाहोभिः सखीषु लवङ्गिकादिषु यो विस्रम्भः साध्वसलज्जाशङ्कापरित्यागेन स्वमनोगतसर्वस्वनिवेदनं मदुक्तस्य जीवितव्ययस्याप्यङ्गीकरणं क्षणमपि मद्विरहासहिष्णुत्वमित्यादिरूपस्नेहोत्कर्षस्तेन सेव्यतामनुरञ्जनीयताम् । तत्र भजनमनुरञ्जनरूपमेव नीता । प्रापितेत्यर्थः ॥१॥ विस्रम्भमेव दर्शयति—**व्रजतीति** । नोऽस्माकं विरहे वैचित्र्यं चित्तवैकल्यम्, मनःखेदमिति यावत् । व्रजति गच्छति । संनिधौ पुनः प्रसीदिति निर्वृतान्तःकारणा भवति । रहस्येकान्ते रमते चिरकालं सखीभ्योऽपि यन्न कथितं तादृशनर्मरहस्यनिवेदनैः क्रीडति । प्रीत्या वाचं ददाति प्रियमेव सर्वदा भाषते, न तु कदाचिदप्यन्यथा ।

गमनसमये कण्ठे लग्ना निरुध्य निरुध्य मां
सपदि शपथैः प्रत्यावृत्तिं प्रणम्य च याचते ॥ २ ॥

इदं च तत्र साधीयः प्रत्याशानिबन्धनम् ।

शाकुन्तलादीनितिहासवादा-
न्प्रस्तावितानन्यपरैर्वचोभिः ।
श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी
चिराय चिन्तास्तिमितत्वमेति ॥ ३ ॥

तदद्य माधवसमक्षमुत्तरमुपक्रमिष्यामः । (नेपथ्याभिमुखमवलोक्य ।) वत्से इत इतः ।

(ततः प्रविशति मालती लवङ्गिका च ।)

**मालती**—(स्वगतम् ।) [1]कहं उवहारीकिदह्मि राइणो तादेण । राआराहणं क्खु तादस्स गुरुअं, ण उण मालदी । (सास्रम् ।) हा

१. कथमुपहारीकृतास्मि राज्ञस्तातेन । राजाराधनं खलु तातस्य गुरुकम्,

'देयं ददाति' इति पाठे देयं कर्पूरादिकं प्रीतिदानं ददातीत्यर्थः । तथानुवर्तत आनुकूल्येनाभ्युत्थानासनप्रदानादिनोपचरति । तथा स्वसमीपान्मठं प्रति गमनावसरे मदीयकण्ठासङ्गिवलयीकृतबाहुपाशा मां बहुशो निरुध्य सर्वथा गन्तव्यमिति मया निर्बध्यमाना सपदि प्रत्यावृत्तिं तस्मिन्नेव च क्षणे पुनरागमनं शपथैरिदानीमेव यदि नागच्छसि तर्हि गुरुं ते स्वहस्तेन मारितवत्यसि ममान्यथाभावमाचरितवत्यसीत्येवमादिभिरनेकैरनतिक्रमणीयैः प्रमाणवचनैः प्रणम्य मामेवं याचते । प्रार्थयत इत्यर्थः ॥ २ ॥ इदं चेति वक्ष्यमाणं च साधीयो दृढतरं प्रत्याशायाः सर्वथा मदुक्तमसौ करिष्यतीत्येवंरूपाया निबन्धनं निमित्तम् । किं तदित्यत आह—**शाकुन्तलादीनिति** । अन्यपरैरन्यः स्वव्यतिरिक्तो जनः परस्तात्पर्यगोचरो येषां तैर्मुखतोऽन्योद्देशेन प्रवृत्तवदवभासमानैर्वस्तुतस्तु स्वोपदेशायैव प्रवृत्तैर्वचोभिः प्रस्तावितान्मया मत्प्रेरितेन वा सखीजनेन प्रसञ्जिताञ्शकुन्तलावृत्तान्तप्रमुखानितिहासवादाञ्श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी यथेष्टविनियोगार्हस्तवैष जनस्तदस्य मरणं जीवितं वा त्वदेकायत्तमित्यात्मानं निवेदयन्तीव मदङ्कविनिपातितशरीरा चिरकालं चिन्तया कथं मया शकुन्तलादिवत्कर्तव्यं को वात्राभ्युपाय इति विचारेण स्तिमितत्वं निश्चेष्टतामेति प्राप्नोति । इत्येतत्साधीयः प्रत्याशानिबन्धनमित्यर्थः । स एष श्लोकद्वयार्थो रतिरहस्ये दूतीवशीभूतनायिकारूपवर्णनसमये कथितः । यथा—'एवं प्रयुज्यमाने लक्षयितव्यस्तदीय आकारः । दृष्ट्वा ब्रवीति सस्मितमन्तिक एवोपविशति ॥ पृच्छति भोजनशयने चाख्यानं दिशति रहसि वा मिलति । निःश्वसति जृम्भयति च स्ववित्तमस्यै ददाति किंचिद्वा ॥ यान्तीमेष्यसि पुनरिति वदति तथा सासवादिनी भवति ॥' इत्यादि ॥ ३ ॥ **तदिति** । माधवस्य समीप एवोत्तरमुपरितनं

ताद, तुमं वि मह णाम एव्वं ति सव्वहा जिदं भोअतिण्हाए । (सानन्दम् ।) कहं महाउलप्पसूदो सो महाभाओ । सुट्ठु भणिदं पिअसहीए कुदो वा महोअहिं वज्जिअ पारिजादस्स उग्गमो त्ति । अवि णाम तं उणो वि पेक्खिस्सं ।

**लवङ्गिका**—सहि, एसो क्खु महुरमहुरसाद्दमञ्जरीकवलणकेलिकलकोइलउलकोलाहलाउलिदसहआरसिहरुड्डीणचडुलचञ्चरीअणिअरवइअरुद्दलिददलकरालचम्पआहिवासमणोहरो मरालजहणपरिणाहुव्वहणमन्थरोरुभरविसंठुलक्खलिदचलणसंचलणोवणीदसेअसीअरसुहाबिन्दुज्जलमुद्धमुहचन्दचन्दणाअमाणसीअलफंसो तुमं परिस्सअदि कुसुमाअरुज्जाणमारुदो । ता पिअसहि, इदो परिक्कमामो ।

( परिक्रम्य प्रविशतः । )

---

न पुनर्मालती । हा तात, त्वमपि मम नामैवमिति सर्वथा जितं भोगतृष्णया । कथं महाकुलप्रसूतः स महाभागः । सुष्ठु भणितं प्रियसख्या कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गम इति । अपि नाम तं पुनरपि प्रेक्षिष्ये ।

१. सखि, एष खलु मधुरमधुरसार्द्रमञ्जरीकवलनकेलिकलकोकिलकुलकोलाहलाकुलितसहकारशिखरोड्डीनचटुलचञ्चरीकनिकरव्यतिकरोद्दलितदलकरालचम्पकाधिवासमनोहरो मरालजघनपरिणाहोद्वहनमन्थरोरुभरविसंस्थुलस्खलितचरणसंचरणोपनीतस्वेदशीकरसुधाबिन्दूज्ज्वलमुग्धमुखचन्द्रचन्दनायमानशीतलस्पर्शस्त्वां परिष्वजति कुसुमाकरोद्यानमारुतः । तत्प्रियसखि, इतः परिक्रमावः ।

---

कार्यजातमथोपक्रमिष्यामः ॥ 'नेपथ्य—' इत्यादि 'पुनः प्रेक्षिष्ये' इत्यन्तं गतार्थः ॥ **लवङ्गिका** । सखि, एष खलु मधुरेण मधुरसेनार्द्राणां भृशं क्लिन्नानां मञ्जरीणां कवलनमेव केलिस्तया कलोऽत्यन्तमधुरो यः कोकिलकुलकोलाहलस्तेनाकुलितात्सहकारशिखरादुत्त्रासेनोड्डीनानां चटुलानां चञ्चरीकनिकराणां व्यतिकरेण विमर्देनोद्दलितदलानामूर्ध्वं विकसितपत्राणां करालानां दन्तुराणाम् । 'करालो दन्तुरे तुङ्गे विशाले विकचेऽपि च' इति वचनात् । चम्पकानां चाम्पेयकुसुमानामधिवासेन मनोहरः । मरालस्य समवृत्तस्य । 'मरालं समवृत्तं स्यात्' इति वचनात् । जघनपरिणाहस्य नितम्बप्राग्भागविस्तारस्योद्वहनभारेण मन्थरं मन्दं,तथोरुभरेण विसंस्थुलं विषमं स्खलितं यच्चरणसंचरणं पादगमनं तेनोपनीतैः स्वेदशीकरैरेव सुधाबिन्दुभिरुज्ज्वलस्य मुग्धमुखचन्द्रस्य त्वदीयस्य चन्दनायमानः शीतलस्पर्शो यस्य स त्वां परिष्वजति कुसुमाकरोद्यानमारुतः । तदितः परिक्रमावः ॥ 'गतश्च तत्र माधवः' इति सूचितो

(ततः प्रविशति माधवः ।)

**माधवः**—हन्त, परागता भगवती । इयं हि मम

आविर्भवन्ती प्रथमं प्रियायाः
सोच्छ्वासमन्तःकरणं करोति ।
निदाघसंतप्तशिखण्डियूनो
वृष्टेः पुरस्तादचिरप्रभेव ॥ ४ ॥

दिष्टया लवङ्गिकाद्वितीया मालत्यपि ।

आश्चर्यमुत्पलदृशो वदनामलेन्दु-
सांनिध्यतो मम मुहुर्जडिमानमेत्य ।
जात्येन चन्द्रमणिनेव महीधरस्य
संधार्यते द्रवमयो मनसा विकारः ॥ ५ ॥

---

माधवः प्रविशति । **माधवः** । हन्तेति हर्षे । परागताभिमुखमागता । परेत्युपसर्गोऽत्राभिमुख्यद्योतकः । **आविर्भवन्तीति** । प्रियायाः प्रथममाविर्भवन्ती प्रकटीभवन्ती भगवती प्रियतमायाः पुनर्दर्शननैराश्यात्स्मृतप्रायं ममान्तःकरणं दयितागमनसूचकतया सोच्छ्वासं सजीवं करोति । कथमिव निदाघसंतप्तस्य मयूरस्य वृष्टेः पुरस्तादाविर्भवन्ती संनिहितां वृष्टिं सूचयन्ती । अचिरप्रभा विद्युदिवेत्युपमा । तत्र माधवस्य मालतीदर्शनाभिलाषो द्वितीयाङ्कगतमालतीवृत्तान्तनन्दनवृत्तान्तविच्छेदे प्राप्ते पुनर्दर्शनहेतुत्वेनाच्छेदकारणत्वाद्बिन्दुः । यथा—'अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्' इति । अत्र च तृतीयचतुर्थाङ्काभ्यां पुनरन्योन्यसंदर्शनात्मकावान्तरप्रयोजनसंघटितैकभाविकथांशनिरूपकाभ्यां निर्दिष्टस्य बिन्दोश्चतुर्थाङ्के 'तत्सर्वथा संगमनाय यत्नः प्राणव्ययेनापि मया विधेयः' इति वक्ष्यमाणस्य यत्नस्य समन्वयादुपजातम् 'तदास्यताम् । किंचिदाख्येयमाख्यातुकामास्मि' इत्यारभ्य 'यदि तद्विषयोऽनुरागबन्धः' इत्यन्तेन कामन्दकीलवङ्गिकाभ्यां माधवमालत्योर्मदनव्यथातिशयवर्णनेन लक्ष्यस्य, तत उपरि शार्दूलवृत्तान्तनन्दनविवाहनिश्चयप्रसङ्गाभ्यामन्तरायभूताभ्यामन्तरिततयालक्ष्यस्य च परस्परानुरागस्य बीजस्योद्भावनात्मकस्तत्रोद्भावयिष्यमाणविलासाद्यङ्गसमन्वितः प्रतिमुखसंधिर्निरूप्यते । तल्लक्षणं च–'लक्ष्यालक्ष्यतया बीजव्यक्तिः प्रतिमुखं भवेत् । बिन्दुः प्रयत्नादुदयादङ्गान्यत्र त्रयोदश ॥' इति ॥ ४ ॥ दिष्ट्या लवङ्गिकाद्वितीया मालत्यपि । आगच्छतीति शेषः । **आश्चर्यमिति** । इन्दीवराक्ष्या वदनमेवामलः कलङ्कशून्य इन्दुस्तस्य सांनिध्यतः सांनिध्याद्धेतोर्मम मनसा स्वाभाविकनैमित्तिकद्रवत्वविरहितेनापि पर्वतसंबन्धिना जात्येन विशुद्धजातिप्रभवेन चन्द्रकान्तमणिनेव मुहुर्जडिमानं जाड्यं 'क्रियास्वपाटवं जाड्यम्' इत्युक्तरूपं भावं जलप्रकृतिकत्वं

संप्रति रमणीयतरा मालती।

ज्वलयति मनोभवाग्निं मदयति हृदयं कृतार्थयति चक्षुः।
परिमृदितचम्पकावलिविलासलुलितालसैरङ्गैः ॥ ६ ॥

**मालती**—सहि[1], इमस्सिं कुञ्जणिउञ्जे कुसुमाइं अवचिणुह्म।

**माधवः**—

प्रथमप्रियावचनसंश्रवस्फुर-
त्पुलकेन संप्रति मयावलम्ब्यते।
घनराजिनूतनपयःसमुक्षण-
क्षणबद्धकुड्मलकदम्बडम्बरः ॥ ७ ॥

**लवङ्गिका**—सहि[2], एव्वं करेह्म।

(पुष्पावचयं नाटयतः।)

**माधवः**—अपरिमेयाश्चर्यमाचार्यकं भगवत्याः।

---

१. सखि, अमुष्मिन्कुञ्जनिकुञ्जे कुसुमान्यवचिनुवः।
२. सखि, एवं कुर्वः।

---

चैत्य प्राप्य द्रवमयो विकारो द्रवीभावः संधार्यते। तदेतन्मनसो द्रवीभवनमाश्चर्यमित्यर्थः। महीधरस्य चन्द्रमणिनेत्यनेन स्वस्य महीधरसाम्यप्रतीतेरचलवद्धीरस्यापि मम मनो द्रवीभवतीत्याश्चर्यहेतुः ॥ ५ ॥ **संप्रतीति**। पूर्वदृष्टावस्थापेक्षया विरहविज्ञानां स्फुटीभावात्तेषामात्मविषयत्वस्य निश्चितत्वाच्च मालत्यतीव रमणीया च वर्तत इत्यर्थः। यत इत्यध्याहार्यम्। **ज्वलयतीति**। परिमृदिता म्लानिमुपगता या चम्पकावलिश्चाम्पेयकुसुममाला तस्या विलास इव विलासो विलसनं कान्तिप्रकर्षस्तेन लुलितैराविलैः। अभिव्याप्तैरिति यावत्। अलसैः क्रियास्वनुन्मुखैरङ्गैर्मनोभवाग्निं ज्वलयति दीपयति। हृदयं मदयति हर्षपरवशं करोति। चक्षुः कृतार्थयति द्रष्टव्यावधिदर्शनेन सफलं करोतीति मन्निमित्ततया निश्चितां विरहावस्थामनुभवन्तीयमानन्दमदनवेदनाभ्यां ममान्तःकरणमाकुलयतीत्यर्थः। कारकदीपकालंकारः ॥ ६ ॥ **मालती**। सखि, अमुष्मिन्कुञ्जनिकुञ्जे वामनतया स्वहस्तापचेयकुसुमे लतागुल्मे कुसुमान्यपचिनुवः ॥ **माधवः—प्रथमेति**। अश्रुतपूर्वप्रियावचनश्रवणेन स्फुरन्पुलको रोमोद्गमो यस्य तेन मया संप्रति मेघपङ्क्तिनवजलबिन्दुसंसेचनेन य उत्पन्नः क्षणो हर्षस्तेन बद्धानि कुड्मलानि येन तस्य कदम्बतरोर्डम्बरोऽवस्थाविशेषोऽवलम्ब्यते। अनुक्रियत इत्यर्थः। अत्र प्रतीयमानसंभोगाभिलाषानुगुण्यात्तद्वचनश्रवणकौतुकेन च तदन्तोपसर्पणादिचेष्टाया गम्यमानत्वाद्विलासो नाम प्रतिमुखसंधेरङ्गम्। यथा—'समीहा रतिभोगार्थं विलासः परीकीर्तितः' इति ॥ ७ ॥ **लवङ्गिका**। सखि, एवं कुर्वः ॥ **माधवः**।

**मालती**—सहि[1], देण इदो वि अवरस्सिं अवचिणुह्म ।

**कामन्दकी**—(मालतीं परिष्वज्य ।) अयि, विरम विरम । निःसहा जातासि ।

स्खलयति वचनं ते संश्रयत्यङ्गमङ्गं
जनयति मुखचन्द्रोद्भासिनः स्वेदबिन्दून् ।

---

१. सखि, तेनेतोऽप्यपरस्मिन्नवचिनुवः ।

---

अपरिमेयान्यपरिच्छेद्यान्याश्चर्याणि यत्र तदाचार्यकं कामतन्त्रोपदेशकौशलं भगवत्याः । यत्प्रसादादिदानीमिहैकाकिनीं कुसुमावचयसंभ्रमस्रंसमानांशुकतया स्फुटं विभाव्यमानसर्वावयवसौन्दर्यशालिनीं प्रियतमां योऽहमन्तर्हित एव निःशङ्कमवलोकयन्नमृतसरसि निमग्न इव भवामीत्यर्थः । अनेन पूर्वं दृष्टायाः पश्चादन्तरितदर्शनाया मालत्याः पुनरनुसरणात्परिसर्पो नामाङ्गमुक्तम् । यथा—'परिसर्पस्तु बीजस्य दृष्टनष्टानुसर्पणम्' इति ॥ **मालती** । सखि, तेनेतोऽप्यपरस्मिन्नवचिनुवः । अन्यस्मिन्प्रदेशे॥अथ कामन्दकी प्रच्छन्नस्थापितमाधवसमीपं मालतीमुपायेनानीय ततोऽन्यत्र जिगमिषन्तीं तां निरुध्य तत्रैव स्थापयितुमाह—**कामन्दकी**—**अयीति** । निःसहा पर्यटनासमर्था जाता । कुत इत्यत आह—**स्खलयतीति** । हे सुभ्रु । सुभ्रूशब्दस्योवङ्स्थानत्वेन नदीसंज्ञाप्रतिषेधादपि 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वाप्राप्तावपि 'विमानना सुभ्रु कुतः पितुर्गृहे' इत्यादि महाकविप्रयोगदर्शनात्साधुत्वं सुभ्रूशब्दस्य ज्ञेयम् । खेदः पुष्पावचयजनितश्रमः । 'मनःशरीरयोः खेदः क्रियातिशयतः श्रमः' इति वचनात् । त्वयि वल्लभालोकनेन वल्लभकर्मकेण गाढाभिलाषायाः कामिन्या अवलोकनेन सर्वथा सर्वेणापि प्रकारेण तुल्यं यथा स्यात्तथा विलसति । वल्लभमवलोकयन्त्या येऽनुभावास्ते श्रमवशात्त्वय्यपि दृश्यन्त इति नर्मगर्भोक्तिः । अथ च लतान्तरितवल्लभकर्तृकालोकनेन लद्गोचरेण तुल्यमेककालतयैकालम्बनतया च सह वर्तत इत्यपि प्रतीतिः । किंच वल्लभकर्तृकावलोकनजनिता एवैतेऽनुभावा न श्रमप्रभावाः, तेन विलोकयन्तं वल्लभमजानानाया अपि ते तत्कटाक्षसंस्पर्शमात्रेण चन्द्रकान्तस्येव चन्द्रकरसंपर्कमात्रेणैवंविधो विकार इत्यहो ते गाढानुरागित्वमिति प्रतिपाद्यां मालतीं प्रत्यपह्नवातिशयोक्तिध्वनिः । एवमियं रक्षिजनसहस्ररक्षिताप्युपायेन मयैव पुनर्वल्लभालोकनगोचरतां नीता, न तु भवत्येति लवङ्गिकां प्रति ध्वनिः । त्वदालोकनमार्गमियमानीता । तद्विस्रम्भमवलोकयेति तटस्थं माधवं प्रत्यस्यास्त्वनुरागेण त्वया विलोक्यमानायास्त्वामत्र संनिहितमजानानाया अप्येते विकारा इत्यहो ते युवतिजनहृदयाकर्षणप्रावीण्यमिति तमेव प्रतिव्यज्यत इति बहुधा व्यङ्ग्यस्योद्भावयितुं प्रतिश्लोकं प्रतिपदं च शक्यत्वेऽपि विस्तरभयादस्माभिरुपेक्षितम् । कथं तुल्यतेत्यपेक्षायां श्रमप्रियदर्शनयोः कार्यसाम्यमाह—ते वचनं स्खलयति गद्गदं

मुकुलयति च नेत्रे सर्वथा सुभ्रु खेद-
स्त्वयि विलसति तुल्यं वल्लभालोकनेन ॥ ८ ॥

(मालती लज्जां नाटयति।)

**लवङ्गिका**— [1]सोहणं भअवदीए आणत्तं।

**माधवः**—हृदयंगमः परिहासः।

**कामन्दकी**—तदास्यताम्। किंचिदाख्येयमाख्यातुकामास्मि।

(सर्वा उपविशन्ति।)

**कामन्दकी**—(मालत्याश्चुबुकमुन्नमय्य।) शृणु चित्रमिदं सुभगे।

---

१. शोभनं भगवत्याज्ञप्तम्।

---

करोति। श्रमादपि स्खलितवाग्भवति। प्रियतमदर्शनादपि गद्गदाख्यः सात्त्विकभावो भवति। यथा—'मदप्रमोदव्रीडादेर्वाक्स्तम्भो गद्गदं विदुः' इति॥ अङ्गमङ्गं प्रत्यवयवं संश्रयति। सर्वेष्ववयवेष्वभिव्याप्तो वर्तत इत्यर्थः। वल्लभालोकनपक्षे तु अङ्गं कर्तृ। अङ्गमवयवान्तरं कर्मभूतं श्रमवशात्संश्रयति। श्रमाख्यः सात्त्विकभाव उक्तः। तल्लक्षणं तूक्तम्। अस्मिन्पाठे वल्लभालोकनेन तुल्यमिति सहोक्तिनिर्वाहकं वल्लभालोकनस्य कर्तृत्वेन प्रक्रान्तस्य परित्यागेन कर्त्रन्तरस्वीकारात्। न च व्यङ्ग्यत्वादस्यार्थस्यायमदोष इति वाच्यम्। तुल्यमिति सहार्थतुल्यशब्दबलादुभयोरपि वाच्यत्वेन व्यङ्ग्यत्वाभावात्। वल्लभालोकनजनितानुभावाभिव्यक्तो हि शृङ्गारो व्यङ्ग्यः। न तु वल्लभालोकनव्यापारः। तस्मात् 'स्रंसयति' इति पाठः श्रेयान्। अङ्गमङ्गं स्रंसयति स्रस्तं करोति। अङ्गसादोऽनेनोक्तः। स चोभयत्र साधारण एव। मुखचन्द्र उद्भासनशीलान्स्वेदकणाञ्जनयति। अनेन स्वेदो द्वयोरपि साधारणो दर्शितः। यथाह—'वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिभिः' इति। नेत्रे च मुकुलयति। यदाह—'निश्वासस्वेदसीत्काराः संकोचो मुखनेत्रयोः। एते श्रमस्यानुभावाः' इति। पक्षान्तरे च सुखपारवश्यान्नेत्रसंमीलनं स्तम्भाख्यं सात्त्विकभावं व्यनक्ति। सहोक्तिदीपकयोः संकरः॥ ८ ॥ **लवङ्गिका**। शोभनं भगवत्याज्ञप्तम्। **माधवः**। परिहासो नर्मवचनम्। अनेन नर्माख्यमङ्गमुक्तम्। यथा— 'परिहासवचो नर्म' इति। **कामन्दकी-तदास्यतामित्यादि**। किंचिदाख्येयमल्पमेव वक्तव्यम्॥ चुबुकं वदनाधोभागं लज्जावनतमुन्नमय्य। आहेति शेषः। **शृणित्यादि**। रतिरहस्यवचनप्रतीकोपादानं कामन्दक्या वक्ष्यमाणस्य नायकविरहातिशयस्य दूतीव्यापारतया शास्त्रसिद्धतां सूचयितुम्। यदाह—'उत्पाद्य सौमनस्यं ब्रूयात्सुभगे शृणुष्व यच्चित्रम्। चित्रं किमयं व्यतिकरमसौ युवा कुसुमसुकुमारः॥ दृष्टिभुजङ्गीदष्टस्तव सखि संदेहमारूढः। श्वसिति खिद्यति मुह्यति संतापोऽप्यस्य कोऽपि दुर्वारः॥ त्वन्मुखचन्द्रसुधारसमप्राप्य प्राणिता नासौ। स्वप्नेऽपि तस्य नेदृक्कदापि सुभगे विकारोऽभूत्॥' इति। सुभगे इति संबोधनं त्वदीयसौभाग्यमीदृशं येनैकाकी पित्रोरेकपुत्रो माधवः कुलालम्बनं श्रवण-

**मालती**—[1]अवहिदह्मि ।

**कामन्दकी**—अस्ति तावदेकदा प्रसङ्गतः कथित एव मया माधवाभिधानः कुमारः, यस्त्वमिव मामकीनस्य मनसो द्वितीयं बन्धनम् ।

**लवङ्गिका**—[2]सुमरामो ।

**कामन्दकी**—स खलु मदनोद्यानयात्रादिवसात्प्रभृति दुर्मनायमानः परवानिव शरीरोपतापेन । तथाहि ।

यदिन्दावानन्दं प्रणयिनि जने वा न भजते
व्यनक्त्यन्तस्तापं तदयमतिधीरोऽपि विषमम् ।
प्रियङ्गुश्यामाङ्गप्रकृतिरपि चापाण्डु मधुरं
वपुः क्षामं क्षामं वहति रमणीयश्च भवति ॥ ९ ॥

**लवङ्गिका**—[3]एदं वि तस्सिं अवसरे भअवदिं तुवराअन्तीए अवलोइदाए उदीरिअं आसि । जह अस्सद्धसरीरो माहवो त्ति ।

---

१. अवहितास्मि ।

२. स्मरामः ।

३. एतदपि तस्मिन्नवसरे भगवतीं त्वरयन्त्यावलोकितयोदीरितमासीत् । यथास्वस्थशरीरो माधव इति ।

---

मात्रादेवात्रागत्य वर्तत इत्यादि स्फुटम् ॥ **मालती** । अवहितास्मि ॥ **कामन्दकी** । प्रसङ्गतोऽस्वस्थशरीरो माधव इत्यवलोकितोक्तिप्रसङ्गात् । मनसो बन्धनम् । बध्नात्यन्यत्र गमनं निरुध्य स्वैकायत्तं करोतीति बन्धनं विश्रान्तिस्थानम् । प्रेमभाजनमित्यर्थः । **लवङ्गिका** । स्मरामः ॥ **कामन्दकी—स इति** । दुर्मनायमानो दुःखितमनस्क इवाचरन् । परवानिति परवशः । मदनोद्यानयात्रेत्यनेन प्राथमिकान्योन्यदर्शनप्रतीतेश्चक्षुःप्रीतिरुक्ता । दुर्मनायमान इति चित्तासङ्गः । त्वामुद्दिश्यासौ मदनेन तास्ता दशाः प्रापित इति निवेदयितुमवस्थान्तराण्यप्याह—**यदिन्दाविति** । इन्दावमृतमयशरीरे सकललोकाह्लादके प्रणयिनि निरतिशयप्रेमभाजने जने वा यदयमानन्दं निर्वृतिविशेषं न भजते ततोऽयमतिधीरोऽपि धैर्यवानपि विषममतिदुःसहमन्तस्तापं व्यनक्ति द्योतयति । अरतिसंतापाख्यमवस्थाद्वयमनेनोक्तम् । तथा प्रियङ्गुः फलिनीलता तद्वच्छ्यामाङ्गप्रकृतिः स्वाभाविकी देहकान्तिर्यस्य स तादृशोऽपि चापाण्डु विरहजनितपाण्डिमवत्तथापि मधुरं माधुर्यगुणवत् । 'सर्वावस्थासु चेष्टानां माधुर्यं मृदुकारिता' इति माधुर्यलक्षणम् । क्षामं क्षाममत्यन्तकृशीभूतं वपुर्वहति । न चायं व्याधिनिमित्तः कार्श्यपाण्डुतादिरित्याह—**रमणीयः** कान्तिमात्रावशेषेण मनोहराकारश्च भवति । कार्श्यं नामावस्थोक्ता । अनुमानविरोधयोः संसृष्टिः ॥ ९ ॥ **लवङ्गिका** । एतदपि तस्मिन्नवसरे भगवतीं त्वरयन्त्यावलोकि-

**कामन्दकी**—यावदहमश्रृणवं मालत्येवास्य मन्मथोन्मादहेतुरिति । ममापि स एव निश्चयः । कुतः ।

अनुभवं वदनेन्दुरुपागम-
न्नियतमेष यदस्य महात्मनः ।
क्षुभितमुत्कलिकातरलं मनः
पय इव स्तिमितस्य महोदधेः ॥ १० ॥

**माधवः**—अहो उपन्यासशुद्धिः । अहो मम च महत्त्वारोपणे यत्नः । अथवा ।

शास्त्रे प्रतिष्ठा सहजश्च बोधः
प्रागल्भ्यमभ्यस्तगुणा च वाणी ।
कालानुरोधः प्रतिभानवत्त्व-
मेते गुणाः कामदुघाः क्रियासु ॥ ११ ॥

---

तया निवेदितमासीत् । यथास्वस्थशरीरो माधव इति । **कामन्दकी—यावदिति** । मन्मथकृतोन्माद उन्मथनं कर्णाकर्णिकया श्रुत्वाहमप्येतदेवं निरचैषम् । अन्यथा तद्धैर्यचलनायोगादिति भावः । **अनुभवमिति** । एष इति मालतीमुखं चुबुकदेशे गृहीत्वा निर्दिशति । वदनेन्दुरस्य प्रकृतत्वेन बुद्धिस्थस्य लतान्तरितया च पुरोवर्तिनो माधवस्यानुभवं समुपागमद्दर्शनविषयतां प्राप्तः । नियतं निश्चितं सर्वथास्यैवंविधविषमदशाविपाकहेतुभूतं त्वदाननेन्दुदर्शनं जातमिति साध्यते । यतो महात्मनोऽतिगम्भीराशयस्य स्तिमितस्य निस्तरङ्गस्य महोदधेः पय इवोत्कलिकातरलमुत्कण्ठया कल्लोलैश्च तरलं सत्क्षुभितमपहृतधैर्यमुद्वेलं च संजातम् । यथा पयोनिधेः पूर इन्दुदर्शनादेव क्षुभ्यति न तूष्णीमेवं माधवमनःक्षोभेऽपि त्वन्मुखेन्दुदर्शनमेव निमित्तमिति कार्यात्कारणमनुमीयत इत्यर्थः । रूपकोपमाभ्यामङ्गाङ्गिभावेन संकीर्णमनुमानमलंकारः ॥ १० ॥ **माधवः—अहो इति** । उपन्यासस्य प्रतिपादनप्रकारस्य शुद्धिः पूर्वापरविरोधादिदोषराहित्यम् । महत्त्वस्यारोपणे मय्यविद्यमानस्यापि समुद्रसाम्यसंपादनाध्यारोपे यत्नो निबन्धनम् । अथवा नैतादृशानामिदमाश्चर्यम् । कुत इत्यत आह—**शास्त्र इति** । शास्त्रे प्रतिष्ठा शङ्काशूकरहितसम्यग्ज्ञानरूपा परिनिष्ठितिः । सहजः स्वाभाविको बोधोऽनभ्यस्तेष्वपि सूक्ष्मप्रमेयरहस्येषु स्वारसिकप्रसरणशालिनी प्रज्ञा । प्रागल्भ्यं प्रौढोक्तिवैचक्षण्यम् । 'निःसाध्वसत्वं प्रागल्भ्यं प्रयोगेष्वपि सर्वतः' इत्युक्तरूपं वा । तथाभ्यस्ताः प्रयत्नसंपाद्या गुणाः प्रसादमाधुर्यादयो यस्याः सा वाणी । कालानुरोधो वचनावसरनिरीक्षणम् । प्रतिभानवत्त्वं तादात्मिकनवनवोल्लेखशालिप्रतिभावत्त्वमित्येते गुणाः क्रियासु साधयितुमिष्टासु कामदुघा मनोरथपूरकाः । तेनैतद्गुणगरिष्ठाया भगवत्या

**कामन्दकी**—यतस्तेन जीवितादुद्विजमानेन दुष्करमपि न किंचिन्न क्रियते । तथा हि ।

धत्ते चक्षुर्मुकुलिनि रणत्कोकिले बालचूते
मार्गे गात्रं क्षिपति बकुलामोदगर्भस्य वायोः ।
दावप्रेम्णा सरसबिसिनीपत्रमात्रोत्तरीय-
स्ताम्यन्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥ १२ ॥

**मालती**—(स्वगतम् ।) एंव्वं दुक्करं करेदि सो ।

**कामन्दकी**—तदेवं प्रकृत्या सुकुमारः कुमारः कदाचिदप्यन्यत्रापरिक्लिष्टपूर्वस्तपस्वी । यतः शक्यमनेन मरणमप्यनुभवितुम् ।

१. एवं दुष्करं करोति सः ।

उपन्यासशुद्ध्यादिकं किमाश्चर्यमित्यर्थः ॥ ११ ॥ **कामन्दकी—यत इति** । जीवितादुद्विजमानेन त्वया विना जीवनमशक्यमिति तत्रोद्वेगवता विरहिजनस्य दुष्करमपि न किंचिन्न क्रियत इति । किंतु सर्वमपि जीवितद्वेषिणा तेन क्रियत एवेत्यर्थः । तदेवाह—**तथा हि । धत्त इति** । मुकुलिनि कोरकिते कोरकाणामेव तीक्ष्णाग्रस्मरसायकत्वेन मन्मथशरधीभूते । रणत्कोकिल इत्यनेन कंदर्पसैन्यकलकलायमानपिककुलालापवाचालतया यावच्छब्दः श्रूयते तावत्संनिहितप्रदेशगमनमप्यशक्यं किमुत दर्शनमित्युक्तम् । तस्मिन्बालतया मनोहरे सहकारे वृक्षविशेषे दृष्टिविषसर्प इव चक्षुर्धत्ते । भवितव्यं भवत्विति दृष्टिं निपातयतीत्यर्थः । किंच केसरकुसुमपरिमलमिलितस्य वायोश्चन्दनाचलमन्दसमीरणस्य मार्गे समरसमयसमापतन्नाराचधारासंपातसंनिहितशात्रवावस्थितप्रदेश इव गात्रं क्षिपति । किमनेन दुःखानुभवनिर्दयशरीरेणेति सकृत्संपरामृश्यत इति । तथा तापप्रशमनार्थं परिजनस्थापितार्द्रकमलिनीपत्रमात्रप्रावरणः । ताम्यन्ती ग्लानिमुपयान्ती मूर्तिर्यस्यासौ । केनापि शिशिरोपचारेणानिर्वापणीयोऽयं तापस्तदद्य दवदहनज्वालासंक्लेश एव निर्वापणौषधम् 'उष्णमुष्णेन शाम्यति' इति न्यायादित्येवं झटिति शरीरत्यागसाधकतमत्वेन तत्कालापेक्षिते दावे प्रेम्णा पक्षपातेन विरहिजनदावानलज्वालायमानांश्चन्द्रपादान्मृत्यवे तत्क्षणप्राणनिर्गमनाय श्रयति । तदेवमनपेक्षितजीवनोऽयमतिदुष्करं कुर्वन्नपि साहसं त्वामेव सकलविषानलादिसंस्तम्भनौषधीमनवरतमन्तःकरणे धारयन्नमङ्गलशङ्काभाजनं भवतीत्यर्थः । अत्रैकस्मिन्मृत्युलक्षणे कार्ये कुसुमितबालसहकारदर्शनादिक्रियाणां बह्वीनां साधनत्वेन समुच्चितत्वात्समुच्चयालंकारः । यदाह—'गुणक्रियायौगपद्यं समुच्चयः' इति ॥ १२ ॥ **मालती** । एवं दुष्करं करोति सः । **कामन्दकी** । तदेवमुक्तप्रकारेण मरणमप्यनेन शक्यमनुभवितुं यतोऽयं प्रकृत्या सुकुमार उत्तमसौकुमार्यशाली । तद्यथा—'सौकुमार्यं त्रिधा भिन्नं श्रेष्ठमध्याधमक्रमात् । प्रसूनपल्लवस्पर्शासहं यत्स्यात्तदुत्तमम् ॥

**मालती**—सैंहि, अत्तणो कालणादो मच्चलोआलंकारभूदस्स तस्स किं वि आसंकमाणा भूदाविट्ठा विअ ण आणामि किं पडिवज्जदित्ति ।

**माधवः**—दिष्ट्या, अनुकम्पितोऽस्मि भगवत्या ।

**लवङ्गिका**—भैअवदी एव्वंवादिणि त्ति आचक्खिअदि । अह्माणं वि भट्टिदारिआ भवणासण्णरज्झामुहमुहुत्तमण्डणस्स तस्स एव्व बहुसो अणुहूददंसणा भविअ रविअरासिलिट्ठमुद्धकमलिनीकन्दसुन्दरावअवसोहाविभाविआणङ्गवेअणावइअररमणिज्जा वि परिअणं दूणेदि । णाहिणन्दइ कलाकीलाओ । केवलं मिलाअन्तकन्तहत्थपल्लत्थगण्डमण्डला दिअहो गमेइ । अवि अ विअसिदारविन्दमअरन्द-

१. सखि, आत्मनः कारणान्मर्त्यलोकालंकारभूतस्य तस्य किमप्याशङ्कमाना भूताविष्टेव न जानामि किं प्रतिपत्स्यत इति ।

२. भगवत्येवंवादिनीत्याख्यायते । अस्माकमपि भर्तृदारिका भवनासन्नरथ्यामुखमुहूर्तमण्डनस्य तस्यैव बहुशोऽनुभूतदर्शना भूत्वा रविकराश्लिष्टमुग्धकमलिनीकन्दसुन्दरावयवशोभाविभावितानङ्गवेदनाव्यतिकररमणीयापि परिजनं दूनयति । नाभिनन्दति कलाक्रीडाः । केवलं म्लायमानकान्तहस्तपर्यस्तगण्डमण्डला दिवसान्गमयति । अपि च विकसितारविन्दमकरन्दविष्य-

इति । अनुभूतपूर्वत्वाद्विकारस्य दुःसहत्वमुक्तं कदाचिदिति । तपस्व्यनुकम्पनीयः। यद्वा त्वत्समागमायैव महते पुरुषार्थाय त्वद्विरहव्यथानुभवलक्षणं सुदुष्करं तपश्चरतीति तपस्वी । कुमार इति प्रागकृतदारपरिग्रहत्वं पित्रोः कुशलित्वं च व्यज्यते ॥ **मालती** । सखि, आत्मनः कारणान्मर्त्यलोकालंकारभूतस्य तस्य किमप्याशङ्कमाना भूताविष्टेव न जानामि किं प्रतिपत्स्यत इति । किमपीति मरणं निर्दिशति । भगवतीवचनस्य किमुत्तरं देयमित्यहं न जानामि । त्वमेव यथोचितं मदवस्थानिवेदनादिकमुत्तरं देहीत्याशयः ॥ **माधवः—दिष्ट्येति** । भाग्यवशादेव मदवस्थां प्रकटयन्त्या भगवत्यानुकम्पितोऽस्मि । यद्वा जनान्तिकमपि लतामात्रान्तरितत्वादन्तिकस्थेन माधवेन श्रुतं वाक्यमिति तद्वचनाकर्णनहर्षवशादियमुक्तिः ॥ **लवङ्गिका** । भगवत्येवंवादिनीत्याख्यायते । अस्माकमपि भर्तृदारिका भवनासन्नरथ्यामुखमुहूर्तमण्डनस्य तस्यैव बहुशोऽनुभूतदर्शना भूत्वा । चक्षुःप्रीतिरनेनोक्ता । रविकराश्लिष्टमुग्धकमलिनीकन्दसुन्दरावयवशोभाविभावितानङ्गवेदनाव्यतिकररमणीयापि परिजनं दूनयति । अङ्गग्लानिः पाण्डिमा च कथितः । नाभिनन्दति कलाक्रीडाः । नृत्तगीतादयः कलाः । अरतिरुक्ता । केवलं म्लायमानकान्तहस्तपर्यस्तगण्डमण्डला दिवसान्गमयति । चिन्ता सूचिता । अपि च विकसितारविन्दमकरन्दवि-

विस्सन्दसुन्दरेण दरदलिअकुन्दमाअन्दमहुविन्दुसंदोहवाहिणा भवणुज्जाणपेरन्तमारुएण उत्तम्मिअदि । अण्णं अ जदो प्पहुदि तस्सिं दिअहे णिअमहूसवब्भुदअदंसणत्थं पडिवण्णरूवस्स कामकाणणालंकारिणो भअवदो मम्महस्स विअ तस्स माहवस्स विविहविब्भमाणुराआणुबन्धमहग्घीकिदजोव्वणारम्भं अण्णोण्णदिट्ठिविणिवाअवञ्चणावसरज्जुवरिदचित्तुवरन्तकोऊहलुल्लसिअसद्धसत्थम्भमन्थराव अवपडिलग्गसेदपुलअकम्पाणन्दिअसहीअणं परस्परावलोअनसुहं समासादिअं । तदो प्पहुदि सविसेसदूसहाआसविअम्भणुद्दामदारुणं दसापरिणामं अणुहोन्ती मुहुत्तसंपत्तपुण्णचन्दोदआ विअ बालकमलिणी परिमिलाअदि । तह वि मुहुत्तमेत्तहिअअविणिहिदणिम्माअन्तवल्लहसमाअमा णिब्भरसलिलासारसिच्चमाणा विअ मेदिणी सीअलाअ-

---

न्दसुन्दरेण दरदलितकुन्दमाकन्दमधुविन्दुसंदोहवाहिना भवनोद्यानपर्यन्तमारुतेनोत्ताम्यति । अन्यच्च यतः प्रभृति तस्मिन्दिवसे निजमहोत्सवाभ्युदयदर्शनार्थं प्रतिपन्नरूपस्य कामकाननालंकारिणो भगवतो मन्मथस्येव तस्य माधवस्य विविधविभ्रमानुरागानुबन्धमहर्घीकृतयौवनारम्भमन्योन्यदृष्टिविनिपातवञ्चनावसरज्वरितचित्तत्वरत्कौतूहलोल्लसितसाध्वसस्तम्भमन्थरावयवप्रतिलग्नस्वेदपुलककम्पानन्दितसखीजनं परस्परावलोकनसुखं समासादितम् । ततः प्रभृति सविशेषदुःसहायासविजृम्भणोद्दामदारुणं दशापरिणाममनुभवन्ती मुहूर्तसंप्राप्तपूर्णचन्द्रोदयेव बालकमलिनी परिम्लायति । तथापि मुहूर्तमात्रहृदयविनिहितनिर्मीयमाणवल्लभसमागमा निर्भरसलिलासारसिच्यमानेव मे-

---

ष्यन्दसुन्दरेण दरदलितकुन्दमाकन्दमधुविन्दुसंदोहवाहिना भवनोद्यानपर्यन्तमारुतेनोत्ताम्यति । उद्दीपनविभावनाजनितवेदनातिशयोक्तिः । अन्यच्च यतः प्रभृति तस्मिन्दिवसे निजमहोत्सवाभ्युदयदर्शनार्थं प्रतिपन्नरूपस्य स्वीकृतशरीरस्य भगवतो मदनस्येव कामकाननालंकारिणस्तस्य माधवस्य विविधैर्विभ्रमैर्विलासैरनुरागानुबन्धेन समुचितप्रियजनगोचराभिलाषप्रकर्षेण च महर्घीकृतोऽतिश्लाघनीयः । संपादनीय इति यावत् । यौवनारम्भो यस्य तत्तथा । अन्योन्यदृष्टिविनिपातवञ्चनावसरे ज्वरितं खेदितं यच्चित्तं तस्मिंस्त्वरमाणेन कौतूहलेनोल्लसितेषु साध्वसजनितात्स्तम्भान्मन्थरेषु चेष्टाविहीनेष्ववयवेषु प्रतिलग्नाः स्वेदपुलककम्पाः सात्त्विकभावास्तैरानन्दितसखीजनं परस्परावलोकनसुखं समासादितं मालत्या । ततः प्रभृति सविशेषदुःसहायासविजृम्भणोद्दामदारुणं दशापरिणाममनुभवन्ती मुहूर्तसंप्राप्तपूर्णचन्द्रोदयेव बालकमलिनी परिम्लायति । तथापि मुहूर्तमात्रहृदयविनिहितनिर्मीयमाणवल्लभसमागमा निर्भरसलिलासारसिच्यमानेव मेदिनी शीतलायत इति

दि त्ति जाणामि । जेण पप्फुरिदरदणच्छदुज्जलन्तदन्तमोत्तिअपन्ति-कन्तिसविसेससोहिअं णिरन्तरुल्लसिअपुलअपह्मलकपोलघोलन्तसंददाणन्दवाहत्थवअं ईसविसमणिप्पन्दमन्थरतारुत्ताणमसिणमुउला-अन्तणेत्तणीलुप्पलं अविरलुब्भिण्णसेअजलबिन्दुसुन्दरणिडलचन्दले-हामणोहरं मुद्धमुहपुण्डरीअं उव्वहन्ती विअड्ढसहअरीचित्तसंसइदको-मारभावा होइ । किं अ, उद्दामससिमऊहणिउरुम्बचुम्बिअपउत्त-णिस्सन्दचन्दमणिहारधारिणी पउरकप्पूरसविसेससिसिरचन्दणरस-च्छडासारणिअरदन्तुरिदबालकदलीपत्तसअणा पादसंवाहणादिवावा-रतुवरन्तसहअरीसत्थविरइदोवणीदकमलिणीदलजलद्दतालउन्ता उ-ण्णिद्दा एव्व रअणीओ गमेइ । कहं वि उवलद्धणिद्दासुहा पक्खालि-

---

दिनी शीतलायत इति जानामि । येन प्रस्फुरितरदनच्छदोज्ज्वलद्दन्तमौक्तिक-पङ्क्तिकान्तिसविशेषशोभितं निरन्तरोल्लसितपुलकपक्ष्मलकपोलघूर्णमानसंतता-नन्दवाष्पस्तवकमीषद्विषमनिष्पन्दमन्थरतारोत्तानमसृणमुकुलायमाननेत्रनीलोत्प-लमविरलोद्भिन्नस्वेदजलबिन्दुसुन्दरनिटिलचन्द्रलेखामनोहरं मुग्धमुखपुण्डरी-कमुद्वहन्ती विदग्धसहचरीचित्तसंशयितकौमारभावा भवति । किं च उ-द्दामशशिमयूखनिकुरुम्बचुम्बितप्रवृत्तनिष्यन्दचन्द्रमणिहारधारिणी प्रचुरकर्पू-रसविशेषशिशिरचन्दनरसच्छटासारनिकरदन्तुरितबालकदलीपत्रशयना पादसं-वाहनादिव्यापारत्वरमाणसहचरीसार्थविरचितोपनीतकमलिनीदलजलार्द्रतालवृ-न्तोन्निद्रेव रजनीर्गमयति । कथमप्युपलब्धनिद्रासुखा प्रक्षालितपादपल्लवोद्ध-

---

जानासि । येन प्रस्फुरितरदनच्छदोज्ज्वलद्दन्तमौक्तिकपङ्क्तिकान्तिसविशेषशोभितं निरन्तरोल्लसितपुलकपक्ष्मलकपोलघूर्णमानसंततानन्दवाष्पस्तवकम् । 'बाहथेवम्' इति पाठे थेवो बिन्दुः । ईषद्विषमनिष्पन्दमन्थरतारोत्तानमसृणमुकुलायमान-नेत्रनीलोत्पलमविरलोद्भिन्नस्वेदजलबिन्दुसुन्दरनिटिलचन्द्रलेखामनोहरम् । नि-टिलो ललाटः । मुग्धमुखपुण्डरीकमुद्वहन्ती विदग्धसहचरीचित्तसंशयितकौमार-भावा भवति । येन कारणेन दन्तच्छदस्फुरणरोमाञ्चानन्दवाष्पदृग्विकारविशेष-स्वेदप्रभृतिभिः संभोगचिह्नैर्विदग्धसखीनां चित्ते संशयविषयीकृतः कुमारीभावो यस्याः सा।कथमियं कुमार्यपि विदग्धनायकोपभुक्तेव संभोगचिह्नालंकृतेत्येवं संदिह्य-माना भवति, तेन कारणेन हृदयनिहितवल्लभनिर्माणसंभोगसौहित्यनिर्वापितेयमिति जानामीति योज्यम् । एतत्सर्वमस्माभिः 'नीवीबन्ध–' इत्यादावेव व्याख्यातमिति नेह प्रतन्यते । किं च, उद्दामशशिमयूखनिकुरुम्बचुम्बितप्रवृत्तनिष्यन्दचन्द्रमणिहा-रधारिणी प्रचुरकर्पूरसविशेषशिशिरचन्दनरसच्छटासारनिकरदन्तुरितबालकदली-पत्रशयना पादसंवाहनादिव्यापारत्वरमाणसहचरीसार्थविरचितोपनीतकमलिनीद-

दपादपल्लवुव्वमन्तपिण्डालत्तअरसा थरथरायन्तपीवरोरुमूलपासविसंवादिअणीविबन्धणा उक्खुब्भन्तहिअअन्तरुत्तरङ्गणिस्सासविसमऊस्ससन्तपुलकपह्मलपओधरोवरिविक्खित्तवेवन्तभुअलदावेढ्ढणबन्धणा झत्ति पडिबोधवेलाविसज्जिआपङ्गदिट्ठिविणिवाअविण्णाणसुण्णसअणिज्जसंजादमोहमीलन्तलोअणा ससंभमसहीअणपअत्तपडिवण्णमुच्छाविच्छेअसमअसंगलिअदीहणीसासजणिदजीविदासा किंकादव्वदामूढं पढमं पत्थिअणिअजीविदावसाणं दुव्वारदेव्वदुव्विलसिदोवालम्भमेत्तवावारं सहीअणं करेइ । ता पेक्खदु भअवदी । इमेसु दाव लावण्णभूइट्ठणिम्माणपरिपेसलेसु अङ्गेसु दारुणविअम्भिअस्स किअच्चिरं

---

मत्पिण्डालक्तकरसा थरथरायमानपीवरोरुमूलपार्श्वविसंवादितनीवीबन्धनोत्क्षुभ्यमानहृदयान्तरोत्तरङ्गनिःश्वासविषमोच्छ्वसत्पुलकपक्ष्मलपयोधरोपरिविक्षिप्तवेपमानभुजलतावेष्टनबन्धना झटिति प्रतिबोधवेलाविसर्जितापाङ्गदृष्टिविनिपातविज्ञानशून्यशयनीयसंजातमोहमीलल्लोचना ससंभ्रमसखीजनप्रयत्नप्रतिपन्नमूर्च्छाविच्छेदसमयसंगलितदीर्घनिश्वासजनितजीविताशा किंकर्तव्यतामूढं प्रथमं प्रार्थितनिजजीवितावसानं दुर्वारदैवदुर्विलसितोपालम्भमात्रव्यापारं सखीजनं करोति । तत्पश्यतु भगवती । एषु तावल्लावण्यभूयिष्ठनिर्माणपरिपेशलेष्वङ्गेषु दारुणविजृम्भितस्य कियच्चिरं कुशलावसानता मन्म-

---

लजलार्द्रं तालवृन्तं यस्याः सा । उन्निद्रेव रजनीर्गमयति । जागरावस्था दर्शिता । कथमप्युपलब्धनिद्रा च निद्रैव सुखं स्वप्ने प्रियतमसमागमौपधायकत्वात्तदेवाह । प्रक्षालिताभ्यामविरलस्वेदजलक्षालिताभ्यां पादपल्लवाभ्यामुद्वमन्नुद्वान्तः पिण्डालक्तकरसो यया सा । थरथरायन्तेति देशीयपदं कम्पवाचकम् । कम्पमानपीवरोरुमूलपार्श्वाद्विसंवादितं विगलितं नीवीबन्धनं यस्याः सा । उत्क्षुभ्यमानहृदयान्तरोत्तरङ्गनिःश्वासैर्विषममनेकप्रकारमुच्छ्वसन्तौ पुलकपक्ष्मलौ सरोमाञ्चौ पयोधरौ तयोरुपरि विक्षिप्तवेपमानभुजलतावेष्टनबन्धना । स्वेदवेपथुनीवीस्रंसननिःश्वासरोमाञ्चभुजलतावलयवेष्टनैः स्वप्नसमागमे प्रियतमगाढालिङ्गनसौख्यमनयानुभूतमित्यर्थः । झटिति प्रतिबोधवेलाविसर्जितापाङ्गदृष्टिविनिपातेन विज्ञानशून्यं तादृशबाहुपाशान्तर्गतकण्ठावलम्बितनायकविरहितं यच्छयनीयं तेन संजातो यो मोहस्तेन मीलल्लोचनं यस्याः सा । ससंभ्रमः सोद्वेगो यः सखीजनस्तस्य प्रयत्नैर्व्यजनवीजनहिमवालुकासेकादिरूपैः प्रतिपन्नो यो मूर्च्छाविच्छेदस्तत्समये संगलितः संभूय विनिर्गतश्चिरकालनिरोधाद्यो दीर्घनिःश्वासस्तेन जनिता जीविताशा यस्याः सा । किंकर्तव्यतामूढं प्रथमं प्रार्थितनिजजीवितावसानं दुर्वारदैवदुर्विलसितोपालम्भमात्रव्यापारं सखीजनं करोति । तत्पश्यतु भगवती । एषु तावल्लावण्यभूयिष्ठं यन्निर्माणं तेन परिपेशलेषु सुकुमारेष्वङ्गेषु विजृम्भितस्य मन्मथस्य कियच्चिरं कि-

कुसलावसाणदा मम्महस्स । कहं अ इमाइं रमणकेलिकलहकोवराअ-पल्लविदकेरलीकपोलकोमलुव्वेल्लविमलचन्दिओद्दामदलिअतिमिराव-रणाइं विभावरीमुहाइं । इमे अ उल्लसिददुद्धधारापूरधवलुज्जलन्तजो-ण्हापक्खालिअनहोङ्गणा परिमलिअपाडलीमुउलणिम्महणवहुलपरिम-लुप्पीडसंकलणमसिणमंसलमलअमारुदुद्धूमायिदढसदिसामुहा अनत्थ-आरिणो होन्ति रअणीपरिणामा अ पिअसहीए ।

**कामन्दकी—**

यदि तद्विषयोऽनुरागवन्धः
स्फुटमेतद्धि फलं गुणज्ञतायाः ।
इति नन्दितमप्यवस्थयास्या
हृदयं दारुणया विदीर्यते मे ॥ १३ ॥

---

थस्य । कथं चेमानि रमणकेलिकलहकोपरागपल्लवितकेरलीकपोलकोमलोद्वे-लविमलचन्द्रिकोद्दामदलिततिमिरावरणानि विभावरीमुखानि । इमे चोल्लसित-दुग्धधारापूरधवलोज्ज्वलज्ज्योत्स्नाप्रक्षालितनभोङ्गणाः परिमलितपाटलीमुकुलनि-र्मथनबहुलपरिमलोत्पीडसंकलनमसृणमांसलमलयमारुतोद्धूमायितदशदिङ्मुखा अनर्थकारिणो भवन्ति रजनीपरिणामाश्च प्रियसख्याः ।

---

यतः कालस्य कुशलावसानता क्षेमपर्यवसायित्वम् । भविष्यतीति शेषः । इदानीं मालत्यङ्गेषु दारुणकर्मणः स्मरस्येतः परं कदा वा प्रियतमसंघट्टनेन कुशल-कारित्वं भविष्यतीत्यर्थः । कथं चेमानि रमणेन सह यः केलिकलहः कोपस्ते-नोपनीतो यो रागः कोपरागस्तेन पल्लवितौ संजातपल्लवौ यौ केरलीकपोलौ तद्वत्कोमला उद्वेला विमला च या चन्द्रिका तयोद्दामं प्रगल्भं दलितानि तिमि-रावरणानि येषु तानि विभावरीमुखानि । इमे चोल्लसितदुग्धधारापूरधवलो-ज्ज्वलज्ज्योत्स्नाप्रक्षालितनभोङ्गणाः । परिमलितं संजातपरिमलं यत्पाटलमुकुलं तस्य यन्निर्मथनं तेन यो बहुलपरिमलस्योत्पीड उद्गारस्तेन यत्संकलनं मिश्रीभावस्तेन मसृणः स्निग्धो मांसलः पुष्टो यो मलयमारुतस्तेनोद्धूमायिता दशदिङ्मुखा अनर्थ-कारिणो भवन्ति रजनीपरिणामाः प्रियसख्याः । ईदृशानि रजनीमुखानि ईदृ-शाश्च रजनीपरिणामाः प्रियसख्याः । कथं केन वा प्रकारेणानर्थकारिणो भवन्ती-त्येतदपि भगवती पश्यत्विति संबन्धः । 'न भवन्ति' इति पाठे कथमनर्थकारिणो न भवन्ति । भवन्त्येवेत्यर्थः । रजनीमुखपरिणामयोरनर्थहेतुत्वेनैव कृत्स्नस्य रात्रिंदि-वस्य तादृशत्वं दर्शितम् ॥ **कामन्दकी—यदीति** । यद्ययमनुरागबन्धो गाढा-नुरागस्तद्विषयो माधवालम्बनस्तर्हि स्फुटं व्यक्तमेतदेव । हिशब्द एवकारार्थे । गुणज्ञतायाः फलमित्येवमनेनानुरागस्थैर्येणानन्दितं प्रारब्धकार्यानुकूल्येन जाता-

**माधवः**—अहो, स्थान एवाभ्युल्लासो भगवत्याः ।

**कामन्दकी**—अहो प्रमादः ।

प्रकृतिललितमेतत्सौकुमार्यैकसारं
वपुरयमपि सत्यं दारुणः पञ्चबाणः ।
चलितमलयवातोद्धूतचूतप्रसूनः
कथमयमपि कालश्चारुचन्द्रावतंसः ॥ १४ ॥

**लवङ्गिका**—[1]अण्णं अ जाणीदं होदु भअवदीए । एदं अ माहवप्पडिच्छन्दअसणाहं चित्तफलअं । (माल्त्याः स्तनांशुकमपनीय ।) एसा वि तस्स एव्व सहत्थविरइदेत्ति कण्ठावलम्बिआ बउलमाला संजीवणं पिअसहीए । (इति बकुलमालां दर्शयति ।)

---

१. अन्यच्च ज्ञातं भवतु भगवत्या । एतच्च माधवप्रतिच्छन्दकसनाथं चित्रफलकम् । एषापि तस्यैव स्वहस्तविरचितेति कण्ठावलम्बिता बकुलमाला संजीवनं प्रियसख्याः ।

---

नन्दमपि मे हृदयमस्या दारुणया त्वदुक्तयावस्थया विदीर्यते। सुकुमारतया झटित्यनिष्टोपनिपातमशङ्कय विदीर्णमिव भवतीत्यर्थः ॥ १३ ॥ **माधवः**। अभ्युल्लासोऽनिष्टाशङ्कया हृदयस्योद्वेगः । स्थाने युक्त इत्यर्थः ॥ **कामन्दकी**। प्रमादोऽस्मदीयानवधानता । अहो आश्चर्यम्। यदिदानीमपि त्वया संदिहानेनैव प्राणव्ययेनापि मालतीसमागमं प्रति विलम्ब्यत इत्यर्थः । विलम्बनानौचित्यमेवाह—**प्रकृतीति** । प्रकृत्यैव ललितम् । ललितं नाम यौवनारम्भसंभवश्रृङ्गारानुगुणो गात्रारम्भः । यथा—'सुकुमारोऽङ्गविन्यासः सभ्रूनेत्राधरक्रियः । अनुल्बणश्च मसृणः स्त्रीणां ललितमीरितम् ॥'इति । तद्योगाल्ललितमेतस्या वपुः सौकुमार्यैकसारं सौकुमार्यमात्रस्थिरांशम्। सौकुमार्यमेवास्य वपुषोऽवलम्बनं नान्यः सत्त्वयोग इत्यर्थः।'प्रसूनपल्लवस्पर्शासहं यत्स्यात्तदुत्तमम्'इत्युक्तमुत्तमसौकुमार्यमत्र विवक्षितम्। अयं पुनः पञ्चबाणो दारुणो घोरतरव्यापारः । अस्तु नामैतत् । कथमयं कालोऽपि मन्दमन्दसंचारिचन्दनाचलगन्धवहकम्पितसहकारकुसुमनिकरस्तुषारवारिदायवग्रहाभावाच्चारुचन्द्र एवावतंसो यस्य स तादृश इदानीमेवोपस्थितः । कष्टमनर्थपरम्परा संसिलितेत्याशयः । अनेन विधूतं नामाङ्गमुक्तम् । यथा—'विधूतमरतिर्यूनोः सुरताप्राप्तिसंभवा' इति ॥ १४ ॥ **लवङ्गिका** । अन्यच्च ज्ञातं भवतु भगवत्या । एतच्च माधवप्रतिच्छन्दकसनाथं चित्रफलकम्। माधवानुरागप्रकर्षद्योतकमिदमप्येकं भगवत्या ज्ञातव्यमित्यर्थः। स्तनांशुकमिति कण्ठावलम्बितस्रगवलोकनार्थम् । एषापि तस्यैव स्वहस्तविरचितेति कण्ठावलम्बिता बकुलमाला संजीवनं प्रियसख्याः। तदेवं भगवत्या माधवं प्रति माल्त्यनुरागे न किंचिदपि संशयितव्यम्। यथा-

माधवः—

जितमिह भुवने त्वया यदस्याः
सखि बकुलावलि वल्लभासि जाता ।
परिणतबिसदण्डकाण्डपाण्डु-
स्तनपरिणाहविलासवैजयन्ती ॥ १५ ॥

( नेपथ्ये कलकलः । सर्वे आकर्णयन्ति ।)

रे[1] रे संकरपुरवासिजाणपदा, एसो क्खु जोव्वणारम्भभरिददुव्वि-सहामरिसरोसवइअरबलामोडीअविघडिदुग्घडिअलोहपञ्जरपडिलग्गसं-गलिअणिअलो णिअलीलाविलासुव्वेलिअवल्लहतुङ्गलङ्गूलविअडवैजअ-न्तिआविसमडामरुद्दामसरीरसंणिवेसो मठादो अवक्कमिअ तक्खणस-तिण्णकवलिआणेअदेहिदेहावअवमज्झणिट्ठुरत्थिखण्डखण्डणटंकारक-

१. रे रे शंकरपुरवासिजानपदाः, एष खलु यौवनारम्भभरितदुर्विषहा-मर्षरोषव्यतिकरबलात्कारविघटितोद्घाटितलोहपञ्जरप्रतिलग्नसंगलितनिगलो नि-जलीलाविलासोद्वेल्लवल्लभतुङ्गलाङ्गूलविकटवैजयन्तिकाविषमडामरोद्दामशरीर-संनिवेशो मठादपक्रम्य तत्क्षणसतृष्णकवलितानेकदेहिदेहावयवमध्यनिष्ठुरास्थि-

कथंचित्संघटनोपाय एव झटिति प्रयोज्य इत्याशयः ॥ **माधवः—जितमिति ।** सखि, पूर्वं मत्कण्ठावलम्बिनी भूत्वेदानीं मत्प्रियतमाकण्ठप्रणयिनीत्वेन मत्प्रयोजन-संपादनैकप्रवणतया मम वयस्यभूते बकुलावलि, इह भुवने सर्वस्मिन्नपि प्रपञ्चे त्वयैव जितं सर्वातिशाय्युत्कर्षो लब्धः । यतोऽस्याः प्रियाया वल्लभा जातासि । मया हि कथमस्या मदनुरागसूचकसस्पृहावलोकनगोचरो भवेयम्, कथमेतदीयशरीरसं-स्पर्शसंजातसौहित्यनिर्वृतो भूयासम्, कथं क्षणमप्येतत्कण्ठालिङ्गनमहोत्सवचरिता-र्थजीवनः स्यामिति संततं यदाशास्यते तदेतत्त्वया निरन्तरतत्कुचमण्डलीमण्डनाय-मानया संततं सस्पृहावलोकननिर्वर्ण्यमानया ममेयं जीवितालम्बनभूता प्रियसखी-त्यनवरतमभिनन्द्यमानया सहस्रगुणमधिगतमित्यहो ते सौभाग्यातिशय इति भावः । इदमेव विशेषणेन दर्शयति—परिणतो यो बिसदण्डस्तस्य काण्डः पर्व-देशस्तद्वत्पाण्डुर्यः स्तनपरिणाहः कुचाभोगस्तस्य यो विलास उज्जृम्भणं तस्य वैजयन्ती पताका उत्कर्षद्योतिका । अनेन माधवस्य स्वहस्तनिर्मितबकुलमालि-कायाः प्रियतमाकण्ठाभरणत्वज्ञानेन हर्षप्रतीतेररत्युपशमाच्छमो नामाङ्गमुक्तम् । यथा—'अरत्युपशमः शमः' इति । काव्यलिङ्गमलंकारः ॥ १५ ॥ एवमन्यो-न्यानुरागव्यञ्जकेन परस्परावस्थानिवेदनेन शृङ्गारं परिपोष्य रसान्तरेण तं तिरो-धातुं चूलिकाख्यमर्थोपक्षेपमाह—**नेपथ्य इति ।** 'अन्तर्यवनिकासंस्थैश्चूलिका-र्थस्य सूचना' इति चूलिकालक्षणम् । रे रे शंकरपुरवासिजानपदाः, एष खलु यौ-

टकटाअन्तकरपत्तकठिणदाढाकरालमुहकन्दरो विअडविअम्भणुद्दामदारुणछपेडामोडिअपरिमिलिअणरतुरङ्गजङ्गलुग्गालभरिअगलगुहागब्भगम्भीरगग्गरो रल्लिग्गल्लूरणसद्दसंदब्भपरिपूरिअणहोअलो णिहदणिप्पेसिदणट्ठणिट्ठाविदासेसजणणिवहो कठोरणहरकप्परदलिआकट्ठजन्तुगत्तावअवपउत्तरत्तकद्दमिअगइपहो दुट्ठसद्दूलो कअन्तलीलाइदं करेदि । ता पडिरक्खह जहसत्ति अत्तणो जीविदं ति ।

---

खण्डखण्डनटंकारकटकटायमानकरपत्रकठिनदंष्ट्राकरालमुखकन्दरो विकटविजृम्भणोद्दामदारुणचपेटामोटितपरिमिलितनरतुरङ्गजाङ्गलोद्गारभरितगलगुहागर्भगभीरघर्घरो रल्लिगल्लूरणशब्दसंदर्भपरिपूरितनभस्तलो निहतनिष्पेषितनष्टनिष्ठापिताशेषजननिवहः कठोरनखरकर्परदलिताकृष्टजन्तुगात्रावयवप्रवृत्तरक्तकर्दमितगतिपथो दुष्टशार्दूलः कृतान्तलीलायितं करोति । तत्परिरक्षत यथाशक्त्यात्मनो जीवितमिति ।

---

वनारम्भेण भरितौ पूर्णौ दुर्विषहौ यावमर्षरोषावक्षमाक्रोधौ । यद्वा स्थिरक्रोधतात्कालिककोपौ । यथाहुः—'क्रोधः कृतापराधेषु स्थिरोऽमर्षलमश्नुते । रोषस्तात्कालिकः कोपः' इति । तयोर्व्यतिकरेण संमेलनेन यो बलात्कारस्तेन पूर्वं विघटितं भञ्जितं पश्चादुद्घाटितमपसारितद्वारबन्धनं यल्लोहपञ्जरं तत्रैव प्रतिलग्नः संसक्तः संगलितः स्वचरणाद्विगलितो निगलः शृङ्खला यस्य सः । निजः स्वकीयः पञ्जरनिगलबन्धापगमाच्चिरस्य लब्धो यो लीलया स्वाच्छन्द्येन विलासश्चङ्क्रमणारूपो विहारस्तेनोद्वेल्ल ऊर्ध्वप्रसारितो वल्लभः प्रियतमस्तुङ्ग उन्नतो यो लाङ्गलो बालदण्डः स एव विकटवैजयन्तिका विकृताकारपताका तया विषमो दुर्दर्शो डामरो भीषण उद्दामः प्राचण्ड्यमण्डितः शरीरसंनिवेशो यस्य सः । मठादपक्रम्य तत्क्षणेऽपक्रमण एव सतृष्णं यथा स्यात्तथा कवलितानामनेकदेहिदेहानामवयवास्तेषां मध्ये ये निष्ठुराः परुषा अस्थिखण्डास्तेषां खण्डनेन दन्तैर्निष्पीडनेन जनितो यष्टंकारस्तेन कटकटायमाना कटकटाशब्दं कुर्वाणा करपत्रवत्ककचवत्कठिना या दंष्ट्रा तया करालो दन्तुरो मुखकन्दरो वदनकुहरं यस्य सः । तथा विकटं यद्विजृम्भणं विहरणं तेनोद्दामदारुणः प्रचण्डभीषणो यश्चपेटो विस्तृताङ्गुलिः करः । 'पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ' इत्यमरः । तेनामोटितं मर्दितम् । 'मुट प्रमर्दने' इति धातोरेतद्रूपम् । परितो मिलितं यन्नरतुरङ्गस्य जाङ्गलं सरक्तं मांसं तस्य य उद्गार आधिक्याद्वमनं तेन भरिता परिपूर्णा गलगुहा तस्या गर्भे गम्भीरो घर्घरो यस्य । रल्लीति देशी पदं दीर्घमधुरध्वनिवाचि । दीर्घमधुरो गल्लूरणशब्दो मांसभक्षणसमयकुपितशार्दूलजातिप्रयुक्तं कण्ठगर्जितं तस्य संदर्भो विपुलत्वं तेन परिपूरितं नभस्तलं येन सः । तथा केचिन्निहताः, केचिन्निष्पेषिताश्चूर्णीकृताः, केचिन्नष्टा अदर्शनं गमिताः, केचिन्निष्ठापिता निष्ठां निर्भयस्थानपर्यन्तं गमिता येऽशेषजनास्तेषां निवहो यस्य सः । कश्चित्

(प्रविश्य संभ्रान्ता)

**बुद्धरक्षिता**—परित्ताअध[1] । एसा णो पिअसही अमच्चणन्दणस्स भइणी मदअन्तिआ एदिणा दुट्ठसद्दूलेण हदविद्दाविअपरिअणा अभिभविअदि ।

**मालती**—सहि लवङ्गिए, अहो महन्तो पमादो[2] ।

**माधवः**—बुद्धरक्षिते, क्वासौ ।

**मालती**—(सहर्षसाध्वसम् । स्वगतम् ।)[3]अह्महे, एसो वि एत्थ एव्व ।

**माधवः**—(स्वगतम् ।) हन्त, पुण्यवानस्मि यदहमतर्कितोपनतदर्शनोल्लसितयानया ।

अविरलमिव दाम्ना पौण्डरीकेण नद्धः
स्नपित इव च दुग्धस्रोतसा निर्भरेण ।

---

१. परित्रायध्वम् । एषा नः प्रियसख्यमात्यनन्दनस्य भगिनी मदयन्तिकैतेन दुष्टशार्दूलेन हतविद्रावितपरिजनाभिभूयते ।

२. सखि लवङ्गिके, अहो महान्प्रमादः ।

३. अहो, एषोऽप्यत्रैव ।

---

'भीषितनष्टनिष्ठापिता' इति पाठः । तत्र पूर्वं भीषिताः, पश्चान्नष्टा दृग्विषयमतीताः, पश्चान्निष्ठापिता निर्भयस्थानं प्रापिता इति व्याख्येयम् । तथा कठोरनखरकर्परदलिताकृष्टजन्तुगात्रावयवप्रवृत्तरक्तकर्दमितगतिपथो दुष्टशार्दूलः कृतान्तलीलायितं करोति । तत्परिरक्षत यथाशक्त्यात्मनो जीवितमिति ॥ **बुद्धरक्षिता** । परित्रायध्वम् । एषा नः प्रियसख्यमात्यनन्दनस्य भगिनी मदयन्तिकैतेन दुष्टशार्दूलेन हतविद्रावितपरिजनाभिभूयते । **मालती** । सखि लवङ्गिके, अहो महान्प्रमादः । चिरमत्र विजने वनेऽस्माभिरेकाकिनीभिः स्थितमनुचितं कृतम् । इदानीं कः परित्रातेति भावः ॥ **माधवः** । असौ कुत्र वर्तते । इदानीमेव निहत्य भवत्सखीं मोचयिष्यामीत्यर्थः ॥ **मालती** । सहर्षसाध्वसमिति । लवङ्गिकानिवेदितस्वकीयविरहवेदनाचित्रफलकबकुलावलीवृत्तान्तः सर्वोऽप्यत्रैव वर्तमानेनाधिगत इति हर्षः, विविक्ते मामेनं च दृष्ट्वा कश्चित्ताताय निवेदयिष्यतीति साध्वसं च अह्महे अहो प्रमादः । चिन्तायां सप्रमादायामह्महे इति कल्पितम् । शब्दरूपं विशेषेण प्रयोक्तव्यं प्रयोक्तृभिः ॥' इति वचनात् । एषोऽप्यत्रैव । **माधवः** । यदित्यादि श्लोकोपस्कारः । **अविरलेति** । अतर्कितोपनतमशङ्कितमेव हठादुपागतं यद्दर्शनं मद्विषयं तेनोल्लसितयाश्चर्यहर्षपरवशतयानया कर्त्र्या स्फारितेन विस्तारितेन । 'आयतं विस्फुरत्तारं विस्फारितमुदाहृतम्' इति लक्षणात् । चक्षुषा करणेन पौण्डरीकेण सिताम्भोजनिर्मितेन दाम्नाविरलं नद्धो बद्ध इव । अहमिति शेषः । दामलं च कटा-

कवलित इव कृत्स्नश्चक्षुषा स्फारितेन
प्रसभममृतमेघेनैव सान्द्रेण सिक्तः ॥ १६ ॥

**बुद्धरक्षिता**—[1]महाभाअ, एसो खु उज्जाणवाहिअरज्झामुहे ।

**माधवः**—(साटोपम् ।) अप्रमत्तोऽस्मि ।

**मालती**—[2]लवङ्गिए, संसओ खु जादो ।

**माधवः**—(सबीभत्सम् ।) अहह ।

संसक्तत्रुटितविवर्तितान्त्रजाल-
व्याकीर्णस्फुरदपवृत्तरुण्डखण्डः ।
कीलालव्यतिकरगुल्फदघ्नपङ्कः
प्राचण्ड्यं वहति नखायुधस्य मार्गः ॥ १७ ॥

अहो प्रमादः ।

वयं बत विदूरतः क्रमगता पशोः कन्यका

---

१. महाभाग, एष खलूद्यानवाह्यरथ्यामुखे ।
२. लवङ्गिके, संशयः खलु जातः ।

---

क्षाणां पङ्क्तीभूयाविरलनिपातनात् । नद्धत्वेन निष्क्रयत्वमात्मनो दर्शयन्स्तम्भाख्यं सात्विकभावमभिव्यनक्ति । तथा निर्भरेण संपूर्णेन दुग्धस्रोतसा पयःप्रवाहेण स्नपित इव । क्षीरपूरस्नपनेनात्मनः सौहित्यप्रकर्षं व्यनक्ति । कृत्स्नः समस्त एवाहं कवलितो निगीर्णो विषयमाधुर्योत्कर्षाच्चक्षुषा स्वान्तःप्रवेशित इव । तस्याश्चिरकालदर्शनेनाप्यतृप्तिमनेन सूचयति । अमृतवर्षिणा मेघेन सान्द्रेण सिक्त इव । अनेन धारासारन्यायेन कटाक्षप्रवृत्तेर्लोलाख्यो दृष्टिव्यापार उक्तः । यथा—'धारावाहिकसंचारो यस्य तल्लोलमुच्यते' इति मालोपमालंकारः ॥ १६ ॥ **बुद्धरक्षिता** । महाभाग, एष खलूद्यानवाह्यरथ्यामुखे ॥ **माधवः** । साटोपं ससंभ्रमम् । अप्रमत्तः सावधानः ॥ **मालती** । लवङ्गिके, संशयः खलु जातः शार्दूलमृत्युवक्त्रान्निर्गमिष्यत्यसौ न वेति संदेहो जातः । कष्टं धिगित्यर्थः ॥ **माधवः** । सबीभत्सं सजुगुप्सम् । आहेति शेषः । अहहेत्यद्भुते । **संसक्तेति** । नखायुधस्य व्याघ्रस्य मार्गः प्राचण्ड्यमतिभयंकरतां वहति धत्ते । कीदृक् । संसक्तानि क्वचिल्लतादौ प्रथमं लग्नानि ततस्त्रुटितानि छिन्नानि ततश्च विवर्तितानि भूमौ तत्र विक्षिप्तानि यान्यन्त्रजालानि तैर्व्याकीर्णः संकुलस्तथा स्फुरन्तः प्रकाशमाना अपवृत्ता विपर्यस्ता रुण्डखण्डाः शिरःकपालच्छेदा यत्र सः । तथा कीलालस्य रक्तस्य व्यतिकरेणामिश्रीभावेन गुल्फदघ्नः पङ्को यत्र स इति ॥ १७ ॥ अहो प्रमादः । मदयन्तिकापरिजनस्यानवधानत्वमाश्चर्यं यदियमशक्यप्रतिकारे संकटे निपतितेत्यर्थः । अशक्यप्रतिकारतामेवाह—**वयमिति** । वयं तावद्दूरे वर्तामहे । कन्यका

**सर्वाः**—हाँ[1] मदअन्तिए ।

**कामन्दकीमाधवौ**—(सहर्षाकूतम् ।)

कथं तदवपातितादधिगतायुधः संभ्रमात् ।
कुतोऽपि मकरन्द एत्य सहसैव मध्ये स्थितः

**इतराः**—साहु[2] महाभाअ, साहु ।

**कामन्दकीमाधवौ**—

दृढं च पशुना हतो व्यसुरसौ कृतश्चामुना ॥ १८ ॥

**इतराः**—अच्चाहिदं[3] ।

**कामन्दकी**—(साकूतम् ।) कथं व्यालनखरप्रहारनिःसृतरक्तनिवहः क्षितितलविषक्तखड्गलतावष्टम्भनिश्चलः संभ्रान्तमदयन्तिकावलम्बितस्ताम्यति वत्सो मकरन्दः ।

**इतराः**—हंद्धि[4], गाढप्पहारदाए, किलम्मदि महाभाओ ।

---

१. हा मदयन्तिके ।
२. साधु महाभाग, साधु ।
३. अत्याहितम् ।
४. हा धिक्; गाढप्रहारतया क्लाम्यति महाभागः ।

---

तु पशोः क्रमगता । एकेनैव पदविन्यासेन लभ्यदेशे वर्तत इत्यर्थः । हाशब्द इष्टजनविपत्तिद्योतकः । माधवस्य सहर्षत्वं व्याघ्रहननाद्वनिताजीवनाच्च । कामन्दक्याः साकूतत्वं मकरन्देन मदयन्तिकाप्राणरक्षणोपकारस्य तदुभयसंघटनोपयोगित्वादिति । कथं मकरन्दः सहसैव संभ्रमादेत्य तदवपातितात्तेन शार्दूलेनावपातितान्निहतात् । कस्माच्चिदायुधहस्तात्पुरुषादित्यध्याहारः । अधिगतं प्राप्तमायुधं येन सः । तन्निहतभटहस्तगतमायुधमाहृत्येत्यर्थः । मध्ये व्याघ्रमदयन्तिकयोरन्तरे स्थितोऽतर्कितोपनतोऽसावस्या आलम्बनं जात इत्यर्थः ॥ **इतराः** । साधुः । पौरुषं महत्कृतमिति शेषः । **दृढमिति** । दृढं यथा स्यात्तथा मकरन्दः पशुना हतोऽभिहतः । असुना मकरन्देन चासौ पशुर्व्यसुर्विगतप्राणः कृतश्च प्रमथितश्च । 'दंष्ट्रायुधः' इति क्वचित्पाठः । खण्डितः । व्याघ्र इत्यर्थः ॥१८॥ **इतराः** । अत्याहितं महाभीतिः । उपस्थितमिति शेषः ॥ **कामन्दकी** । साकूतत्वे हेतुरुक्तः । व्यालः क्रूरजन्तुः । क्षितितले विषक्तालम्बनयष्टिरिव संलग्नैककोटिर्या खड्गलता तदवष्टम्भेन तदवलम्बनेन निश्चलो महाशूरतया बलवत्प्रहृतोऽपि स्वायुधमेवावलम्ब्य स्थितः, न तु पतित इत्यर्थः । संभ्रान्तयोद्विग्नया मदयन्तिकयावलम्बितो दत्तहस्तावलम्बः ॥ **इतराः** । हा धिक् । गाढप्रहारतया क्लाम्यति महाभागः ॥

**माधवः**—कथं प्रमुग्ध एव । भगवति, परित्रायस्व माम् ।

**कामन्दकी**—वत्स, अतिकातरोऽसि । नन्वेहि, पश्यावस्तावत् ।

(इति निष्क्रान्ताः सर्वे ।)

**इति महाकविश्रीभवभूतिविरचिते मालतीमाधवे तृतीयोऽङ्कः ।**

---

**माधवः** । कथं मकरन्दः प्रमुग्धो मोहं प्राप्त एव । भगवति, परित्रायस्वेति । मित्रव्यसनात्स्वयमपि प्रमुग्ध इव भवन्नेवं वदतीति ज्ञेयम् ॥ **कामन्दकी** । अतिकातरोऽसि । किमर्थमेतावतैव बिभेषि । नन्वित्यामन्त्रणम् । एहि मकरन्दं पश्यावः । कथं वर्तत इति द्रक्ष्याव इत्यर्थः । इदं चाङ्कावतरणमुत्तराङ्कार्थस्य पूर्वाङ्कान्ते निपातनात् । अङ्कद्वयस्य संगतार्थत्वात् । यथा—'अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्याविभागतः । पूर्वाङ्कस्यावसानोक्तकथाविच्छेदपूर्वकम् ॥ प्रवेशो भाविनोऽङ्कस्य सोऽङ्कावतर इष्यते ॥' इति ॥

भवभूतिवचोगुम्फरसास्वादनचातुरी ।
यदि विद्येत केषांचिद्विरलानां विपश्चिताम् ॥

**इति श्रीमद्भारद्वाजकुलतिलकपर्वतनाथयायजूकनन्दनत्रिपुरारिसूरिविरचितायां मालतीमाधवभावप्रदीपिकायां तृतीयाङ्कविवरणम् ॥**

---

# चतुर्थोऽङ्कः ।

(ततः प्रविशतो मदयन्तिकामालतीभ्यामवलम्ब्यमानौ मुग्धौ मकरन्दमाधवौ संभ्रान्ता कामन्दकी बुद्धरक्षिता लवङ्गिका च ।)

**मदयन्तिका**—[1]पसीद भअवदि, परित्ताहि मदअन्तिआणिमित्तं संसइदजीविदं विपण्णाणुकम्पिणं महाभाअं ।

**इतराः**—[2]हद्धि । किं दाणीं एत्थ पेक्खिदव्वं अह्मेहिं ।

**कामन्दकी**—(उभौ कमण्डलूदकेन सिक्त्वा ।) ननु भवत्यः पटाञ्चलैर्वीजयध्वम् ।

(मालत्यादयस्तथा कुर्वन्ति ।)

**मकरन्दः**—(समाश्वस्यावलोक्य च ।) वयस्य, अतिकातरोऽसि । किमेतत् । ननु स्वस्थ एवासि ।

**मदयन्तिका**—[3]अह्महे, दाणिं पडिबुद्धं मअरन्दपुण्णचन्देण ।

---

१. प्रसीद भगवति, परित्रायस्व मदयन्तिकानिमित्तं संशयितजीवितं विपन्नानुकम्पिनं महाभागम् ।

२. हा धिक् । किमिदानीमत्र प्रेक्षितव्यमस्माभिः ।

३. अहो, इदानीं प्रतिबुद्धं मकरन्दपूर्णचन्द्रेण ।

---

नमामि मदनानन्दविधानविहितादराम् ।
शंभुवामाङ्गवामाक्षीं कामाक्षीं कामितासये ॥

कविरिदानीमङ्कावतारेणैव पूर्वमङ्कान्ते निवेशितानामङ्कपात्रप्रवेशकतद्वृत्तान्तस्य सूचितत्वादङ्कमेवारभते—**तत इत्यादि** । माधवस्यापि सित्रव्यसनेन प्रमुग्धत्वान्मालत्या संनिहितयावलम्बनं द्रष्टव्यम् ॥ **मदयन्तिका** । प्रसीद भगवति, परित्रायस्व मदयन्तिकानिमित्तं संशयितजीवितं विपन्नानुकम्पिनं महाभागम् । मदयन्तिकानिमित्तमित्यर्थान्तरसंक्रमितवाच्यो ध्वनिः । लोकोत्तरपुरुषधौरेयजीवितापहारलक्षणावयवशोभाजनकत्वं द्योत्यते ॥ **इतराः** । हा धिक् । किमिदानीमत्र प्रेक्षितव्यमस्माभिः ॥ **मकरन्दः** । वयस्य, अतिकातरोऽसि । किमेतत् । धीरस्यापि तेऽयुक्तमित्यर्थः । नन्वित्यामन्त्रणे । स्वस्थ एवाहमस्मि न प्रमुग्धः ॥ **मदयन्तिका** । अहो, प्रतिबुद्धमिदानीं मकरन्दपूर्णचन्द्रेण । पूर्णचन्द्रत्वारोपणेन स्व-

**मालती**—(माधवस्य ललाटे हस्तं दत्वा ।) [1]महाभाअ, दिट्ठिआ वड्ढसि । णं भणामि पडिवण्णचेअणो महाभाओ त्ति ।

**माधवः**—(समाश्वस्य ।)—वयस्य, साहसिक एह्येहि । (इत्यालिङ्गति ।)

**कामन्दकी**—(उभौ शिरस्याघ्राय ।) दिष्ट्या जीवद्वत्सास्मि ।

**इतराः**—[2]पिअं णो संउत्तं ।

(सर्वे हर्षं नाटयन्ति ।)

**बुद्धरक्षिता**—(जनान्तिकम् ।) [3]सहि मदअन्तिए, एसो एव्व सो ।

**मदयन्तिका**—[4]सहि जाणीदं एव्व मए जह एसो माहवो अअं वि सो जणो त्ति ।

**बुद्धरक्षिता**—[5]अवि सच्चवादिणी अहं ।

**मदयन्तिका**—[6]ण क्खु अह्मारिसेसु तुह्मारिसीओ पक्खवादिणीओ होन्ति । (माधवमवलोक्य ।) सहि, मालदीए वि रमणिज्जो

१. महाभाग, दिष्ट्या वर्धसे । ननु भणामि प्रतिपन्नचेतनो महाभाग इति ।

२. प्रियं नः संवृत्तम् ।

३. सखि मदयन्तिके, एष एव सः ।

४. सखि, ज्ञातमेव मया यथैष माधवोऽयमपि स जन इति ।

५. अपि सत्यवादिन्यहम् ।

६. न खल्वस्मादृशीषु युष्मादृश्यः पक्षपातिन्यो भवन्ति । सखि, मालत्या अपि रमणीयोऽस्मिन्महानुभावेऽनुरागप्रवादः ।

चित्ताह्लादकत्वादनुरागप्रकर्षं सूचयति ॥ **मालती** । माधवस्य ललाटे हस्तं दत्वेत्यङ्गसंस्पर्शेनामृतासेचनकल्पेन झटिति प्रमोहमपसारयितुं ललाटे हस्तनिक्षेपः । न चैतावता मालत्या धाष्टर्यमाशङ्कनीयम् । ईदृशे विपत्समये सर्वत्र सर्वेषामुचितोपचारकरणस्य लोके धाष्टर्यरूपतयानुद्भावनात् ॥ **कामन्दकी** । शिरस्याघ्राणं गुरुजनस्यापत्येषु वात्सल्यद्योतकम् । जीवन्तौ वत्सौ वात्सल्यविषयावपत्यकल्पौ यस्याः सा ॥ **इतराः** । प्रियं नः संवृत्तम् ॥ **बुद्धरक्षिता** । सखि मदयन्तिके, एष एव सः । यो मया पूर्वं निवेदितस्त्वयि निरतिशयानुरागो मकरन्दः स एष एवेत्यर्थः ॥ **मदयन्तिका** । सखि, ज्ञातमेव मया । एष एव माधवोऽयमपि स जन इति । भर्तृत्वाध्यवसायान्नामानुपादानम् । त्वदुक्ताकृतिविशेषसंवादेन स्वजीवितनिरपेक्षतया मत्प्राणत्राणप्रवणतया कामन्दक्यादिव्यवहारेण च मदनुरक्तोऽयं मकरन्द इति ज्ञात एवेत्यर्थः ॥ **बुद्धरक्षिता** । अपि सत्यवादिन्यहम् ॥ किं मदुक्तमस्य सौन्दर्यादिगुणोज्ज्वलत्वं प्रत्यक्षतो दृश्यते न वेत्यर्थः ॥ **मदयन्तिका** । न खल्वस-

इमस्सिं महाणुहावे अणुराअप्पवादो । (इति मकरन्दमेव सस्पृहमवलोकयति ।)

**कामन्दकी**—(स्वगतम् ।) रमणीयोर्जितं हि मदयन्तिकामकरन्दयोर्दैवादद्य दर्शनम् । (प्रकाशम् ।) वत्स मकरन्द, कथं पुनरायुष्मानस्मिन्नवसरे मदयन्तिकाजीवितपरित्राणहेतोर्भगवता दैवेन संनिधापितः ।

**मकरन्दः**—अद्याहमन्तर्नगरमेव कांचिद्वार्तामुपश्रुत्य माधवचित्तोद्वेगमधिकमाशङ्कमानस्त्वरितमवलोकितानिवेदितकुसुमाकरोद्यानवृत्तवृत्तान्तः परापतन्नेव शार्दूलावस्कन्दगोचरामिमामभिजातकन्यकामभ्युपपन्नवानस्मि ।

(मालतीमाधवौ विमृशतः ।)

**कामन्दकी**—(स्वगतम् ) वृत्तान्तेन खलु मालतीप्रदानेन भवितव्यम् । (प्रकाशम् ।) वत्स माधव, दिष्ट्या वर्धितोऽसि मालत्या । सोऽयमवसरः प्रीतिदानस्य ।

**माधवः**—भगवति, इयं मालती

यद्व्यालव्रणितसुहृत्प्रमोहमुग्धं
कारुण्याद्विहितवती गतव्यथं माम् ।

---

दृशीषु युष्मादृश्यः पक्षपातिन्यो भवन्ति । सखि, मालत्या अपि रमणीयोऽस्मिन्महानुभावेऽनुरागप्रवादः । तन्मदीयभ्रातृमनोरथसंपत्तिर्दुर्लभेति हृदयम् ॥ **कामन्दकी।** रमणीयं संभ्रमस्रस्तांशुकं सम्यग्विभाव्य परस्परावयवसौष्ठवग्राहित्वेन साध्वसव्याजादृढालिङ्गनमहोत्सवानुबन्धित्वेन च मनोहरम् । तथोर्जितं बलवद्दुस्तरविपन्निस्तरणोपकारमूलत्वेन दैवेन, नलस्सदादिप्रयत्नात्, ईदृक्संपादनस्य दुःसाधकत्वात् । संनिधापितः संनिहितीकृतः ॥ **मकरन्दः** । परापतन्नेव त्वरितमागच्छन्नेव । अवस्कन्दोऽभिभवः । अभिजातकन्यकामाकृतिविशेषाद्यनुमितमहाकुलप्रभवकुमारीभावामभ्युपपन्नवानभ्युपगतवानस्मि ॥ मालतीमाधवौ विमृशतः । चित्तोद्वेगहेतुमुभयोः साधारणत्वात्सुखदुःखयोरुभावपि विमृशत इत्यर्थः ॥ कामन्दकी माधवचित्तोद्वेगातिशयकरीं वार्तां निरूपयति—**कामन्दकी । वृत्तान्तेनेति ।** राज्ञा नन्दनाय मालतीप्रदानं निष्पन्नप्रायं भवितुमर्हतीत्यर्थः । अथ निश्चितवार्ता शीघ्रमन्तःपुरमाकारयितुमत्रागमिष्यन्ति, ततः प्रागेव मालतीमनःप्रत्ययजननार्थं माधवेन स्वाभिप्रायं स्वत एव वाचयिष्यामीत्यभिप्रायेणाह—वत्स माधव, मालत्या वर्धितोऽसि प्रत्याहृतचैतन्योसि । सोऽयमवसरः प्रीतिदानस्य पारितोषिकस्य । तद्दीयतामित्यर्थः ॥ **माधवः । यदिति** । इयं मालती यतो व्यालेन क्रूरसत्त्वेन

तत्कामं प्रभवति पूर्णपात्रवृत्त्या
स्वीकर्तुं मम हृदयं च जीवितं च ॥ १ ॥

**लवङ्गिका**—[१]पडिच्छिदो क्खु णो पिअसहीए अअं पसादो ।

**मदयन्तिका**—(स्वगतम्) [२]जाणादि महाणुहावो अअं जणो रमणिज्जं मन्तेदुं ।

**मालती**—(स्वगतम्) [३]किं णाम मअरन्देण उव्वेअकालणं सुदं हविस्सदि ।

(प्रविश्य ।)

**पुरुषः**—वत्से मदयन्तिके, भ्राता ते ज्यायानमात्यनन्दनः समादिशति । अद्य परमेश्वरेणास्मद्भवनमागत्य भूरिवसोरुपरि परं विश्वासमस्मासु च प्रसादमाविष्कुर्वता स्वयमेव मालती प्रतिपादिता । तदेहि । संभावयावः प्रसादमिति ।

**मकरन्दः**—वयस्य, इयं सा वार्ता ।

---

१. प्रतीष्टः खलु नः प्रियसख्यायं प्रसादः ।
२. जानाति महानुभावोऽयं जनो रमणीयं मन्त्रयितुम् ।
३. किं नाम मकरन्देनोद्वेगकारणं श्रुतं भविष्यति ।

---

व्रणितस्य विक्षतगात्रस्य सुहृदः प्रमोहेन मूर्छया प्रमुग्धं मां कारुण्याद्गतव्यथं कृतवती । तस्मात्कामं स्वेच्छया विनैव ममानुमतिं पूर्णपात्रवृत्त्या पूर्णपात्रप्रकारेण मम हृदयं च जीवितं च स्वीकर्तुं प्रभवति यथेष्टविनियोगार्हं कर्तुमीष्टे । पूर्णपात्रं नाम प्रियनिवेदकेन बलादाकृष्य गृह्यमाणमलंकारवस्त्रादिकं कथ्यते । प्रागेव हृदयं जीवितं च तदधीनमेव वर्तत इति तन्मया देयम् । ततोऽधिकं नास्ति किमिदानीं दातव्यमित्याशयः । एतद्युक्तोत्तरप्रदानात्प्रगमनं नामाङ्गमुक्तम् । यथा—'युक्तोत्तरं प्रगमनम्' इति ॥ १ ॥ **लवङ्गिका** । प्रतीष्टः खलु नः प्रियसख्यायं प्रसादः । अयमेव महान्प्रसादो यत्प्रियसख्यधीने त्वन्मनोजीविते इति किमतः परं श्लाघनीयमित्यर्थः ॥ **मदयन्तिका** । जानाति महानुभावोऽयं जनो रमणीयं मन्त्रयितुम् । रमणीयं मनोगताभिप्रायप्रकटनं बाह्योपचारनैपुण्यप्रदर्शनं यथा भवति तथा मनोहरम् ॥ **मालती** । किं नाम मकरन्देनोद्वेगकारणं श्रुतं भविष्यति । माधवस्येति शेषः ॥ **प्रविश्येत्यादि** । ज्यायाञ्ज्येष्ठः । परमेश्वरेणानतिक्रमणीयशासनेन राज्ञा परं विश्वासमस्मदीयं सर्वस्वम् । तस्य यथेष्टविनियोगार्हं तदीयमस्माकमित्यन्योन्यस्य निरतिशयं मनःसंमेलनं प्रकटयतेत्यर्थः । प्रतिपादिता दत्ता । संभावयावः । प्रमोदेन बहुमन्यावह इत्यर्थः । इदं च प्रस्तुतप्राप्तिनिरोधान्निरोधो नामाङ्गम् । यथा—'हितरोधो निरोधः स्यात्' इति ॥ **मकरन्दः** । इयं सेति । या त्वयोद्वेगका-

(मालतीमाधवौ वैवर्ण्यं नाटयतः ।)

**मदयन्तिका**—(सहर्षं मालतीमाश्लिष्य ।) [१]सहि मालदि, तुमं खु एक्कणअरणिवासेण पंसुकीलणादो पहुदि पिअसहि भइणी अ संपदं उण अह्माणं घरस्स मण्डणं जादासि ।

**कामन्दकी**—वत्से मदयन्तिके, वर्धसे भ्रातुर्मालतीलाभेन ।

**मदयन्तिका**—[२]तुह्माणं आसिसाणं पसादेण । सहि लवङ्गिए, भरिआ णो मणोरहा तुह्माणं लाहेण ।

**लवङ्गिका**—[३]सहि, अह्माणं वि एदं मन्तिदव्वम् ।

**मदयन्तिका**—[४]सहि बुद्धरक्खिदे, एहि दाव । महोसवं संभावेह्म । (इत्युत्तिष्ठतः ।)

**लवङ्गिका**—(जनान्तिकम् ।) [५]भअवदि, जह हिअअभरिउव्व-

१. सखि मालति, त्वं खल्वेकनगरनिवासेन पांसुक्रीडनात्प्रभृति प्रियसखी भगिनी च सांप्रतं पुनरस्माकं गृहस्य मण्डनं जातासि ।

२. युष्माकमाशिषां प्रसादेन । सखि लवङ्गिके, भरिता नो मनोरथा युष्माकं लाभेन ।

३. सखि, अस्माकमप्येतन्मन्त्रयितव्यम् ।

४. सखि बुद्धरक्षिते, एहि तावत् । महोत्सवं संभावयावः ।

५. भगवति, यथा हृदयभरितोद्गमद्विस्मयानन्दसुन्दरघूर्णितधीरपर्यन्त-

रिणी वार्ता श्रुता सैवेयमित्यर्थः । वैवर्ण्यं विवर्णभावमप्रतिसमाधेयविपत्प्राप्तिजनिततापहेतुकं सात्त्विकभावरूपम् । यदाह—'वैवर्ण्यं वर्णभेदः स्यात्तापशङ्काभयादिभिः' इति ॥ **मदयन्तिका** । सखि मालति, त्वं खल्वेकनगरनिवासेन पांसुक्रीडनात्प्रभृति प्रियसखी भगिनी च सांप्रतं पुनर्भ्रातृभार्यात्वेनास्माकं गृहस्य मण्डनं जातासि ॥ **कामन्दकी** । वर्धस इति सोपहासेयमुक्तिः ॥ **मदयन्तिका** । युष्माकमाशिषां प्रसादेन । केवलं भवदाशीर्वादान्मालतीलाभो न तु दंपत्योरन्योन्यानुरागातिशयादित्याशयः । सखि लवङ्गिके, भरिताः संपूर्णा मनोरथाः । युष्माकं लाभेन सपरिजनाया एव मालत्या लाभाद्युष्माकमिति बहुत्वम् ॥ **लवङ्गिका** । सखि, अस्माकमप्येतन्मन्त्रयितव्यम् । पूर्णा नो मनोरथा युष्माकं सदृशश्लाघ्यसंबन्धानां लाभेनैवेत्यस्माभिरपि वक्तव्यमित्यर्थः । अथ च युष्माकं सपरिजनाया भवत्या मकरन्दप्राप्तिरूपेण भाविना लाभेनास्माकं पूर्णा मनोरथा भवितार इत्यस्माभिरेवैतन्मन्त्रयितव्यम्, न तु त्वया सपरिजनमालतीलाभस्य; भवत्संकल्पमात्रस्य निश्चितत्वादित्यपि प्रतीतिः ॥ **मदयन्तिका** । सखि बुद्धरक्षिते, एहि तावत् । महोत्सवं संभावयावः ॥ **लवङ्गिका** । यथा हृदये भरितौ पूर्णावत एवो-

मन्तविह्मआणन्दसुन्दरघोलाविदधीरपेरन्तमणोहरा पल्लत्थन्ति मद-अन्तिआमअरन्दाणं दलिअनीलुप्पलमंसलच्छविआ दिट्ठिसंभेआ, तह मण्णे मणोरहणिव्वुत्तसमाअमा एदेत्ति ।

**कामन्दकी**—(विहस्य ।) नन्विमौ परस्परं मानसं मोहनमनुभवतः । तथा हि,

ईषत्तिर्यग्वलनविषमं कूणितप्रान्तमेत-
त्प्रेमोद्भेदस्तिमितललितं किंचिदाकुञ्चितभ्रु ।
अन्तर्मोदानुभवमसृणं स्रस्तनिष्कम्पपक्ष्म
व्यक्तं शंसत्यचिरमनयोर्दृष्टमाकेकराक्षम् ॥ २ ॥

---

मनोहराः पर्यस्यन्ते मदयन्तिकामकरन्दयोर्दलितनीलोत्पलमांसलच्छवयो दृष्टिसंभेदाः, तथा मन्ये मनोरथनिर्वृत्तसमागमावेताविति ।

---

द्भ्रमन्तौ यौ विस्मयानन्दौ ताभ्यां सुन्दरं यथा स्यात्तथा घूर्णिता भ्रामिता धीरा आकारगोपनार्थमवलम्बितधैर्याः पर्यन्तेऽपाङ्गदेशे मनोहराश्च पर्यस्यन्ते परितः क्षिप्यन्तेऽलसवलितादिप्रकारवैचित्र्येण प्रवर्तन्ते । मदयन्तिकामकरन्दयोर्दलितनीलोत्पलमांसलच्छवयो दृष्टिसंभेदाः संमुखप्रवृत्त्या मिश्रीभूताः कटाक्षविक्षेपाः, तथा मन्ये मनोरथनिर्वृत्तसमागमावेताविति । दृष्टिविक्षेपा यथा येन प्रकारेण प्रवर्तन्ते तथा तेन प्रकारेणैवमुन्नीयत इत्यर्थः ॥ **कामन्दकी । नन्वित्यादि ।** मानसं मोहनं संकल्पनिर्मितसंभोगम् । तद्व्यञ्जकं लिङ्गमाह—**तथा हीति । ईषदिति ।** अनयोर्दृष्टं दर्शनं व्यक्तं यथा स्यात्तथा शंसति संकल्पनिर्मितं संभोगं कथयतीत्यर्थः । कीदृशं दृष्टम् । ईषत्तिर्यग्वलनेन मनाक्तिर्यगुदञ्चनेन विषमं वक्रम् । वक्राख्योऽयं शृङ्गारविकारः । यथा—'वलितो वाङ्गसंचारो यत्र तद्वक्रमुच्यते' इति । कूणितं प्रान्ते कूणितप्रान्तम् । अपाङ्गदेशे भागत्रयेण संकुचितमित्यर्थः । कूणितं यथा—'भागत्रयस्य संकोचो विकासस्त्वपरस्य च । यस्या दृष्टेर्विलक्षेण तद्विकूणितमुच्यते ॥' इति । 'पुरस्त्रिभागसंकोचे प्रेम्णा तत्कूणितं भवेत् ।' इति । एतदिति पुरोवर्तित्वेन निर्दिशति । प्रेम्णोऽनुरागस्योद्भेदेन प्रकटीभावेन स्तिमितं निष्पन्दं ललितं प्रेमार्द्रं च । निष्पन्दललिते यथा—'निष्पन्दं तद्यदन्यत्र दृष्टान्न स्पन्दते क्वचित् । प्रेमार्द्रमन्तर्विकसत्तारं ललितमीरितम् ॥' इति । किंचिदाकुञ्चितेषदुच्छ्वसन्ती भ्रूर्यत्र तच्चतुराख्यो भ्रूविकारः प्रसन्नदृष्टिविकारश्चोक्तः । तल्लक्षणं तूक्तं प्राक् । अन्तरुन्मादस्यान्तरानन्दस्यानुभवेन मसृणं प्रेम्णानुरञ्जितम् । 'मसृणं तत्तु विज्ञेयमनुरागकषायितम्' इत्येतदप्युक्तं प्राक् । स्रस्तान्यवसन्नानि निष्कम्पानि निश्चलानि पक्ष्माणि यत्र तत् । आकेकरे अक्षिणी । 'आकुञ्चितपुटा याङ्गसंगतार्थनिमीलिता । मुहुर्व्यावर्ततारा च दृष्टिराकेकरा मता ॥' इत्याकेकरदृष्टिरुक्ता । केचित्तु 'दृष्टमाकेकराक्षमित्याकेकरदृष्टिरेव दृष्टसन्देनोक्ता । आकेकरदृष्टिस्वरूपमेवेषत्तिर्यगित्यादि विशेषणैर्निरूपितम्'

**पुरुषः**—वत्से मदयन्तिके इत इतः ।

**मदयन्तिका**—(अपवार्य ।) सहि[1] बुद्धरक्खिदे, अवि पुणो दीसइ एसो जीविदप्पदाई पुण्डरीअलोअणो ।

**बुद्धरक्षिता**—जइ[2] देव्वं अणुऊलइस्सदि । (इति निष्क्रान्ता ।)

**माधवः**—(अपवार्य ।)

चिरादाशातन्तुस्त्रुटतु बिसिनीसूत्रभिदुरो
महानाधिर्व्याधिर्निरवधिरिदानीं प्रसरतु ।
प्रतिष्ठामव्याजं व्रजतु मयि पारिप्लवधुरा
विधिः स्थैर्यं धत्तां भवतु कृतकृत्यश्च मदनः ॥ ३ ॥

अथवा ।

समानप्रेमाणं जनमसुलभं प्रार्थितवतो
विधौ वामारम्भे मम समुचितैषा परिणतिः ।

---

१. सखि बुद्धरक्षिते, अपि पुनर्द्रक्ष्यत एष जीवितप्रदायी पुण्डरीकलोचनः ।

२. यदि दैवमनुकूलयिष्यति ।

---

इति व्याचक्षते । अचिरमिति दर्शनक्रियाविशेषणम् ॥२॥ **मदयन्तिका** । सखि बुद्धरक्षिते, अपि पुनर्द्रक्ष्यत एष जीवितप्रदायी पुण्डरीकलोचनः । अपि पुनरित्यौत्सुक्यातिशयो द्योत्यते ॥ **बुद्धरक्षिता** । यदि दैवमनुकूलयिष्यति । अथ माधवः समधिगतमालतीप्रदाननिश्चयो नैराश्यसंजातमुद्वेगातिशयं विवृण्वन्नाह—**चिरादिति** । चिरादनुवृत्तो बिसिनीसूत्रवन्मृणालतन्तुवद्भिदुरः स्वमेव भिद्यमान आशातन्तुस्तत्प्राप्त्याशैव तन्तुरिदानीं त्रुटतु छिन्नो भवतु । प्रियतमासमागमाशा दुर्बलैवेयन्तं कालमनुवृत्ता सेदानीं छिन्नेत्यर्थः । तथेदानीं महानाधिर्मानसी व्यथा स एव व्याधिर्निरवधिर्निरवसरः प्रसरतु । मालतीप्राप्तिलक्षणमवधिं प्रतीक्ष्य कथंचिदाधिः सोढ इदानीं तस्यावधेरभावनिश्चयान्निर्मर्यादो विजृम्भतामित्यर्थः । तथा पारिप्लवस्य चित्तचाञ्चल्यस्यारतिरूपस्य धुरोत्कर्षो मय्यव्याजं निष्कपटम् । विस्रम्भेणेति यावत् । प्रतिष्ठां स्थितिं व्रजतु । मालतीप्राप्त्याशया आलम्बनभूताया अपगमाद्वात्याक्षिप्ततूलवदप्रतिष्ठां प्राप्नोत्वित्यर्थः । तथा विधिः स्थैर्यं धत्ताम् । मदनश्च कृतकृत्यो भवतु । उभाभ्यामपि कर्तव्यस्य महतः प्रयोजनस्य महता प्रयत्नेन निर्वर्तितत्वादित्यर्थः । जीवनमितःपरं क्षणमात्रमपि दुर्लभमिति भावः । एकस्मिन्कार्येऽनेककारणसमुच्चयात्समुच्चयालंकारः ॥ ३ ॥ **अथवेति** । स्वयमेव स्वात्मानं समाश्वासयति—**समानेति** । समानप्रेमाणं तुल्यानुरागमसुलभं पराधीनत्वेन दुष्प्रापं जनं प्रार्थितवतो मम विधौ वामारम्भे वक्रोद्योग एषा परिणतिरियं

तथाप्यस्मिन्दानश्रवणसमयेऽस्याः प्रविगल-
त्प्रभं प्रातश्चन्द्रद्युति वदनमन्तर्दहति माम् ॥ ४ ॥

**कामन्दकी**—(स्वगतम् ।) एवं दुर्मनायमानः पीडयति मा वत्सो माधवो वत्सा मालती च । दुष्करं निराशा प्राणितीति । (प्रकाशम् ।) वत्स माधव, पृच्छामि तावदायुष्मन्, त्वाम् । अथ किं भवानमंस्त यथा भूरिवसुरेव मालतीमस्मभ्यं दास्यतीति ।

**माधवः**—(सलज्जम् ।) नहि नहि ।

**कामन्दकी**—न तर्हि प्रागवस्थाया भूरिवसुः परिहीयते ।

**मकरन्दः**—दत्तपूर्वेत्याशङ्क्यते ।

---

विपत्तिरूपा दशा समुचितैव । ततो न मया वैक्लव्यमङ्गीकार्यमित्येव यद्यपि हृदयं व्यवस्थापयामि तथाप्यस्मिन्दानश्रवणसमये नन्दनाय राज्ञा मालती दत्तेत्येतद्वार्ता-कर्णनसमये प्रविगलत्प्रभं तत्क्षणप्रक्षरितकान्ति अत एव प्रातश्चन्द्रद्युति अस्या वदनं मामन्तर्दहति । वार्ताश्रवणमात्रेणैवास्या ईदृश्यवस्था । निष्पन्ने तु तत्प्रयोजने किमस्या भविष्यतीत्येष एव मम व्यथाहेतुर्नास्मद्विपत्तिनिश्चय इत्यर्थः ॥४॥ **कामन्दकी** । दुर्मनायमानो दुर्मनस्को भवान् । वत्सा मालती च । निराशा प्राणितीति यत्तदेव दुष्करम् । तादृशी काप्यवस्था वर्तते यज्जीवनमेव मरणापेक्षया कुत्सनीयम् । अशक्यप्रतीकारश्चासावनर्थः कपटसंविधानमन्तरेण । तच्च दुष्करमिति ममैव चित्तव्याक्षेपो बलवानित्यर्थः । भवतु तावत् । धार्ष्ट्यावलम्बनेन समाश्वासयामीति प्रकाशमाह—**पृच्छामीति** । आयुष्मन्निति संबोधनेन मयि वर्तमानायां जीवनसंदेहो न कर्तव्य इति सूचयति । पूर्वापेक्षयेदानीमुद्वेगातिशयस्य किं वा कारणमिति पृच्छामि । एतावन्तं कालं भूरिवसुरेव मह्यं सुतां दास्यतीति निश्चित्य किमेवं प्राणधारणं कृतं तदेतत्पृच्छामि कथय । तथा चेदिदानीं युक्तः परितापातिशयः । तेनैवान्यस्मै तस्याः प्रदानादिति भावः ॥ **माधवः—सलज्जमिति** । बालचापलेन केवलं भवानस्यामनुरक्तः, नहि भूरिवसुना स्वसुतां दास्यामीत्याहूतो भवानत्रागत इति कामन्दकीवचनाभिप्रायमवगम्य सलज्जमाहेत्यर्थः । नहि नहीति कुतस्तस्य दास्यामीति वचनम् । स तावदस्मन्नामापि न जानातीत्याशयः ॥ **कामन्दकी** । तर्हि पूर्वावस्थाया भूरिवसुर्न परिहीयते नान्यथा भवति । पूर्वमपि भूरिवसुर्दास्यतीति न तव प्रत्याशा इदानीमपि सा नास्तीति किमिदानीमुद्वेगाधिक्ये कारणम् । भवतोरन्योन्यानुरागोऽपि पूर्वावस्थातो न परिहीयते । यद्वशादुभयोर्जीवितधारणमियन्तं कालं ततो नेदानीं किंचिदपि नूतनमस्ति । किमिति संताप इति भावः ॥ **मकरन्दः** । यद्यपि भूरिवसुना माधवाय सुतां दास्यामीति नोक्तं, न तद्वचनाशया चानेन स्थितं, तथापि मालत्याः पूर्वं पित्रा कस्मैचिदप्यप्रतिपादनादात्मनश्च योग्यतासंभावनादाशामात्रं स्थितम् । इदानीं तु पूर्वं राज्ञा याचितो नन्दनाय दत्तवानिति वार्तां श्रुत्वा भग्नाशत्वादनिष्टमाशङ्क्यत इत्यस्ति पूर्वोत्तरयोः कालयोर्वैषम्य-

**कामन्दकी**—जानामि तां वार्ताम्। इदं तावत्प्रसिद्धमेव यथा नन्दनाय मालतीं प्रार्थयमानं भूरिवसुर्नृपतिमुक्तवान् 'प्रभवति निजकन्यकाजनस्य महाराजः' इति।

**मकरन्दः**—अस्त्येतत्।

**कामन्दकी**—अद्य च राज्ञा स्वयमेव मालती दत्तेति संप्रत्येव पुरुषेणावेदितम्। तद्वत्स, वाक्प्रतिष्ठानि देहिनां व्यवहारतन्त्राणि वाचि पुण्यापुण्यहेतवो व्यवस्थाः सर्वथा जनानामायतन्ते। सा च भूरिवसोर्वागनृतात्मिकैव। न खलु महाराजस्य निजकन्यका मालती। कन्यकाप्रदाने च नृपतयः प्रमाणमिति मैवंविधो धर्माचारसमयः। तस्मादवस्थितमेवैतत्। कथं च मामनवधानां मन्यसे। पश्य।

---

मित्यर्थः॥ **कामन्दकी—जानामीति**। अस्त्येवैषा वार्ता। तथापि मालतीं दत्तवतो राज्ञः परस्वप्रतिपादनेऽधिकाराभावादधिकारवता च पित्रा मनःपूर्वकमदत्तत्वादिदानीमपि पूर्ववदाशास्त्येवेति नैतावता भेतव्यमित्यर्थः। कथं पित्रा निश्चितं न दत्तेत्याशङ्क्य तद्वचनपर्यालोचनयापि वरीतुं तावदस्त्येषा प्रसिद्धिरित्याह—**इदं तावदिति**॥ **मकरन्दः**। अस्त्येतत्। मयापि श्रुतमित्यर्थः। अद्यतनोऽपि वृत्तान्तो राज्ञा स्वयमेव मालती दत्ता न तु पित्रा तत्प्रदानाधिकारिणेत्येवंरूपः श्रुत एवेत्याह॥ **कामन्दकी—अद्य चेति**। ननु यद्यपि स्वयमेवाद्य राज्ञा दत्ता न भूरिवसुना तथापि पूर्वमेव प्रभवतीत्यादिवाक्येन तस्याप्यनुमतिः प्रतीयत इत्याशङ्क्य तद्वचनस्य छलात्मकतया वञ्चनार्थं प्रयुक्तत्वान्न तेन व्यवहारशुद्धिरिति वक्तुं प्रथमं लोकव्यवहारस्य प्रमाणत्वं दर्शयति—**तद्वत्सेति**। देहिनां व्यवहाररूपाणि तन्त्राणि कुटुम्बकृत्यानि। 'तन्त्रं कुटुम्बकृत्ये स्यात्' इति हलायुधः। वाचि प्रतिष्ठा स्थितिर्येषां तानि। वचनमात्रनिबन्धनानीत्यर्थः। पुण्यापुण्यहेतवो व्यवस्थाः 'सत्यं वदेन्नानृतं वदेत्' इत्यादयः शास्त्रीया मर्यादा वाच्येवायतन्ते वागायत्ता एव भवन्ति। वाङ्मूल एव सर्वोऽपि शुभाशुभहेतुर्व्यवहार इत्यर्थः। इयं तु भूरिवसोर्वाक्छलात्मिका न तु शुद्धेत्याह—**सा चेति**। अनृतात्मिकैवोपचारोक्तिचातुर्येणापाततः सत्यवत्प्रतिभासेऽपि विचार्यमाणे परमार्थदृष्ट्या मिथ्याभूतैव। कुत इत्यत आह—**न खल्विति**। ईश्वरत्वात्तस्य परकीयकन्यकास्वपि स्वातन्त्र्यमस्तीत्यत आह—**कन्यकेति**। नृपतयः प्रमाणं परिच्छेत्तारः। स्वतन्त्रकर्तार इति यावत्। इत्येवंविधो धर्माचारो धार्मिकाणामाचारस्तस्य समयस्तत्प्रवर्तकं शास्त्रम्। क्वचिदपि न दृष्टमिति शेषः। तस्मात्पित्रा चाप्रदानाद्राज्ञश्चानधिकाराद्राजकर्तृकप्रदानं लोकशास्त्रविरुद्धमित्येतदवस्थितमित्याह—**तस्मादिति**। तदस्या वार्तायाः पस्पशप्रायकत्वेन नैतावता नैराश्यं भावनीयमित्याशयः। किंच मयि जीवन्त्यामपि कथं भवद्व्यतिरिक्तगामिनी स्यादिति विश्वासजननार्थं साहंकारमाह—**कथं चेति**। अप्रमत्तैवाहं भवत्संघटने वर्ते।

मा वां सपत्नेष्वपि नाम तद्भू-
त्पापं यदस्यां त्वयि वा विशङ्क्यम् ।
तत्सर्वथा संगमनाय यत्नः
प्राणव्ययेनापि मया विधेयः ॥ ५ ॥

**मकरन्दः**—सर्वं सुष्ठु युज्यमानमादिश्यते युष्माभिः । अपि च ।

दया वा स्नेहो वा भगवति निजेऽस्मिञ्शिशुजने
भवत्याः संसाराद्विरतमपि चित्तं द्रवयति ।
ततश्च प्रव्रज्यासमयसुलभाचारविमुखः
प्रसक्तस्ते यत्नः प्रभवति पुनर्दैवमपरम् ॥ ६ ॥

(नेपथ्ये ।)

[1]भअवइ कामन्दइ, एसा भट्टिणी विण्णावेदि जहा मालदिं घेत्तूण तुरिअं आअच्छेत्ति ।

**कामन्दकी**—वत्से, उत्तिष्ठोत्तिष्ठ ।

(सर्वा उत्थाय परिक्रामन्ति ।)

---

१. भगवति कामन्दकि, एषा भर्त्री विज्ञापयति यथा मालतीं गृहीत्वा त्वरितमागच्छेति ।

---

तत्रानिष्टमाशङ्कनीयमित्यर्थः । तदेवाह—**मा वामिति** । अस्यां त्वयि च यत्पापमनिष्टं विशङ्क्यं युवाभ्यामन्योन्यमस्मदादिभिश्च 'प्रेम पश्यति भयान्यपदेऽपि' इति नीत्या प्रेमवशादस्थानेऽप्यनिष्टशङ्किभिराशङ्कनीयं तद्वां युवयोः सपत्नेष्वपि माभूत् अनिष्टं हि शत्रुगामित्वेनेष्यते । इदं तु तेष्वपि नापेक्षितुं युक्तमित्यवस्थादौस्थ्यातिशयोक्तिः । तस्मात्सर्वथान्ततो गत्वा प्राणव्ययेनापि भवत्संगमनाय यत्नो मया विधेयः । कार्य इत्यर्थः । इयं च यत्नाख्या द्वितीयावस्था । यथा—'अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति । परं चौत्सुक्यगमनं स यत्न इति कथ्यते ॥' इति ॥ ५ ॥ **मकरन्दः । अपि चेत्यादि** । संसाराद्विरतं रागद्वेषवासनाविवर्जितमपि चित्तं द्रवयति कृपार्द्रं करोति । **दयेति** । दयानुकम्पा, स्नेहः प्रेमाख्यो भावः । अतो दयास्नेहपरवशत्वात्त्वदन्तःकरणस्य प्रव्रज्यासमये संन्याससंप्रदाये सुलभो योऽष्टाङ्गयोगाभ्यासादिराचारस्तस्य विमुखो विरोधी । अयं यत्नः प्रसक्तो बलादापतितः । अपरं पुनरितःपरं तु दैवमनयोर्भागधेयं प्रभवति । त्वया तु यावत्कर्तव्यं तावत्क्रियत इत्यर्थः । इदं चानुनयरूपं पर्युपासनं नामाङ्गम् । यथा—'अनुनीतिः पर्युपास्तिः' इति ॥ ६ ॥ **नेपथ्ये** । भगवति कामन्दकि, एषा देवी विज्ञापयति यथा मालतीं गृहीत्वा त्वरितमागच्छेति ॥

(मालतीमाधवौ सकरुणानुरागमवलोकयतः ।)

**माधवः**—कष्टम्, एतावती हि माधवस्य मालत्या समं लोकयात्रा । अहो नु खलु भोः,

सुहृदिव प्रकटय्य सुखप्रदां
प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणः
प्रविशिनष्टि विधिर्मनसो रुजम् ॥ ७ ॥

**मालती**—(अपवार्य ।) [1]महाणुहाव लोअणाणन्दअर, एत्तिअ दिट्ठोसि ।

**लवङ्गिका**—[2]हद्धि । सरीरसंसअं एव्व णो पिअसही आरोविदा अमच्चेण ।

**मालती**—[3]परिणदं दाणिं जीविदतिण्हाए फलम् । णिव्वूढं अ णिक्करुणदाए तादस्स कावालिअत्तणं । परिणिट्ठिदो देव्वहदअस्स-

---

१. महानुभाव लोचनानन्दकर, एतावद्दृष्टोऽसि ।

२. हा धिक् । शरीरसंशयमेव नः प्रियसख्यारोपितामात्येन ।

३. परिणतमिदानीं जीविततृष्णायाः फलम् । निर्व्यूढं च निष्करुणतया

---

मालतीमाधवौ सकरुणं परस्परानिष्टशङ्कया सानुरागमन्योन्यभावाधिगमेनावलोकयतः ॥ **माधवः** । माधवस्य दुःखैकभाजनस्य ममेत्यर्थान्तरसंक्रमितवाच्यता । मालत्या समं लोकयात्रा दर्शनसंलापादिरूपोऽनुरक्तजनव्यवहार एतावतीयत्येव परिसमाप्ता । तदेतत्कष्टमित्यर्थः । अहो आश्चर्ये । नु वितर्के । खलु प्रसिद्धौ । भोः संबोधने । हे हृदय, आश्चर्यं खलु विधेर्दुर्विलसितमिति वितर्कयामीत्यर्थः । तदेव दुर्विलसितमाह—**सुहृदिवेति** । असौ विधिः प्रथमं सुहृन्मित्रमिवैकरसां तदेकस्वभावां प्रकारान्तरशून्यामनुकूलतां प्रस्तुतकार्यानुगुण्यं प्रकटीकृत्य पुनः स एवाकाण्डेऽनवसरे यद्विवर्तनं विरुद्धावृत्तिः प्रातिकूल्येन व्यवहरणं तेन दारुणो विधिः । मनोरुजं चित्तरोगं प्रविशिनष्टि । प्रयोजनं विघटय्याधिमात्रमवशेषयतीत्यर्थः । विधिनिन्दया विषादो व्यज्यते ॥ ७ ॥ **मालती** । महानुभाव लोचनानन्दकर, एतावद्दृष्टोऽसि । न पुनर्द्रक्ष्यसे मम जीवनाभावादित्याशयः । लोचनयोरेवानन्दस्त्वया कृतः । मनसस्तु महती व्यथैव संपादितेत्यस्य ध्वनिः । इदं च प्रत्यक्षनिष्ठुरत्वाद्वज्रं नामाङ्गम् । यथा—'प्रत्यक्षनिष्ठुरं वज्रम्' इति । **लवङ्गिका** । हा धिक् । शरीरसंशयमेव नः प्रियसखी समारोपितामात्येन । तदिदानीं भगवति, त्वमेव गुरुजनस्पृहां विहाय मालतीप्राणत्राणे त्वरितं

दालुणसमारम्भपरिणामो । ता कं वा उवालभामि मन्दभाइणी । कं वा असरणा सरणं पडिवज्जामि ।

**लवङ्गिका**—सहि, इदो इदो । (परिक्रामति ।)

**माधवः**—(स्वगतम् ।) नूनमाश्वासनमात्रमेतन्माधवस्य सहजस्नेहमात्रकातरा भगवती करोति । (सोद्वेगम् ।) हन्त, सर्वथा संशयितजन्मसाफल्यः संवृत्तोऽस्मि । तत्किं कर्तव्यम् । (विचिन्त्य ।) न खलु महामांसविक्रयादन्यदुपायान्तरं पश्यामि । (प्रकाशम् ।) वयस्य मकरन्द, अपि भवानुत्कण्ठते मदयन्तिकायाम् ।

**मकरन्दः**—अथ किम् ।

तन्मे मनः क्षिपति यत्सरसप्रहार-
मालोक्य मामगणितस्खलदुत्तरीया ।

---

तातस्य कापालिकत्वम् । परिनिष्ठितो दैवहतकस्य दारुणसमारम्भपरिणामः । तत्कं वोपालभे मन्दभागिनी । कं वाशरणा शरणं प्रतिपद्ये ।

१. सखि, इत इतः ।

---

यतस्वेत्याशयः ॥ **मालती** । परिणतमिदानीं जीविततृष्णायाः फलम् । निर्व्यूढं च निष्करुणतया तातस्य कापालिकत्वम् । कापालिक एव परं स्त्रीबालादिवधे निष्करुणः । तेन पञ्चमाङ्ककृत्यं च किंचित्सूचितम् । परिनिष्ठितः परिसमाप्तिं गमितो दैवहतकस्य दारुणसमारम्भपरिणामः । कमुपालभे मन्दभाग्या । कं वाशरणा शरणं प्रतिपद्ये । अनेन । माधवं कामन्दकीं च प्रति कथं युवयोः सतोरप्यहमीदृशीं दशामनुभवामीति तदुपक्रम्यतां यथोचितं प्रयत्न इति सूच्यते । एतत्सूचनार्थमेवाधीरयापि मालत्या माधवसंनिधानेऽपि निस्त्रपीभूयाक्रन्दितमिति मन्तव्यम् ॥ **लवङ्गिका** । सखि, इत इतः । आगम्यतामिति शेषः ॥ **माधवः** । **नूनमिति** । कथं वा राजनि प्रतिपक्षे तद्विरोधेन भगवती कार्यं निष्पादयेत् । तदस्या वचनमाश्वासनार्थमेवेत्यर्थः । संशयितं जन्मसाफल्यं मालतीप्राप्तिलक्षणं यस्य तादृशः संवृत्तोऽस्मि । अत्र मालतीप्राप्तिरेव जीवितसाफल्यमित्यनेन तदनुरागतद्गुणातिशयप्रख्यापनात्सातिशयवचनरूपं पुष्पं नामाङ्गमुक्तम् । यथा—'पुष्पं सातिशयं वचः' इति । इदानीं जात्यनुचितेनापि क्षिप्रफलप्रदेन वाह्यागमप्रसिद्धेन साहसिकजनकृत्येन महामांसविक्रयेणापि प्रयोजनं साधनीयमिति विचिन्त्य निर्धारयति—**न खल्विति** । महामांसं पुरुषमांसम् । इयमपि द्वितीयावस्था द्रष्टव्या । **वयस्येति** । अपि प्रश्ने । उत्कण्ठत उत्सुको भवति ॥ **मकरन्दः** । अथ किम् । बाढमुत्कण्ठितोऽहमित्यर्थः । तदेवाह—**तदिति** । सरसप्रहारं सशोणितशार्दूलकरजक्षतं मामालोक्याविचारितविगलत्कुचावरणांशुका । अनेन तात्का-

त्रस्तैकहायनकुरङ्गविलोलदृष्टि-
राश्लिष्टवत्यमृतसंवलितैरिवाङ्गैः ॥ ८ ॥

**माधवः**—न दुर्लभा बुद्धरक्षितायाः प्रियसखी । अपि च ।

प्रमथ्य क्रव्यादं मरणसमये रक्षितवतः
परिष्वङ्गं लब्ध्वा तव कथमिवान्यत्र रमताम् ।
तथा च व्यापारः कमलनयनाया नयनयो-
स्त्वयि व्यक्तस्नेहः स्तिमितरमणीयश्चिरमभूत् ॥ ९ ॥

तदुत्तिष्ठ । वरदासिन्धुसंभेदमवगाह्य नगरीमेव प्रविशावः ।

(उत्थाय परिक्रामतः ।)

**मकरन्दः**—अयमसौ महानद्योर्व्यतिकरः । य एषः

जलनिबिडितवस्त्रव्यक्तनिम्नोन्नताभिः
परिगततटभूमिः स्नातमात्रोत्थिताभिः ।

---

लिकी तस्याः कान्तिरुक्ता । त्रस्तो य एकहायनकुरङ्गस्तस्येव विलोला दृष्टिर्यस्याः सा । अनेन तस्या अप्युद्वेगप्रतीतेरनुरागातिशयः प्रख्याप्यते । अमृतसंवलितैः सुधारसाप्लुतैरिवाङ्गैः । अनेन तदङ्गसंस्पर्शस्य परमसौहित्यहेतुकत्वमुक्तम् । आश्लिष्टवत्या-लिङ्गनं कृतवतीति यत्तदालिङ्गनं कर्तृ मे मनः क्षिपति । व्यथयतीत्यर्थः ॥ ८ ॥ **माधवः । नेति** । बुद्धरक्षितायाः प्रियसखी त्वया न दुर्लभेति मकरन्दमाश्वासयति । अदुर्लभत्वमेवोपपत्त्या निर्धारयति—**अपि चेति । प्रमथ्येति** । मरणसमये तस्याः प्राणविपत्तिकाले क्रव्यादं मांसाशनं व्याघ्रं प्रमथ्य निहत्य रक्षितवतस्तादृशव्यसने प्राणत्राणलक्षणमुपकारं कृतवतस्तव परिष्वङ्गं स्वयंग्रहाश्लेषं लब्ध्वा कथमिवान्यत्र त्वद्व्यतिरिक्ते रमतामनुरक्तचित्ता भवेत् । तथा हि तदानीमेव स्वजीवितप्रदायिनस्तव मदीयं जीवितं शरीरं च समर्पितमिति स्वयंग्रहालिङ्गनेन कथितम् । अतस्त्वदर्पितजीवितेयं नान्यत्रानुरज्यत इति भावः । यथा मया निश्चितं तथा च तदनुरूप एव तस्या नयनयोर्व्यापारो व्यक्तस्नेहः प्रकटीकृतप्रेमातिशयस्तथा स्तिमिततया विषयान्तरासंस्पर्शेन तत्रैव निमग्नतया रमणीयो मनोहरस्त्वयि विषये चिरमभूत् । सस्नेहावलोकनादेव निश्चीयते तस्यास्त्वय्येवासक्तिरित्यर्थः । इदं चोपपत्त्या निर्णयरूपमुपन्यासो नामाङ्गम् । यथा 'उपपत्तिकृतो योऽर्थः स उपन्यास इष्यते' इति ॥ ९ ॥ **वरदेति** । वरदा सिन्धुश्चेति नद्यौ । तयोः संभेदः संगमः ॥ **मकरन्दः** । व्यतिकरोऽपि स एव । **य एष इति** । योऽयं नद्योः संभेदः । **जलेति** । पुण्यतीर्थत्वादवगाहनार्थमागताभिर्वधूभिः सकलपौराङ्गनाभिः परिगततटभूमिर्व्याप्ततीरप्रदेशः । दृश्यत इति शेषः । वधूर्विशिनष्टि—स्नातमात्रोत्थिताभिः स्नानसमनन्तरमेव निर्गताभिः अत एव जलेन निबिडि-

रुचिरकनककुम्भश्रीमदाभोगतुङ्ग-
स्तनविनिहितहस्तस्वस्तिकाभिर्वधूभिः ॥ १० ॥

(इति निष्क्रान्ताः सर्वे ।)

**इति महाकविश्रीभवभूतिविरचिते मालतीमाधवे चतुर्थोऽङ्कः ।**

---

तमत्यन्तसंश्लिष्टं यद्वस्त्रं तेन व्यक्ताः सम्यग्विभाव्यमाना निम्नोन्नतप्रदेशा नाभिमध्यकुचमण्डलनितम्बजघनाद्यवयवसंनिवेशा यासां ताः तथा रमणीयकाञ्चनकलशकान्तिमन्त आभोगेन परिपूर्णतया तुङ्गाश्च ये स्तनास्तत्र विनिहितानि न्यस्तानि हस्तस्वस्तिकानि व्यत्यस्तसंकुचितस्वस्तिकाकारहस्तयुगलानि यासां ताभिरिति तत्क्षणस्नातोत्थितवधूस्वभावोक्तिः । अथ च स्नानार्थमागताभिर्वधूभिरित्यनेन नानाजातिनगराङ्गनाप्रतीतेर्वर्णसंहारो नाम प्रतिमुखसंधेरङ्गमिति द्रष्टव्यम् । यथा—'वर्णसंहार इत्युक्तो नानाजातिसमागमः' इति ॥ १० ॥

विचित्रव्यञ्जनाप्राणा श्लाघ्यशब्दार्थबन्धुराः ।
जयन्त्यभिनवोल्लासा भवभूतिकवेर्गिरः ॥

**इति श्रीमद्भारद्वाजकुलतिलकपर्वतनाथयायजूकनन्दनत्रिपुरारिसूरिविरचितायां मालतीमाधवभावप्रदीपिकायां चतुर्थाङ्कविवरणम् ॥**

# पञ्चमोऽङ्कः ।

(ततः प्रविशत्याकाशयानेन भीषणोज्ज्वलवेषा कपालकुण्डला ।)

**कपालकुण्डला—**

षडधिकदशनाडीचक्रमध्यस्थितात्मा
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः ।
अविचलितमनोभिः साधकैर्मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः ॥ १ ॥

---

पञ्चबाणसुहृद्वैरिवामवामेतराङ्गकम् ।
वीरशृङ्गारयोरैक्यं हृदि स्फुरतु तन्महः ॥

अथ पूर्वाङ्कसूचितमहामांसविक्रयोपयोगिवृत्तान्तं सूचयितुमेकपात्रप्रयोज्यं शुद्धविष्कम्भमारभते—**तत इति**। एकेनापि मध्यपात्रेण शुद्धविष्कम्भो भवत्येव । यथाह—'शुद्धोऽनेकेन वैकेन मध्यपात्रेण योजितः' इति। आकाशयानेनेति योगिनीत्वेन खेचरगमनादिसिद्धिसंपत्तेः । भीषणो भयंकर उज्ज्वलो दीप्तश्च वेषो यस्याः सा। कपालकुण्डलेत्यन्वर्थं नाम ॥ **षडधिकेति**। शक्तीनां ज्ञानेच्छाक्रियोपलक्षितस्वभावपरिस्पन्दरूपाणां नाथः प्रयोक्ता । अत एव ताभिः परिणद्धो व्याप्तः। विचित्रविश्वपरिस्पन्दस्वतन्त्रनिर्मातेति यावत् । यद्वा शक्तीनां ब्राह्मयादीनां नाथः। अत एव ताभिः परिणद्धः स्वप्राणेश्वरबुद्ध्या प्रणयाद्वेष्टितः कापालिकादर्शनप्रतिपाद्यभूतनाथो जयति सर्वोत्कर्षेण प्रकाशते । तादृशस्यैव नमस्कार्यत्वात् । कीदृशोऽसावित्यत आह—षडधिकेति । षडधिका दश षोडश या नाड्यस्तासां यच्चक्रं मण्डलं पिण्डरूपं तस्य मध्यं हृदयं तत्र स्थित आत्मा स्वरूपं यस्य सः । नाडीनामनन्तत्वेऽपि प्रधाननाडीनामिडादीनां षोडशसंख्यात्वात्षडधिकदशेत्युक्तम् । इडादयो नाड्यश्च। 'इडा च पिङ्गला चैव सुषुम्ना च परा स्मृता । गान्धारी हस्तिजिह्वा च पूषा वसुवशा तथा ॥ अलम्बुषा कुहूश्चैव शङ्खिनी दशमी स्मृता । तालुजिह्वा च जिह्वा च विजया कामदा परा ॥ अमृता बहुला नाम नाड्यो वायुसमीरिताः॥' इति । अपरिमितसूक्ष्मनाडीसहितप्रधानषोडशनाडीसमूह एव रुधिरवसामांसादिधातुपरिपूरितं त्वगाच्छन्नं पिण्डशब्दवाच्यं शरीरमिति योगमार्गः । यद्वा षड्भ्यश्चक्रेभ्योऽधिकस्य । सप्तमस्येत्यर्थः । दशनाडीचक्रं दशनाड्यात्मकं चक्रं नाभिकमलरूपम् । यद्वा। षडधिकदशनाडीनां षोडशनाडीनां चक्रं षोडशनाड्यात्मकं चक्रं कण्ठबिलवर्त्यनाहताख्यम् । तत्र स्थित उपासनाविशेषार्थं संनिधापित आत्मा स्वरूपं यस्येत्यर्थः । तद्यथा चक्राणि योगशास्त्रे—'चतुर्दलं स्यादाधारे स्वाधिष्ठाने च षड्दलम् । नाभौ दशदलोपेतं सूर्यसंख्यदलं हृदि ॥ कण्ठे स्यात्षोडशदलं भ्रूमध्येऽशीतिसंमितम् । सहस्रदलमाख्यातं ब्रह्मरन्ध्रे तु पङ्कजम् ॥ एतानि

इयमिदानीमहम्

नित्यं न्यस्तषडङ्गचक्रनिहितं हृत्पद्ममध्योदितं
पश्यन्ती शिवरूपिणं लयवशादात्मानमभ्यागता ।
नाडीनामुदयक्रमेण जगतः पञ्चामृताकर्षणा-
दप्राप्तोत्पतनश्रमा विघटयन्त्यग्रेनभोऽम्भोमुचः ॥ २ ॥

उद्वृत्तस्खलितकपालकण्ठमाला-
संघट्टक्कणितकरालकिंकिणीकः ।
पर्याप्तं मयि रमणीयडामरत्वं
संधत्ते गगनतलप्रयाणवेगः ॥ ३ ॥

---

सप्त पद्मानि चक्रस्थानि प्रचक्षते ॥' इति । नाडीचक्रात्मककमलानां नाड्य एव दलानि । अनेन चाणुरङ्गुष्ठपरिमाणो वा जीव इति तन्मतम् । तद्विदां तादृगात्मस्वरूपदर्शिनां योगिनां हृदि विनिहितं रूपं यस्य सः । तथाविधः सन्सिद्धिदो भुक्तिमुक्तिप्रदः । अविचलितमनोभिर्विषयान्तरपरित्यागेन स्वैकतानमनस्कैः साधकैः स्वोपासकैर्योगिभिर्मृग्यमाणोऽन्विष्यमाण इति । अत्र नाडीचक्रादिपदानां केवलयोगशास्त्रप्रसिद्धत्वादप्रतीतत्वमपि स्वात्मविमर्शने न दुष्टत्वं किंतु गुणत्वमेवेत्याहुः ॥ १ ॥ **इयमित्यादि । नित्यमिति ।** नित्यं प्रतिदिनं जपोपक्रमसमयेऽनुष्ठेयमन्त्राङ्गत्वेन यन्न्यस्तं तत्तत्स्थानेषु 'हृदयाय नमः,शिरसे स्वाहा'इत्यादि षडङ्गन्यासप्रकारेण विन्यस्तम्। षडङ्गानां हृदयशिरःशिखाकवचनेत्रास्त्राणां चक्रं सङ्घस्तत्र निहितस्तन्मध्यगतत्वेन ध्यातः । 'मां कोऽपि मन्त्राधिदेवतात्मकत्वेनात्मानं ध्यात्वा मन्त्रमनुतिष्ठेत्' इत्यागमः । अत एव हृत्पद्मस्य हृदयकमलस्य मध्य उदितं प्रकाशमानं शिवरूपिणमात्मानं पश्यन्ती । इयमहं लयवशादूर्ध्वमाकृष्टस्य वायोस्तेषु तेषु नाडीनिवेशेषु वृत्तिनिरोधो गगनगमनहेतुभूतो योगशास्त्रप्रसिद्धो लयः। तद्वशाद्धेतोर्नाडीनां पार्थिवाप्याग्नेयवायव्यनाभसाख्यानां पञ्चभूतप्रकृतिकानां नाडीविशेषाणामुदयसाम्यावस्थातिरोधानक्रमेण तत्तद्भूतांशाकर्षणसाधनेन जगतो जङ्गमस्य जन्तुवर्गस्य यान्यारम्भकाणि पञ्चामृतानि न म्रियन्ते नात्यन्तं विनश्यन्ति कार्यकारणरूपेण सर्वदावस्थानादित्यमृतानि पञ्चमहाभूतानि तेषामाकर्षणात् । यद्वा—'विट् च मूत्रमसृङ्मज्जा शुक्रं पञ्चामृतं स्मृतम्' इति । तेषामाकर्षणादप्राप्तोत्पतनश्रमानुत्पन्नाकाशोद्गमनप्रयासा सत्यत एवाग्रेनभो नभसोऽग्रेऽम्भोमुचो मेघान्विघटयन्त्यपसारयन्तीदानीमभ्यागता । उद्देश्यं करालायतनं प्राप्तेत्यर्थः ॥ २ ॥ **उद्वृत्तेति ।** उद्वृत्तोर्ध्वं विक्षिप्ता ततः स्खलिता च या कपालैरेव ग्रथिता कण्ठमाला ग्रीवालंकारस्तत्र संघट्टः कपालानां परस्पराभिघातस्तेन क्वणिताः संजातक्वणाः । शब्दायमाना इति यावत् । कराला दन्तुराः किंकिण्यः कण्ठमालास्थापिताः क्षुद्रघण्टिका यत्र सः । गगनतलप्रयाणवेगो मयि पर्याप्तं परिपूर्णं रमणीयं मनोहरं डामरत्वमौद्धत्यं संधत्ते । संपादयतीत्यर्थः ॥३॥

तथा हि ।

विष्वग्वृत्तिर्जटानां प्रचलति निबिडग्रन्थिबन्धोऽपि भारः
संस्कारक्काणदीर्घं पटु रटति कृतावृत्ति खट्वाङ्गघण्टा ।
ऊर्ध्वं धूनोति वायुर्विवृतशवशिरःश्रेणिकुञ्जेषु गुञ्ज-
न्नुत्तालः किंकिणीनामनवरतरणत्कारहेतुः पताकाम् ॥ ४ ॥

(परिक्रम्यावलोक्य च ।) इदं च पुराणनिम्बतैलाक्तपरिभृज्यमानरसोनकरसगन्धिभिश्चिताधूमैरधस्ताद्विभावितस्य श्मशानवाटस्य नेदीयः करालायतनम् । यत्र पर्यवसितमन्त्रसाधनस्यास्मद्गुरोरघोरघण्टस्याज्ञया सविशेषमद्य मया पूजासंभारः संनिधापनीयः । कथितं हि मे गुरुणा—'वत्से कपालकुण्डले, भगवत्याः करालाया यन्मया प्रागुपयाचितं स्त्रीरत्नमुपहर्तव्यम्, तदत्रैव नगरे विदितमास्ते' इति । (सकौतु-

तदेव रमणीयडामरत्वं प्रकटयति—**विष्वगिति** । विष्वक्सर्वतो वृत्तिरवस्थानं यस्य स तादृशो जटानां भारो दृढतरग्रन्थिबन्धोऽपि वेगवशात्प्रचलति । तथा खट्वाङ्गे नद्धा घण्टा संस्कारेण शब्दजनकाभिघातादिजन्येनाभिहन्यमानगतेनातिशयेन कार्यैकपरिकल्प्येन जनितो यः क्वाणो रणरणध्वनिस्तेन दीर्घं यथा तथा । पटु । कृता आवृत्तिः पुनःपुनरभ्यासो यथा स्यात्तथेति क्रियाविशेषणत्रयम् । रटति ध्वनति । तथा विवृतानि यानि शवशिरांसि तेषां या श्रेणी तस्याः कुञ्जेषु सरन्ध्रकुहरेषु गुञ्जञ्शब्दायमान उत्ताल उद्भटः किंकिणीनामनवरतरणत्कारस्याविच्छिन्ननिक्वाणस्य हेतुर्वायुर्वेगोत्पन्नोऽनिलः पताकां खट्वाङ्गावबद्धामूर्ध्वं यथा स्यादेवं धूनोति कम्पयति ॥ ४ ॥ **परिक्रम्येत्यादि** । इदं च तत्करालायतनम् । कीदृशम् । श्मशानवाटस्य पितृवनप्रदेशस्य नेदीयोतिसंनिहितम् । श्मशानवाटं विशिनष्टि—पुराणेन निम्बतैलेनाक्तस्य परिभृज्यमानस्य रसोनकस्य लशुनस्य । 'लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः' इत्यमरः । यो रसो निर्यासस्तस्य गन्ध इव गन्धो येषां तैश्चिताधूमैर्गगनंकषैरधस्ताद्भूतले विभावितस्यानुमितस्य महतो विस्तीर्णस्येति । यत्र करालायतने पर्यवसितमन्त्रसाधनस्य परिसमापितपुरश्चरणस्य सविशेषं पूर्वापेक्षया विशेषसहकृतं यथा स्यात्तथा पूजासंभारः पूजोपकरणकलापः संनिधापनीय उपस्थापनीयः । विशेषः को वेत्यपेक्षायामाह—**कथितमिति** । प्रागुपयाचितं पूर्वं प्रार्थितं सिद्धेऽस्मिन्मन्त्रे भगवत्यै स्त्रीरत्नमुपहारीकरिष्यामीति संकल्पितम् । उपहर्तव्यमानेतव्यम् । तत्स्त्रीरत्नं चात्रैव संनिहिते नगरे विदितं सर्वजनप्रसिद्धमास्त इति ॥ **सकौतुकमिति** । एतादृशसुकुमारमधुराकारस्य कथं निशायामत्र निर्निमित्तं संचरणमिति सकौतुकम् । अतिगम्भीरमधुराकृतिर्गाम्भीर्यमाधुर्यगुणशालिन्याकृतिर्यस्य सः । 'भीशोकक्रोधहर्षेषु गाम्भीर्यं निर्विकारता । सर्वावस्थासु माधुर्यं प्रियाणां मृदुकारिता ॥' उत्तम्भितो जूटीकृत्य बद्धः

कमवलोक्य ।) तत्कोऽयमतिगम्भीरमधुराकृतिरुत्तम्भितकुटिलकुन्तलभारः कृपाणपाणिः श्मशानमवतरति । य एषः ।

कुवलयदलश्यामोऽप्यङ्गं दधत्परिधूसरं
ललितविकटन्यासः श्रीमान्मृगाङ्कनिभाननः ।
हरति विनयं वामो यस्य प्रकाशितसाहसः
प्रविगलदसृक्पङ्कः पाणिर्ललन्नरजाङ्गलः ॥ ५ ॥

(निरूप्य ।) स एष कामन्दकीसुहृत्पुत्रो महामांसस्य पणयिता माधवः । तत्किमनेन । यथासमीहितं संपादयामि । विगलितप्रायश्च पश्चिमसंध्यासमयः । तथा हि ।

व्योम्नस्तापिच्छगुच्छावलिभिरिव तमोवल्लरीभिर्व्रियन्ते
पर्यन्ताः प्रान्तवृत्त्या पयसि वसुमती नूतने मज्जतीव ।

---

कुटिलः करालः कुन्तलभारः केशकलापो यस्य सः । कृपाणपाणिः खड्गहस्तः श्मशानमवतरति । तत्कोप्ययं मृदुप्रकृतिरपि कुतश्चिद्धेतोरचिरपरिगृहीतसाहसव्यापारः तदेष विचारणीय इत्याशयः । तमेव निर्वर्णयति—**य एषः । कुवलयेति ।** स्वभावत इन्दीवरदलनीलोऽपि विरहादिनिमित्तसंस्काराराहित्यात्परिधूसरं विवर्णमङ्गं दधद्बिभ्राणः तथा महानायकतया विनयगाम्भीर्यधैर्यशालित्वेनात्रापि श्मशानप्रदेशे ललितो गाम्भीर्यमनोहरो निःशङ्कश्चरणविन्यासो यस्य सः । श्रीमान्महाभाग्यद्योतककान्तिविशेषयुक्तो मृगाङ्कनिभाननः पूर्णचन्द्रमण्डलसंनिभवदनो य एष परिदृश्यतेऽतो नेदमस्य समुचितं कर्म । किंतु 'न साहसमनारुह्य नरो भद्राणि पश्यति' इति न्यायेन जीवितव्ययेनापि साधनीयं किंचिदभिलषितं साधयितुमेवं साहसमवलम्बितमिति भावः । यस्यास्रप्रक्षरद्रुधिरकर्दमो ललन्नरजाङ्गलो विलसन्नरमांसखण्डः प्रकटीकृतसाहसो वामः पाणिरेव केवलं विनयं हरत्यविनयं द्योतयति । समांसखण्डवामकरदर्शनादेवास्य साहसं प्रतीयते । तदतिरिक्तावयवदर्शने तु प्रशान्तो विनीताकार एव प्रतीयते । न साहसमित्यर्थः ॥ ५ ॥ निरूप्य निश्चित्य । **स एष इति ।** यः कामन्दकीसुहृदो देवरातस्य कुण्डिनेश्वरसचिवस्य पुत्रो बाल एवास्माभिर्दृष्टः स एवासौ कार्यवशादिहागतः किंचिदतिदुःसाधकं कार्यं साधयितुमवलम्बितसाहसो महामांसस्य विक्रेता भूत्वेह संचरति । युज्यते चास्यैतन्मनुष्यदुष्करं कर्म । यदसौ महायोगिन्याः कामन्दक्याः सुहृत्पुत्र इति भावः । पणयिता व्यवहर्ता । विक्रेतेति यावत् । 'पण व्यवहारे स्तुतौ च' इति धातोस्तृचि रूपं पणयितेति । तत्किमनेन । अयमपि स्वकृत्यं निर्वर्तयतु । अहमपि मदिष्टं संपादयामीत्यर्थः । गुर्वाज्ञानुष्ठानस्य कालोप्यनुगुणोऽयं प्राप्त इत्याह—**विगलितप्राय इति ।** निर्वृत्तकल्प इत्यर्थः । **व्योम्न इति ।** व्योम्नः पर्यन्ता अवनीतलप्रान्तेष्ववनतास्तिरस्करिणीवत्प्रतिभा-

वात्यासंवेगविष्वग्विततवलयितस्फीतधूम्याप्रकाशं
प्रारम्भेऽपि त्रियामा तरुणयति निजं नीलिमानं वनेषु ॥ ६ ॥

( इति निष्कान्ता । )

**इति शुद्धविष्कम्भः ।**

( ततः प्रविशति यथानिर्दिष्टो माधवः । )

**माधवः**—(साशंसम् ।)

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।

---

समाना वियत्तटाः । तमोवल्लरीभिरन्धकारलताभिस्तापिच्छगुच्छावलिभिरिव तमालस्तबकपङ्क्तिभिरिव त्रियन्त आच्छाद्यन्ते । तथा पृथिवीप्रान्तवृत्त्या परितः पर्यन्तदेशनिमज्जनक्रमेण नूतने प्रत्यग्रतया कलुषे पयसि मज्जतीव । अन्धकारावृता पयोराशिनिमग्नेवेत्युत्प्रेक्षते । तथा त्रियामा रात्रिः प्रारम्भे स्वप्रवेशसमयेऽपि वात्यानां मण्डलाकारवातानां सम्यग्वेगेन विष्वक्सर्वतो वितता विस्तारिता ततो वलयिता संजातवलयाकारा स्फीता प्रचुरा या धूम्या धूममण्डली तस्याः प्रकाशो यत्र तं निजं स्वकीयं नीलिमानं तरुणयति । प्रमुख एव संतमसनैल्यं यौवनदशां प्रापयतीत्यर्थः ॥ ६ ॥ एवं महामांसविक्रयार्थं माधवप्रवेशं, करालायतने पूजार्थमघोरघण्टस्य संनिधानम् , तत्र मालत्यानयनं च सूचयित्वा कपालकुण्डला निष्क्रान्ता॥ इति शुद्धविष्कम्भः ॥ **तत इत्यादि** । यथानिर्दिष्टः कपालकुण्डलया निरूपितरूपः ॥ **माधवः—साशंसमिति** । यदुद्देशेन महामांसविक्रयाख्यं कर्म चिकीर्षितं तत्प्रयोजनाशंसापूर्वकमाहेत्यर्थः । **प्रेमेति** । शृङ्गारस्य स्थायीभावस्य रतिरूपस्य प्रकर्षलक्षणावस्थाविशेषः प्रेमेत्युच्यते । प्रेममानप्रणयस्नेहानुरागा रतेरेवावस्थाभेदाः । यदुक्तम्—'इयमङ्कुरिता प्रेम्णा मानात्पल्लविता भवेत् । सकोरका प्रणयतः स्नेहात्कुसुमिता भवेत् ॥ रागात्फलवती सेयमनुरागेण भुज्यते ॥' इति 'परस्पराश्रयघनं निरूढं भावबन्धनम् । यदेकायत्ततोपाधि तत्प्रेमेति निगद्यते ॥' इति । तेनार्द्राः सरसाः । आनुकूल्यशालिन्य इति यावत् । उक्तं च—'यद्यदस्याः प्रियो वक्ति तस्य तस्याशुकारिताम् । योग्यतामार्द्रतामाहुर्मनःकालुष्यनाशिनीम् ॥' इति । तथा प्रणयं स्पृशन्ति तेनानुरज्यन्त इति प्रणयस्पृशः । प्रणयो यथा—'उपचारैर्मिथो यूनोर्यद्बाह्याभ्यन्तराभिधैः । प्रेम नीतं प्रकर्षं चेतस एव प्रणयः स्मृतः ॥' इति । तथा परिचयात्तस्यैव प्रणयस्य पुनःपुनरवलोकनसंभाषणस्पर्शादिभिः परिपोषात् । 'विदेशस्थे मृते वापि दुर्बले प्रतियोगिनि । धर्मिणि क्लेशकारी यः स प्रौढस्नेह उच्यते ॥' इत्येवंरूपप्रौढस्नेहात्मकतापत्तौ सत्यां तत उद्गाढः प्रौढः कदाचिदप्यनुपरमो माञ्जिष्ठाख्यो रागश्चित्तानुरञ्जकस्नेहप्रकर्षो यस्तस्य उदय उद्रेको यासु ताः । रागो यथा—'स एष चेद्गुणद्रव्यदेशकालादिभिर्हृदि । रज्यते दीप्यते चित्ते स राग इति कथ्यते ॥' माञ्जिष्ठो रागो यथा—'अतीव शोभते यस्तु ना-

याश्चन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥ ७ ॥

अपि च ।

पैति क्षालितोऽपि सन् । स एव कविभिः सर्वैर्माञ्जिष्ठो राग उच्यते ॥' अयमेव च श्रेष्ठो रागः । यथाह—'श्रेष्ठो माञ्जिष्ठरागः स्यान्नीलीरागस्तु मध्यमः । कुसुम्भरागः कविभिरधमः परिकीर्तितः ॥' इति स्थिरोऽप्यशोभनो नीलीरागः । आपातरमणीयः कुसुम्भरागः क्षणिकः । निसर्गमधुराः स्वभावरमणीया मुग्धदृशस्तस्यास्तास्तास्तथातथानुभूताः केवलमनुभवैकसाराश्चेष्टाः कटाक्षविक्षेपभ्रूक्षेगात्रवलनप्रभृतयः शृङ्गारानुगुणा गात्रारम्भाः यथा—'लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् । मोट्टायितं कुट्टमितं विव्वोकललिते तथा ॥ विहृतं चेति विज्ञेया योषितां दश गात्रजाः ॥'इत्येवं सूक्ष्मदृष्ट्या परिगणिता मयि भवेयुरित्याशंसायां लिङ् । यासु चेष्टास्वाशंसामात्रेण परिकल्पितास्वपि कथमेतदीयप्रेमार्द्रकटाक्षगोचरो भवेयम् ,कथममृतरसमधुरमाकूतगर्भमस्याः प्रणयवचनमाकर्णयेयम् ,कथमेतदीयगाढालिङ्गनसौहित्यसुधारससरस्यात्मानं निमज्जयेयमित्यादिप्रकारेण मनोरथमात्रोपस्थापितास्वपि न तु परमार्थतोऽनुभूयमानासु, अन्तःकरणस्य लयो विलीनता तदेकनिमग्नत्वम् । तप्तायःपिण्डपाथोन्यायेन तन्मयीभाव इति यावत् । स भवति । किमु वक्तव्यं वस्तुतोऽनुभूयमानास्विति भावः । कीदृशो लयः । बाह्यकरणानां चक्षुरादीनां यो व्यापारः स्वस्वविषयग्रहणहेतुशक्तिरूपस्तं रोद्धुं शीलमस्यास्तीति तथा । अन्तःकरणस्य चेष्टास्वेव विलीनत्वात्तदधिष्ठानाभावादुपरतव्यापाराणीन्द्रियाणि भवन्त्येव । मूर्छादिलयाद्वैषम्यमाह—आनन्दसान्द्र आनन्दैकप्रचुरः प्रत्यगात्मन इव ब्रह्मण्यानन्दात्मके विलयो मोक्षदशायां तद्वदित्यर्थः । अत्र चाभिलाषविप्रलम्भशृङ्गारः प्राधान्येन व्यज्यत इत्यभिधामूलसंलक्ष्यक्रमव्यङ्ग्यो रसध्वनिः ॥ ७ ॥ अत्र च पूर्वं शंकरपुरोद्यानवृत्तान्तेन दृष्टस्य समनन्तरं नन्दनप्रदाननिश्चयेन नष्टस्य बीजस्य 'प्रेमार्द्राः' इत्यारभ्य'लीनेव प्रतिबिम्बितेव'इत्यन्तेन ततः 'उपपन्नस्तावत्' इत्यादिना तत्रतत्राङ्कपरिसमाप्तिपर्यन्तं मुहुर्मुहुरन्वेषणादनुसंधानरूपायाः षष्ठाङ्के मालत्याः प्रथमावलोकसमयादारभ्य 'विस्तारिणः' इत्यादिनाङ्कसमाप्तिपर्यन्तं निरूप्यमाणायाः प्राप्त्याशायाः 'वत्स मकरन्द, मालतीनेपथ्येन परिवृतः प्रवर्तस्वात्मनः परिणयाय' इत्यादिना सप्तमाङ्कपरिसमाप्तिपर्यन्तं निरूप्यमाणाया मालतीरूपधारिणो मकरन्दस्योपनायकस्य तस्याधिकारिकवृत्तान्तोपयोगिव्यापाररूपायाः पताकायाश्च समन्वयात्कृत्रिमपरिणयलक्षणावान्तरकार्यसमन्वितानामङ्कत्रयप्रतिपाद्यानां महामांसविक्रयमालतीप्राणत्राणघोरघण्टसंहरणनगरदेवतागर्भगृहवृत्तान्तकृतकमालतीरूपमकरन्दव्यापाररूपाणां कथांशानां संबन्धरूपस्तत्रतत्रोद्भावयिष्यमाणभूताहरणाद्येकादशाङ्गसमन्वितो गर्भसंधिर्निरूपितः कविनेति द्रष्टव्यम् । तल्लक्षणानि—'गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः । समन्वयाद्भवेदेष प्राप्त्याशया पताकया ॥ अङ्गान्येकादशैतस्य गर्भसंधेर्यथाक्रमम् ॥'

अतिमुक्तकग्रथितकेसरावली-
सतताधिवाससुभगार्पितस्तनम् ।
अपि कण्ठजाहविनिवेशिताननः
प्रियया तदङ्गपरिवृत्तिमाप्नुयाम् ॥ ८ ॥

अथवा दूरे तावदेतत् । इदमेव तावत्प्रार्थये ।

संभूयेव सुखानि चेतसि परं भूमानमातन्वते
यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः ।

---

इति । 'उपायापायचिन्ताभ्यां प्राप्त्याशा प्राप्तिसंभवा । नायकस्य कथामध्ये तत्समानस्य या कथा । अफलोदयसंबन्धा सा पताकेति कीर्तिता' इति संक्षेपः। इदानीं सर्वास्वपि चेष्टासु श्रेष्ठामाश्लेषरूपामेव चेष्टां प्रार्थयते—**अतिमुक्तकेति**। अतिमुक्तकैर्वासन्तिकाकुसुमैः । 'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवीलता' इत्यमरः । अन्तरान्तरा निवेशितैर्ग्रथिता या केसरावली बकुलकुसुमप्रचुरा माला तस्याः सतताधिवासेन सुभगावर्पितौ स्तनौ मदीयोरसि निवेशितौ स्तनौ यस्मिन्कर्मणि तदिति क्रियाविशेषणम् । प्रियया कण्ठजाहे मदीयग्रीवामूले । 'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ' इति कर्णादित्वात्कण्ठशब्दान्मूले जाहच्प्रत्ययः । तत्र विनिवेशितं स्वकीयमाननं यस्य सोऽहम् । आलिङ्गनसमये स्त्रीणां मुग्धानां स्वभावोऽयं यत्प्रियकण्ठमूले स्वशिरो भुग्नं निदधत इति तदङ्गेन मदङ्गस्य परिवृत्तिं विनिमयं प्राप्नुयाम् । आलिङ्गनवशात्तदङ्गं मदधीनं मदङ्गं च तदधीनं भवेदित्यर्थः। परिवृत्तिरेवालंकारः । केचित् । 'अविमुक्तक-'इति पठित्वा'अविमुक्तका अनुज्झिता कदाचिदपि मया ग्रथितत्वेनादराद्या केसरावली'ति व्याचक्षते ॥ ८ ॥ **अथवेति** । 'मनोरथानामगतिर्न विद्यते' इति नीत्या केवलं प्रार्थ्यते । अतिदुर्लभत्वान्न संभाव्यते । इदं तु संभाव्यत इति प्रथमं तदेव प्रार्थये। किं तदित्यत आह—**संभूयेति** । यत्र प्रियतमामुख आलोकपथावतारिणि दृङ्मार्गे निपतिते सति सुखानि लोके यावन्ति सुखसाधनानि सन्ति तत्सर्वानुभवजन्मानन्दविशेषाः संभूयेव राशीभूयेव चेतसि परं निरतिशयं भूमानमन्योन्यमेलनजनितमतिबहुलमातन्वते विस्तारयन्ति । नेत्रयोर्द्रष्टुश्चक्षुषोरुत्सवो हर्षहेतुर्यद्विषयो व्यापारः । 'उत्सूते हर्षमित्येष उत्सवः परिकीर्तितः' इत्युक्तत्वात् । रतिमिच्छाविशेषात्मिकां शृङ्गारस्थायिनीं चित्तवृत्तिं प्रस्तौत्युत्पादयति । 'रतिरिच्छा भवेद्यूनोरुभयप्रार्थनात्मिका' इत्युक्तत्वात् । दर्शनमात्रेणैव निरतिशयानन्दो रतिश्च नायिकाभिलाषरूपा भवतीत्यर्थः । किंच यन्मुखं बालेन्दोः कलङ्कराहित्यसौकुमार्यमनोहरस्य कलाः प्रतिमासमेकैकक्रमेणोत्पाद्यमानास्तासामुच्चयो राशिस्तस्मादुपचितैः संगृहीतैः सारैः श्रेष्ठांशैरुत्पादितमिवेत्युत्प्रेक्षा । निरतिशयाह्लादहेतुत्वेन नैर्मल्यप्रसादादिगुणयोगात्तदनङ्गस्य मङ्गलगृहं तदधिष्ठानेनानङ्गस्य त्रिभुवनविजयलक्षणमङ्गलप्राप्तेः । तदेतत्तस्याः प्रियाया मुखं भूयोऽपि पश्येयम् । पुण्यपरिपा-

यद्बालेन्दुकलोच्चयादुपचितैः सारैरिवोत्पादितं
तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम् ॥ ९ ॥

यत्सत्यमधुना संदर्शनं नेति स्वल्पोऽपि विशेषः । मम हि संप्रति सातिशयप्राक्तनोपलम्भसंभावितात्मनः संस्कारस्यानवरतप्रबोधात्प्रतायमानस्तद्विसदृशैः प्रत्ययान्तरैरतिरस्कृतप्रवाहः प्रियतमास्मृतिप्रत्ययो-

---

कवशादिदं तावदस्तु तावतापि चरितार्थ एवाहमित्याशयः । अतिशयोक्त्युत्प्रेक्षारूपकानि वाच्यालंकाराः । प्रसिद्धसुखसाधनाभावेऽपि कारणान्तरादेव तत्समस्तसुखोत्पत्तेर्विभावना संभूयेवेत्यत्र व्यज्यते । नेदं मुखमितरशरीरवद्भौतिकोपादानकं किं त्वन्यदेव लोकोत्तरमस्योपादानमित्यपह्नवः । कलङ्कशून्यसारांशनिर्मितत्वादस्य चन्द्रमण्डलाधिक्यप्रतीतेर्व्यतिरेकः । चन्द्रादेरप्युपमानत्वायोग्यत्वादन्यस्य चाभावादस्येदमेवोपमानमित्यनन्वयश्च यद्बालेन्दुकलेत्यत्र व्यज्यत इत्यादि निरूपणीयं सहृदयैः । रसध्वनिस्तूक्त एवेत्यलं प्रपञ्चेन ॥ ९ ॥ ननु भावनावशादनवरतमध्यक्षमीक्षमाणायां प्रियतमायां किमिति पुनः संदर्शनं त्वया प्रार्थ्यत इत्याशङ्क्य भावनाप्रसूतात्संदर्शनात्प्रार्थनीयसंदर्शनस्य विशेषमाह—**यदिति**। यद्यपि यादृशी प्रेयसी पूर्वमनुभूता तादृश्येवान्यूनातिरेकेणेदानीमपि दृश्यते । तत्र कश्चिद्विशेषस्तथाप्यधुना संदर्शनमिदानींतनं भावनाप्रसूतं दर्शनं सत्यं पारमार्थिकं न भवति । प्रार्थनीयं तु सत्यमित्येतावान्स्वल्पोऽपि विशेषः प्रार्थनीयसंदर्शनस्येदानींतनसंदर्शनाद्भेदोऽस्तीति यतः । तस्मात्तत्प्रार्थ्यत इत्यर्थः । ननु कथमेतावानेव विशेषो दर्शनस्यैवेदानीमभावादिति शङ्कां स्वसंवेदनसिद्धतन्मयीभावोपन्यासेन शमयति—**मम हि संप्रतीति**। सातिशयो दृढतरसंस्काराधानसामर्थ्यलक्षणातिशयसहितो यः प्राक्तन उपलम्भः पूर्वानुभवः । आपातदर्शनं हि कदाचिन्न संस्कारमादध्यात् । आहितो वा संस्कारो दार्ढ्याभावान्न स्मृतिं जनयेत् । बुभुत्सापूर्वकं तु संपादितः साधीयाननुभवः संस्कारोत्पादनाव्यभिचारी तदुत्पादितश्च संस्कारो दृढत्वादवश्यं स्मृतिं जनयतीति सातिशयेत्युक्तम् । तेन संभावितः संजनित आत्मा स्वरूपं यस्य तादृशस्य संस्कारस्य भावनाख्यस्यानवरतप्रबोधादुद्बोधहेतोश्चिन्ताया निरन्तरानुवृत्तिनिमित्तको योऽनवरतप्रबोध उद्बोधः स्वकार्यजननौन्मुख्यं तस्मात्प्रतायमानो धारावाहिकरीत्या विस्तारमधिरोहन् । अत्र तादृश एव संस्कारः पूर्वानुभवेन सातिशयोत्पादितः । यो नैकां स्मृतिं जनयित्वा स्वयं नश्यति किं तु घटाद्यनुरणनशब्दनिमित्तवत्प्रवाहरूपेण कार्यमुत्पादयति । यथा लीलावतीकारपक्षे सातिशयः प्राथमिककर्मजन्यः प्राथमिक एव शरादिगतो वेगः समनन्तरभाविनीमापतनात्कर्मसंततिं जनयति तद्वदिति वा । संस्कारस्येति जात्यभिप्रायमेकवचनम् । तेन धारावाहिकस्मृतिजननसमर्थः कर्मभावी संस्कारराशिरुत्पन्नः क्रमिककार्यदर्शनादेव क्रमेणैवोद्बोधोऽदृष्टवशात्परिकल्पनीय इति व्याख्येयम् । पुनः किंभूतः । तद्विसदृशैर्मालतीस्मृतिविजाती-

त्पत्तिसंतानस्तन्मयमिव करोति वृत्तिसारूप्यतश्चैतन्यम् । तथा हि ।

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।

---

यैर्विषयान्तरावगाहिभिः प्रत्ययान्तरैरन्यज्ज्ञानैः । विभिन्नविषयावगाहित्वमेव ज्ञाना- नामन्योन्यं वैसादृश्यम् । अतिरस्कृतोऽनन्तरितः प्रवाहो यस्य । विजातीयप्रत्ययासंवलित इत्यर्थः । प्रियतमाविषयाः स्मृतय एव प्रत्ययास्तेषामुत्पत्तिसंतानैः संतन्यमानत्वेनोत्पद्यमानाः स्मृतिप्रत्यया इति यावत् । मम चैतन्यं चिद्रूपमात्मानं तन्मयं मालतीमयमिव तत्तादात्म्यापन्नमिव करोति । कुतः । वृत्तिसारूप्यतः । वृत्तेर्मालतीगोचरायाः स्मृतिरूपाया अन्तःकरणवृत्तेः सारूप्यं मालत्याकारकारितत्वं तस्मादयमर्थः । वेदान्तिनः खल्वेवमाहुः—इन्द्रियार्थसंनिकर्षे सत्यन्तःकरणं परिणामिस्वभावं वृत्त्याकारेण परिणमते । अन्तःकरणावच्छिन्नं च प्रमातृचैतन्यं वृत्तावपि प्रतिफलति । तदेव वृत्तिप्रतिफलितं चैतन्यं प्रमाणमित्युच्यते । सा च वृत्तिर्विषयदेशं गत्वा विषयाकारकारिता भवन्ती विषयाधिष्ठानचैतन्यावरणकमज्ञानं विरोधित्वात्प्रदीपतमोन्यायेन निवर्तयति । ततश्च विषयाधिष्ठानचैतन्यं वृत्तिप्रतिफलितमातृचैतन्याभेदेन कूपकुल्यालवालसलिलन्यायेनैक्यमापन्नं स्फुरति । अधिष्ठानचैतन्यस्य चान्तःकरणतादात्म्याध्यासाभावादहमिति न प्रतीतिः । किं त्विदमर्थेन तादात्म्याध्यासाद्विषयाकारेणेदमित्येवेति । तथा च प्रकृतेऽपि स्मृतेर्मालत्याकारकारित्वात्तत्प्रतिफलितचैतन्यं विषयचैतन्येनैक्यमापन्नं विषयाकारेण स्फुरतीति । नन्वेवं तर्हि सा मालतीत्येवं प्रतीतिः स्यान्न तु तन्मयत्वम् । सत्यम् । किंतु संतानपदं पर्यालोचितं त्वया नैरन्तर्येण स्मर्यमाणतत्तांशविगलनेनेयमिति पुरोवर्तित्वप्रत्यक्षे प्रतिभाति । ततोऽपि चिरकालं तथैव भावनयेदंतयापि प्रविलयात्प्रमातृचैतन्यतादात्म्यापन्नैव प्रतीयत इति भावनाया माहात्म्यमेतदेव। एवं हि कामातुरकामिनीसाक्षात्कारः प्रसिद्धः शास्त्रेष्विति। अत एवेवशब्दप्रयोगः सर्वत्र तन्मयमिव लीनेवेत्यादावपारमार्थिकत्वद्योतनाय । तेन सत्यप्येवंविधे दर्शने पारमार्थिकदर्शनप्रार्थनं युक्तमेवेति भावः । तन्मयमेवेति यदुक्तं तदेव विशदयति—**लीनेवेत्यादि**। या मदनोद्याने मद्विषयप्रागनुरागद्योतकाननुभवान्प्रकाशितवती सा प्रिया नोऽस्माकं तादृशे स्त्रीरत्ने मत्तोऽपि प्रागेव मय्यनुरक्त आसक्तचित्त इत्यहो मे सौभाग्यमित्यात्मनि गौरवमारोप्य बहुवचनम् । चेतसि लग्ना । कथं लग्नेति जिज्ञासायां लग्नत्वप्रकारविशेषानुत्प्रेक्षते—लीनेवेति। लयं गतेव पांसुराशिपरिपतितपयःकणवच्चित्तेऽन्तर्हितेवेत्यर्थः । ननु तर्हि तत्स्फुरणमेव न स्यादित्याशङ्क्याह—प्रतिबिम्बितेवेति । विमलसलिलाशये चन्द्रमण्डलमिव मच्चेतसि प्रतिबिम्बितेव। अन्तःस्फुरणमुपपन्नमित्यर्थः । ननु तर्हि बिम्बासंनिधौ कथं प्रतिबिम्ब इत्यत आह—लिखितेवेति । मच्चित्तभित्तौ मन्मथेनैव चित्रकारेण चिन्तातूलिकयानुरागवर्णकेन लिखितेव । अतः साक्षात्स्फुरतीत्यर्थः ।

primed down nailed

सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासंततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥ १० ॥

( नेपथ्ये कलकलः ।)

**माधवः**—(आकर्ण्य ।) अहो, संप्रतीतस्ततः प्रवर्तमानकौणपनिकरस्य महती श्मशानवाटस्य रौद्रता । अत्र हि,

पर्यन्तप्रतिरोधिमेदुरघनस्त्यानं चिताज्योतिषा-
मौज्ज्वल्यं परभागतः प्रकटयत्याभोगभीमं तमः ।

---

ननु तर्हि चित्रस्य रेखोपरेखासंस्थानविशेषात्मकत्वेन तद्रूपत्वाभावान्मालतीचित्रमेव लग्नं न तु मालती स्यादत आह—उत्कीर्णरूपेवेति । यथा शिलायामेव शिलापुत्रिका शिल्पिना टङ्केनोत्कीर्यते, एवं मम चित्ते मदनशिल्पिना शरैरेव टङ्कैरुत्कीर्णरूपमचित्तमेव प्रियाकारेणोत्कीर्णमित्यर्थः । नन्वणीयसो मनसो निरवयवत्वात्कथं प्रिया तत्रोत्कीर्णेत्यत आह—प्रत्युप्तेवेति । यथा कनकविकारेषु वज्रादिकं घटितं भवति, एवं मन्मनसि विरहानलसंदीपितत्वादुज्ज्वलसुवर्णपिण्डसंनिभेऽत एव द्रवीभूते स्त्रीरत्नं मदनसुवर्णकारेण स्थापितमित्यर्थः । ननु प्रतिवापस्य संयोगविशेषत्वाद्विभागोऽपि स्यादित्यतः संयोगदार्ढ्यार्थं प्रकारविशेषमाह—वज्रेति । गुडमाषरसादिद्रव्यभावितः सुधालेपो वज्रलेपः । तद्घटितं वस्तु यथा दृढतरं भवति तद्वत्प्रियापीत्यर्थः । ननु तर्हि मनसः प्रियायाश्च संस्पर्शो न स्यात् । मनस उपरि वज्रलेपस्तदुपरि तस्या घटितत्वादित्यत आह—अन्तर्निखातेवेति । भूतले निधानवन्मनोगर्ते यथा यत्किंचिन्निखात्यते तद्वत्प्रियापि निखातेत्यर्थः । तर्हि तद्वदेव प्रतीतिर्न स्यादित्यत आह—कीलितेवेति । यथा दारुद्वयमयःशलाकाविद्धं कीलितं भवति तद्वत्पञ्चभिरपि पञ्चबाणैरतितीक्ष्णैरुभयत्रानुवृत्ततया प्रोतैर्मम मनसि प्रियतमा कीलितेवेत्यर्थः । अत्र स्वचित्तस्य कठिनत्वादयःशलाकावेधव्यथासहिष्णुत्वेऽपि प्रियायाः सौकुमार्यातिशयशालिन्याः कुसुमसंस्पर्शेनापि खिद्यदङ्गं कथं शलाकावेधव्यथां सोढुमर्हतीत्यरुच्या प्रकारान्तरमाह—चिन्तेति । चिन्तासंततिः कथं तत्प्राप्तिः स्यादित्येवंरूपैव तन्तुजालं तेन निबिडं स्यूता बद्धेवालग्नेति सर्वत्रान्वयः । अत्र लीनेत्यत्रात्यन्ताभेदस्योपक्रमात्तस्य चोत्तरोत्तरं भेदप्रतीतेः पतत्प्रकर्षत्वादर्थस्य पतत्प्रकर्षातिशयस्यैतदुदाहरणं स्यादिति भीत्या 'पाठक्रमादर्थक्रमो बलीयान्' इति न्यायेन सोपानावरोहणरीत्या चिन्तासंततीत्यारभ्य लीनेवेतिपर्यन्तं चोत्तरोत्तरसंश्लेषोत्कर्षप्रतीतेः पतत्प्रकर्षत्वं न भवतीति केचिद्विदग्धा व्याचक्षते । अत्र लग्नतया निर्दिष्टायाः प्रकृतायाः प्रियाया लयादिक्रियानिमित्तकालीनाद्यप्रकृतवस्त्वात्मकत्वाध्यवसायप्रधानक्रियानिमित्तकद्रव्यस्वरूपभावोत्प्रेक्षेति निष्कर्षः । यत्सूत्रम्—'अप्रकृतगुणक्रियासंबन्धादप्रकृतत्वेन प्रकृतस्य संभावनमुत्प्रेक्षा' इति । एकस्यानेकधाध्यवसायाच्चेयं मालोत्प्रेक्षा ॥ १० ॥ नेपथ्ये कलकलः पिशाचानामुत्पन्न इति शेषः । कौणपाः राक्षसाः । रौद्रता भीषणता । अत्र हि श्मशानप्रदेशे । **पर्यन्तेति** । तमः कर्तृ चिताज्योतिषामौज्ज्वल्यं परभा-

संसक्ताकुलकेलयः किलकिलाकोलाहलैः संमदा-
दुत्तालाः कटपूतनाप्रभृतयः सांराविणं कुर्वते ॥ ११ ॥

तदुच्चैराघोषयामि । भो भोः श्मशाननिकेतनाः कटपूतनाः,

अशस्त्रपूतमव्याजं पुरुषाङ्गोपकल्पितम् ।
विक्रीयते महामांसं गृह्यतां गृह्यतामिति ॥ १२ ॥

(नेपथ्ये पुनः कलकलः ।)

**माधवः**—कथमाघोषणानन्तरमेव सर्वतः समुच्चलदुत्तालतुमुलव्यक्तकलकलाकुलः प्रचलित इवाविर्भवद्भूतसंकटः श्मशानवाटः । आश्चर्यम् ।

कर्णाभ्यर्णविदीर्णसृक्कविकटव्यादानदीप्ताग्निभि-
र्दंष्ट्राकोटिविशङ्कटैरित इतो धावद्भिराकीर्यते ।

---

गतो वर्णोत्कर्षात्प्रकटयति । तमोरूपसंनिधौ हि तेजोरूपमुज्ज्वलं प्रकाशते । कीदृशं तमः । पर्यन्ते ज्योतिषां प्रान्तप्रदेशे प्रतिरोद्धुं शीलमस्य तत्तथा । ज्योतिःसमीपपर्यन्तमावृत्य वर्तमानमित्यर्थः । तथा मेदुरं मांसलं घनं निबिडं स्त्यानं पिण्डीभूतम् । सूचीभेद्यमित्यर्थः । तथा भोगेन विस्तारेण बहुदेशव्यापित्वेन भीमं भीषणम् । किंचैते संसक्ताविच्छिन्नाकुला केलिर्येषां ते । उत्ताला उद्भटाः । कटपूतना नाम पिशाचविशेषास्तत्प्रभृतयः पिशाचाः संमदात्किलकिलारूपैः कोलाहलैः सांराविणं सर्वतोऽपि विसृत्वरमाक्रोशं कुर्वते । संपूर्वात् 'रु शब्दे' इत्यस्माद्धातोः 'अभिविधौ भाव इनुण्' इतीनुण्प्रत्ययः । 'तदन्तादण्' इति तद्धितोऽण्प्रत्ययः स्वार्थिकः ॥ ११ ॥ आघोषयामि । उच्चैर्विक्रयार्थं विक्रेयवस्तु निवेदयामीत्यर्थः । भो भोः संभ्रमादामन्त्रणे । **अशस्त्रेति** । शस्त्रेणास्पृष्टम् । अशस्त्रक्षतमित्यर्थः । शस्त्रस्पृष्टं हि पवित्रत्वात्पिशाचैः स्प्रष्टुमशक्यमिति तदभावस्तेषां तस्य सुग्रहत्वप्रतिपादनायोक्तः । अव्याजमकपटं वस्तुतो विक्रयार्थमेवानीतं न तु मांसविक्रयव्याजेन विश्वासमुत्पाद्य प्रहर्तुमानीतमित्यर्थः । यद्वा व्याजः कृत्रिमो गड्वादिर्मांसदूषको रोगविशेषस्तद्रहितं यत्पुरुषस्याङ्गं तेनोपकल्पितम् । गड्वादिकृत्रिमदोषदूषितं हि मांसं रसहीनत्वादनास्वाद्यं स्यात् । स्त्रीमांसापेक्षया पुरुषमांसस्य प्रशस्तत्वद्योतनाय पुरुषग्रहणम् । उक्तं हि कापालिकागमे—'अशस्त्रसंछिन्नमयोषिदीयं नृमांसमार्द्रं गलदस्रबिन्दु यत्' । अन्ये तु—'आत्मसिद्धिं पणीकृत्य साहसाद्यदुपार्जितम् । अशस्त्रपूतमव्याजं नृमांसं परिकीर्तितम् ॥' इत्याहुः । एतदेव महामांसशब्देनोच्यते । गृह्यतां गृह्यतामिति वीप्सा दुर्लभत्वादेतादृशस्य प्रथममागतस्यैवास्ति न पश्चादागतस्येत्यादरातिशयसूचनार्था ॥ १२ ॥ सर्वतः समुच्चलन्नुत्तालो भीषणस्तुमुलः संकीर्णो व्यक्तः स्फुटं विभाव्यमानश्च यः कलकलस्तेनाकुल आविर्भवद्भिस्तदैव प्रकटीभवद्भिर्भूतैः संकटः संकीर्णः श्मशानप्रदेशः प्रचलित इव । पिशाचगतसंचरणक्रियायास्तद्गततया प्रतीतेः कम्पमान इव वर्तत इत्यर्थः । **कर्णाभ्यर्णेति** । लक्ष्यं

विद्युत्पुञ्जनिकाशकेशनयनभ्रूश्मश्रुजालैर्नभो
लक्ष्यालक्ष्यविशुष्कदीर्घवपुषामुल्कामुखानां मुखैः ॥ १३ ॥

अपि च ।

एतत्पूतनचक्रमक्रमकृतग्रासार्धमुक्तैर्वृका-
नुत्पुष्णत्परितो नृमांसविघसैराददरं क्रन्दतः ।
खर्जूरद्रुमदघ्नजङ्घमसितत्वङ्नद्धविष्वक्तत-
स्नायुग्रन्थिघनास्थिपञ्जरजरत्कङ्कालमालोक्यते ॥ १४ ॥

(समन्तादवलोक्य विहस्य च ।) अहो प्रकारः पिशाचानाम् । ततः ।

पृथुचलरसनोग्रमास्यगर्तं
दधति विदार्य विशीर्णशुष्कदेहाः ।

---

मुखगतोल्कादीप्तिवशादीषल्लक्ष्यमन्धकारवशात्स्फुटमलक्ष्यं च विशेषतः शुष्कं कृशं दीर्घमत्युन्नतं च वपुर्येषामुल्कामुखानामन्वर्थानां पिशाचविशेषाणां मुखैर्नभ आकीर्यंत आकीर्णं भवतीति । कीदृशैः । कर्णयोरभ्यर्णमन्तिकं यावद्विदीर्णे विपाटिते ते सृक्कणी ओष्ठप्रान्तौ ताभ्यां विकटं यद्व्यादानं वदनकुहरविवरणं तेन दीप्तः प्रकाशमानोऽग्निर्येषु तैः । दंष्ट्राणां कोटिभिरग्रैर्विशङ्कटैराकुलैः । इतश्चेतश्च धावद्भिः । प्रदीप्तोल्कासंबन्धेन मुखमात्रदर्शनात्तेषामपसरणमुक्तम् । तडित्समूहसंनिभकेशादिभिराननैः ॥ १३ ॥ **एतदिति** । एतत्पूतनानां पिशाचविशेषाणां चक्रमालोक्यते दृश्यते । कीदृशम् । परितः सर्वत आददरमीषद्धर्घरं यथा तथा । 'आघर्घरम्' इति क्वचित्पाठः । क्रन्दत आक्रन्दनं कुर्वाणान्वृकान्मांसाहारान्मृगविशेषानक्रमेणातितृष्णया यौगपद्येनैकीकृत्य गृहीतो यो ग्रासः कवलपिण्डस्तस्मादर्धमुक्तैराधिक्याद्वदनविवरेऽव्यमानाद्भूमौ पतितैर्नृमांसस्य विघसैर्भुक्तशेषैः । उच्छिष्टैरिति यावत् । उत्पुष्णत्पोषणं कुर्वाणम् । खर्जूरद्रुमदघ्ना तत्प्रमाणा जङ्घा यस्य तत्तथा । असितया त्वचा नद्धाः परीताः विष्वक्सर्वतस्तता व्याप्ताः स्नायुग्रन्थयः सिराग्रन्थयस्ताभिर्घनं निबिडमस्थिपञ्जरं रक्तमांसमज्जादिभिर्विहीनतया केवलं पञ्जरीभूतान्यस्थीनि यस्य तादृक्च जरतोऽतिचिरकालजीवनाज्जराजीर्णाः कङ्कालाः शरीरास्थीनि यस्य तत्तादृक्चेति विशेषणसमासः । 'कङ्कालः पुंसि कायास्थ्नि' इति विश्वः ॥१४॥ समन्तादवलोक्य विहस्य च । आहेति शेषः । विहसनेन च तादृशभयंकरदर्शनेऽपि वीतशङ्कतासूचनान्नायकस्यातिमनस्विता कथिता । **पृथुचलेति** । विशीर्णा विशेषेण शीर्णा व्रणकिणगण्डादिबहूपद्रववशाद्विशकलिताः शुष्का मांसरुधिरादिशून्यतया नीरसा देहा येषां ते पिशाचाः पृथु विशालं चलया कम्पमानया रसनयोग्रम् 'पृथुतररसनोग्रम्' इति पाठेऽतिस्थूलतया रसनयोग्रमास्यगर्तं गर्तमिवास्यम् । उपमितसमासः । अत एव समाससाम्यात्तद्धाचिलोपे लुप्तोपमा ।

चलदजगरघोरकोटराणां
द्युतिमिह दग्धपुराणरोहिणानाम् ॥ १५ ॥

(परिक्रम्यावलोक्य च ।) हन्त, अतिवीभत्समग्रतो वर्तते ।

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपीठाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आत्तस्नाय्वान्त्रनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ १६ ॥

अपि च ।

निष्टापखिद्यदस्रः क्वथनपरिगलन्मेदसः प्रेतकाया-
न्दृष्ट्वा संसक्तधूमानपि कुणपभुजो भूयसीभ्यश्चिताभ्यः ।

---

तद्विदार्य विपाट्य स्थिताः सन्तः । चलद्भिश्चञ्चलैः 'गलत्' इति पाठे कोटरान्निर्गच्छद्भिरजगरैर्महासर्पैर्घोराणि भीषणानि कोटराणि येषां तेषां तादृशानां पुराणानां चिरंतनानाम् । जीर्णत्वशुष्कत्वसुषिरोपेतत्वादिसूचनाय पुराणत्वोक्तिः । रोहिणानां चन्दनानाम् । 'रोहिणश्चन्दनद्रुमः' इति विश्वः । द्युतिं शोभां दधति । चन्दनग्रहणं तेषां स्वभावतः पुष्पादिशून्यत्वान्नीरसत्वादजगरादिसमाश्रयत्वाच्चास्यगर्तस्य कोटरेण चलन्त्या रसनाया अजगरेण साधर्म्यं विवक्षितम् । तेन निदर्शनमलंकारः । न ह्यन्यगतां द्युतिमन्यो दधातीति चन्दनतरुगतद्युतेः पिशाचेष्वसंभवान्निबन्धनतयार्थाद्बिम्बप्रतिबिम्बभावेनोपमेयत्वाद्याक्षेपात् । यदुक्तम्—'असंभवद्धर्मयोगादुपमानोपमेययोः । प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना ॥' इति ॥१५॥ अतिबीभत्सम् । अतिजुगुप्सालम्बनमित्यर्थः । **उत्कृत्येति** । प्रेतरङ्कोऽत्यन्तदीनः पिशाचविशेषः । प्रथमं कृत्तिं त्वचमुत्कृत्योत्कृत्य छित्त्वाथानन्तरं पृथुनोत्सेधेन वपुरुन्नत्या भूयांसि प्रचुरतराणि । अंसयोर्भुजशिखरयोः स्फिजोर्जघनाभोगयोः पृष्ठपीठादिषु च मांसलेष्ववयवेषु सुलभान्यनायासप्राप्याण्युग्रपूतीनि दुःसहदुर्गन्धीनि मांसानि जग्ध्वा भक्षयित्वा समनन्तरमात्तानि स्नाय्वान्त्रनेत्राणि येन स तादृक् । स्नायुर्वसा, आन्त्रं पुरीतत् । स्नाय्वादीनामादानं तदन्तर्गतमांसग्रहणार्थम् । तदनन्तरं चाङ्कस्थात्समीपे वर्तमानात्करङ्कान्निर्मांसास्थिपञ्जराच्छवशरीरादस्थिसंस्थमस्थ्नामन्तर्गतं स्थपुटगतं निम्नोन्नतविषमप्रदेशस्थितमपि क्रव्यं मांसम् । प्रकटिता विषमकठिनस्थानस्थितं मांसं संनिष्क्रष्टुं प्रकाशिता दशना येन स तादृशः सन् । अव्यग्रं त्वरारहितं यथातथात्तीति । अत्र जुगुप्सायाः परिपोषाद्बीभत्सरसो ध्वन्यते ॥ १६ ॥ इममेव रसं प्रकारान्तरेण निर्वर्णयति—**अपि च । निष्टापेति** । कुणपभुजः शवशरीराभ्यवहारिणः पिशाचाः । निष्टापेन निःशेषेण तापो निष्टापस्तेन सम्यक्तापेन खिद्यन्ति क्षरन्मज्जान्यस्थीनि येषां तान् । तथा क्वथनेनावर्तनेन परि-

उत्पक्कस्रंसि मांसं प्रचलदुभयतः संधिनिर्मुक्तमारा-
देते निष्कृष्य जङ्घानलकमुदयिनीर्मज्जधाराः पिबन्ति ॥१७॥

(विहस्य।) अहो, प्रादोषिकः प्रमोदः पिशाचानाम्।

आन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः।
एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिब-
न्त्यस्थिस्नेहसुरां कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥ १८ ॥

---

तो गलत्स्रंसमानं मेदो येषां तानेवंविधान्संसक्तधूमांश्चितासु दह्यमानान्प्रेतकायान्भूयसीभ्यश्चिताभ्यो मृतशरीरदहनेन्धनराशिभ्यः कृष्ट्वाकृष्य । उत्पक्कमुत्कर्षेण पक्कमत एव स्रंसि विगलन्मांसं यस्य तत्। प्रचलत्कायापृथक्त्वेन स्वतन्त्रक्रियम्। उभयतो मूलाग्रभागयोर्यौ संधी ताभ्यां तयोर्वा निर्मुक्तं जङ्घानलकं जङ्घाकाण्डमारात्समीपे निष्कृष्य शरीरात्पृथक्कृत्य। 'निश्चूष्य' इति पाठे प्रथमं द्रवीभूतगलन्मांसत्वान्मेदादिवच्चूषणं कृत्वा पश्चात्तत उदयिनीर्निष्प्रतिबन्धं निःसरन्तीर्मज्जधारा अस्थिसुषिरपूरकधातुविशेषधाराः पिबन्ति । निःशब्दपानासेचनमित्यत्रासेचनमीषत्सेचनं तद्व्यतिरिक्तेनासेचनेनेषत्वविधानान्निष्ठापन इति षत्वम्। 'निष्टप्तं रक्षः'इत्यादौ निःशेषतापस्यैव विवक्षितत्वात्। पूर्वश्लोके मांसभक्षणस्योक्तत्वादत्र पानक्रियावर्णनेन बीभत्सरसपरिपोषः ॥१७॥ **प्रादोषिक इति**। रजनीमुखसमुद्भूतः प्रमोदः प्रकृष्टो हर्षः। तेषां रात्रिंचरत्वात्प्रदोषसमये प्राप्ते युक्तः प्रमोद इति भावः। **आन्त्रैरिति**। पूर्वं पिशाचवृत्तान्त उक्तः। इदानीं समृद्धवधूकानां तेषां विजृम्भणमुच्यते। आन्त्रैः कल्पिता मङ्गलार्थं प्रतिसरा रक्तसूत्रादिनिर्मितवलया यासां ताः। स्त्रीणां मृतानां हस्ता एव रक्तोत्पलानि तान्येव व्यक्तानुत्तंसान्बिभ्रतीति तथोक्ताः। शोणितपङ्क एव रुधिरकर्दम एव कुङ्कुमं तज्जुषन्ति सेवन्त इति तथाभूताः पिशाचाङ्गनाः सहसा हृद्भिरेव पुण्डरीकैः कृतस्रजः। 'पिनह्य शिरसा' इति पाठे स्वकीलेन शिरसा धृत्वा। एवमलंकृताः कान्तैः समं कपालैः शवशिरःकरोटिभिरेव चषकैः पानपात्रैरस्थिस्नेहमज्जान्येव सुरां प्रीताः सत्यः पिबन्तीत्येकदेशवर्तिसावयवं रूपकमत्रालंकारः। पिशाचानां संभोगनायकत्वस्य तदङ्गनानां तन्नायिकात्वस्य च श्रुत्यारोपणाभावादर्थात्प्रतीतेः। यदाह—'तद्रूपकमभेदो य उपमानोपमेययोः' इति। 'श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत्'इति च'आन्त्रैः कल्पितमङ्गलप्रतिसराः' इत्यत्र तु परिणामः। आन्त्रप्रतिसरत्वस्य प्रकृतोपयोगित्वेनारोपणात्। यथाह—'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति। 'आरोप्यमाणमारोपविषयात्मतया स्थितम्। प्रकृतस्योपयोगित्वात्परिणाम उदाहृतः॥' इति। प्रकृतोपयोगित्वादित्यनेन रूपकाद्भेद उक्तः। तत्र प्रकृतेनोपरञ्जकमारोप्यमाणस्य। अत्र तु तदुपयोगित्वमात्रमिति। अत्र प्रियतमैः सह मधुपानप्रवृत्तस्रक्चन्दनाद्यलंकृतना-

(परिक्रम्य । पुनः 'अशस्त्रपूतम्–'इत्यादि पठित्वा ।) कथं नामातिभीषणविभीषिकाविकारैर्झटित्यपक्रान्तं पिशाचैः । अहो निःसत्त्वाः सर्वे । (सनिर्वेदम् ।) विचितश्चैष सर्वः श्मशानवाटः । तथा खल्वियं पुरत एव

गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारसंवेल्लित-
क्रन्दत्फेरवचण्डधात्कृतिभृतप्राग्भारभीमैस्तटैः । उपलदीता-

---

यिकाप्रतीतेः संभोगशृङ्गाररसः प्रतीयमानः प्रधानस्य चार्थभूतस्य बीभत्सरसस्याङ्गमिति रसवदलंकारश्च । अङ्गाङ्गिभावापत्तेश्च शृङ्गारबीभत्सयोर्विरोधपरिहारः । 'अयं स रशनोत्कर्षी' इत्येवमादौ करुणाङ्गत्वात्करुणशृङ्गारयोरिव । यदाह ध्वनिकृत्—'विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम् । बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला ॥' इति । अत्र 'प्रेमार्द्राः' इत्यारभ्य 'लीनेव' इत्यन्तं परिपोषितस्य शृङ्गारस्य 'आन्त्रैः' इत्यनेन बीभत्सेन सह विरोध इति नाशङ्कनीयम् । मध्ये 'इतस्ततः परिवर्तमान–' इत्यादिनाश्चर्यस्य, 'कर्णाभ्यर्ण–' इत्यादिना चाद्भुतरसस्य नैरन्तर्यकृतविरोधपरिहारायैव निवेशनात् । 'रसान्तरान्तरितयोरेकवाक्यस्थयोरपि । निवर्तते हि रसयोः समावेशे विरोधिता ॥' इति एकवाक्यस्थयोरपि रसान्तरव्यवधाने विरोधो निवर्तते किल । किमुत भिन्नवाक्यस्थयोरित्यपिशब्दार्थः । न चात्रैकाश्रयत्वकृतो विरोधः शङ्कनीयः । शृङ्गारिणो माधवस्य बीभत्सरसालम्बनत्वानुपपत्तेर्न विरोधशङ्कापीति प्रागेव निरूपितम् । न च यावत्प्रधानरसपरिपोषः कृतस्तावानत्र परिपोषस्तेनापि विरोधाभावः । यदाह—'अविरोधी विरोधी वा रसोऽङ्गिनि रसान्तरे । परिपोषं न नेतव्यस्तथा स्यादविरोधिता ॥' इति । परिपोषाभावे कथं रसत्वमिति वाच्यम् । यतो यावानङ्गिनो रसस्य परिपोषः कृतस्तावानत्र न कर्तव्य इत्यस्या ध्वनिकारिकायास्तात्पर्यमित्यलं प्रपञ्चेन ॥ १८ ॥ 'पुनरशस्त्र–' इत्यादिपाठः पश्चादागतानामपि प्रज्ञापनार्थम् । अतिभीषणा विभीषिकाः परस्य भयमुत्पादयितुं ये विकारा विकृतवेषभाषादयो येषां तैः पिशाचैर्झटित्यपक्रान्तं सत्वरं पलायितम् । निःसत्त्वा निर्वीर्याः । **सनिर्वेदमिति** । पिशाचैः सर्वैरपि भीतभीतैरपसृतं न तु धार्ष्ट्यमवलम्ब्य मदन्तिकमागत्य मांसं विक्रीतम्, अक्रीते चास्मिन्न मे कार्यसिद्धिरिति निर्वेदहेतुः । सर्वोऽपि श्मशानवाटः श्मशानप्रदेशो विचितोऽन्विष्टः । नेतः परं पितृवनभागभूमिरस्ति यत्र क्रेतारो लभ्यन्ते । तदनुचितेऽपि साहसे प्रवृत्तस्य मे न कार्यसिद्धिरित्यहो दैवस्य मयि प्रातिकूल्यमिति भावः । ततः परं श्मशानप्रदेशस्याभावमेवाह—इह खलु पुरत एव पारेश्मशानं सरिद्वर्तत इत्यनेनान्वयः । **गुञ्जदिति** । पारेश्मशानं श्मशानस्य पारे पर्यन्ते । 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः । सीमभूता सरित्पर्यन्त एव वर्तते । अतो नेतः परं श्मशानभूमिरस्तीति भावः । कीदृशी सरित् । गुञ्जतां कूजतां कुञ्जकुटीरेषु लतादिपिहितोदरप्रदेशेषु स्थितानां कौशिकानामुलूकानां या घटास्तासां घूत्कारैः संवेल्लितः संवर्धितो यः क्रन्दतां फेरवाणां जम्बुकानां चण्डो भीषणो धात्कृतिरनुक-

अन्तःकीर्णकरङ्ककर्परतरत्संरोधिकूलंकष-
स्रोतोनिर्गमघोरघर्घररवा पारेश्मशानं सरित् ॥ १९ ॥
( नेपथ्ये । )

हा तात णिक्करुण, एसो दाणिं दे णरेन्दचित्ताराहणोवअरणं जणो विपज्जइ ।

**माधवः**—(साकूतमाकर्ण्य । )

नादस्तावद्विकलकुररीकूजितस्निग्धतार-
श्चित्ताकर्षी परिचित इव श्रोत्रसंवादमेति ।
अन्तर्भिन्नं भ्रमति हृदयं विह्वलत्यङ्गमङ्गं
गात्रस्तम्भः स्खलयति गतिं कः प्रकारः किमेतत् ॥२०॥

---

१. हा तात निष्करुण, एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते ।

---

रणशब्दस्तेन भृतो भरणशीलः प्राग्भारस्तेन भीमैर्भीषणैस्तटैरुपलक्षिता । तथान्तःकीर्णानां करङ्काणां निर्मांसास्थिपञ्जरशवशरीराणां यानि कर्पराणि कपालानि तेषु तरदत एव संरोधोऽस्यास्तीति संरोधि तत एवैकदेशे सङ्घीभूय वेगातिशयेन प्रवहणात्कूलंकषं तटभेदकम् । 'सर्वकूलाभ्रकरीषेषु कषः' इति खच्मुमागमश्च । तादृशं यत्स्रोतस्तस्य निर्गमस्तेन घोरो भीषणस्तथाविधो घर्घरः श्रवणकटू रवो यस्याः सा तादृशीति । अत्रोलूकादिभी रसाभावेऽपि वाच्यायाः सरितो भीषणत्वात्तदनुगुणा परुषवृत्तिरिति द्रष्टव्यम् ॥ १९ ॥ **नेपथ्ये इति** । इत्थं वाणी समुत्थितेति शेषः । हा तात निष्करुण, एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते । तात, जनक एवासि केवलम्, न तु जनकानुरूपव्यापारोऽसीति भावः । अतो निष्करुणो मयि कृपारहितो माधवाय मामदत्त्वा नन्दनाय प्रयच्छता त्वयैवाहं निष्करुणेन मारिता । श्रमस्तु मरणस्य केवलं व्यपदेशभाक् । अन्यथा मरणस्य निश्चितत्वादिति भावः । एष इत्यात्मनिर्देशः । जनो यः कश्चिज्जन्तुरित्येव मयि बुद्धिः नत्वपत्यमिति स्नेहलेशोऽपीति भावः । नरेन्द्रस्य चित्तानुरञ्जनोपकरणद्रव्यतयैवाहं तवोपयुक्ता मणिसुवर्णादिवत् । न तु पुनरात्मजेत्याद्यत्र द्रष्टव्यम् ॥ **माधवः** । साकूतं साभिप्रायम् । **नाद इति** । विकला भयोद्विग्ना या कुररी क्रौञ्चवधूस्तस्याः कूजितवत्स्निग्धो मसृणस्तारश्च मालतीध्वनिरिव चित्ताकर्षी मनोहार्ययं नादस्तावत्प्रथमं परिचित इव पूर्वमनुभूत इव श्रोत्रसंवादं पूर्वं व्याघ्रावस्कन्दनसमये मकरन्दविपत्तिविह्वलाया मालत्या यो ध्वनिर्मयानुभूतः स एवायमिति प्रत्यभिज्ञागोचरत्वमेति गच्छति । किंच नादश्रवणानन्तरं मदीयं हृदयमन्तर्मध्ये भिन्नं विदीर्णं सन्भ्रमत्यनवस्थितं वर्तते । तथाङ्गमङ्गं सर्वमप्यवयवजातं पाणिपादादिकं विह्वलति विषण्णं भवति । तथा गात्रस्य महावयविनः शरीरस्य स्तम्भो

करालायतनाच्चायमुच्चरन्करुणध्वनिः ।
विभाव्यते ननु स्थानमनिष्टानां तदीदृशाम् ॥ २१ ॥

भवतु । पश्यामि । (इति परिक्रामति ।)

(ततः प्रविशतो देवतार्चनाव्यग्रौ कपालकुण्डलाघोरघण्टौ कृतवध्यचिह्ना मालती च ।)

**मालती**—हा ताद णिक्करुण, एसो दाणिं दे णरेन्दचित्ताराहणोवअरणं जणो विपज्जइ । हा अम्ब, हिअए हदासि दुव्वारदेव्वदुव्विलसिदेण । हा मालदीमअजीविए, मह कल्लाणसाहणेक्कसुहसअ-

१. हा तात निष्करुण, एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते । हा अम्ब, हृदये हतासि दुर्वारदैवदुर्विलसितेन । हा मालतीमयजीविते, मम कल्याणसाधनैकसुखसकलव्यापारे भगवति कामन्दकि, चिरस्य

निश्चेष्टत्वं गतिं गमनं स्खलयति । ततश्चायमत्रार्तनादसमुद्भवप्रकारः को वा भवेत् । किमेतत् । किं मालत्येव केनचिद्दुर्लभसिद्धिसाधकेन मायाविना विविधजीवोपहारप्रियत्वप्रसिद्धायाः सकलसाधकाभिमतसिद्धिप्रदानदक्षायाः संनिहितायतनवर्तिन्याः करालाख्याया महाकाल्या उपहारीकर्तुं मायाबलादानीता संनिहितपथा करुणं क्रन्दति, उत तन्नादसदृशो वान्यदीयो वायं ध्वनिरिति प्रकारे वितर्कः । यद्यन्यदीयोऽयं ध्वनिस्तर्हि ममोत्पन्नं मनोविदलनभ्रमणपाण्याद्यवयवविषादगात्रस्तम्भादिकं किंनिमित्तकं स्यात् । न ह्यन्यदीयव्यसनान्ममैषा दुःसहवेदना भवितुमर्हति । तेन 'प्रमाणमन्तःकरणप्रवृत्तयः' इति न्यायेन प्रियाया एवैष आर्तध्वनिरिति मन्ये । सा हि मम बहिश्चराः प्राणा इति तद्विपत्तिसंभावनयैव ममैषा दशेति निश्चयगर्भो माधवस्य वितर्को युज्यत एवैषः ॥ २० ॥ प्रियाया एव केनचित्काल्या उपहारीकृताया एष ध्वनिरिति कुत इत्यत आह—**करालेति** । करालाख्यायाः काल्याः स्थानादुच्चरन्नुद्गच्छन्करुणध्वनिरिव विभाव्यते । तत्खल्वीदृशानां जीवोपहारादीनामनिष्टानां स्थानम् । तस्मात्संभावितमेवैतदित्यर्थः॥२१॥एवं विमृश्य कर्तव्यं निश्चिनोति—भवतु मया यथाभ्यूहितं तथैव भवतु । तथापि पश्यामि कालीस्थानं करुणध्वनिमूलं च प्रत्यक्षीकरोमि । यदि वस्तुतः प्रियैव तन्मूलम्, तदा मत्प्राणव्ययेनापि यदि सा विपदो निस्तारयितुं शक्यते, तर्हि तत्प्राणत्राणेन संपूर्णसंप्राप्तजीवितफलो भवेयम् । यदि न शक्यते, तदापि तत्रैव विसृज्य प्राणान्प्रियतमां लोकान्तरे वा समासादयेयमित्यभिप्रायः ॥ **मालती** । हा तात निष्करुण, एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते । हा अम्ब, हृदये हतासि दुर्वारदैवदुर्विलसितेन । 'मत्स्नेहमये' इति हृदयविशेषणं क्वचित्पठ्यते । तत्र तात,त्वं निष्करुणः किंतु(अम्बा)मद्वत्सलेति मद्वियोगशोकज्वलनान्न जीविष्यतीत्येतदेव मे दुःखनिमित्तम्, न तु मत्प्राणवियोगः । तस्य माधवमलभमानाया

लवावारे भअवदि कामन्दइ, चिरस्स जाणाविदासि दुक्खं सिणेहेण। हा पिअसहि लवङ्गिए, सिविणअवसरमेत्तदंसणा अहं दे संवुत्ता।

**माधवः**—हन्त, संप्रति निरस्त एव मे संदेहः। तदपि नाम जीवन्तीमेनां संभावयेयमिति। (झटिति परिक्रामति।)

**कापालिकौ**—देवि चामुण्डे भगवति, नमस्ते।

सावष्टम्भनिशुम्भसंभ्रमनमद्भूगोलनिष्पीडन-
न्यञ्चत्कर्परकूर्मकम्पविगलद्ब्रह्माण्डखण्डस्थिति।
पातालप्रतिमल्लगल्लविवरप्रक्षिप्तसप्तार्णवं
वन्दे नन्दितनीलकण्ठपरिषद्व्यक्तं तव क्रीडितम्॥ २२॥

---

ज्ञापितासि दुःखं स्नेहेन। हा प्रियसखि लवङ्गिके, स्वप्नावसरमात्रदर्शनाहं ते संवृत्ता।

---

मम संमतत्वादिति भावः। हा मालतीमयजीविते मम कल्याणसाधनैकसुखसकलव्यापारे। मत्परिणयनिष्पादनमेवैकं सुखं साध्यत्वेन फलं यस्य स तादृशः सकलो व्यापारो यस्या इति विग्रहः। भगवति कामन्दकि, चिरस्य ज्ञापितासि दुःखं स्नेहेन। मयि स्नेह एव तव दुःखहेतुर्जात इत्यर्थः। हा प्रियसखि लवङ्गिके, स्वप्नदर्शनमात्राहं ते संवृत्ता। **माधवः**। हन्तेति खेदे। सत्यं प्रियतमैव वधार्थमानीता केनचिदिति मज्जीविततरोर्मूले कुठारोऽनर्थाय व्यापारित इति भावः। 'हन्तेति हर्षे' इति व्याख्यानमसंगतम्। जीवितसर्वस्वभूतायास्तस्या वध्यशूलारोपणसमये कोऽत्र हर्षस्यावकाशः। न च प्रिया मया मोचयिष्यत इति निश्चयस्तु तदानीमस्ति जीवनस्यैव संदिग्धत्वादत एवाह—अपि नाम जीवन्तीं संभावयेयमिति। सर्वथा तन्मरणेनापि ममापि प्राणत्यागो निश्चितः। तथापि जीवन्तीमेव तां संदर्शनसंभाषणरक्षणप्रयत्नव्यापारैर्यदि संभावयामि तदा जीवितसाफल्यं स्यादित्याशंसा। अपि नामेति निपाताभ्यामपि संभावनौत्सुक्यं द्योत्यते। यच्चात्र निपातसमुदायस्यावधारणपरत्वमुक्त्वा जीवन्तीमेवैनां संभावयेयमिति जीवन्त्येव वर्तत इति व्याख्यानम्, तदपि प्रकृताननुगुणत्वाद्धेयम्। नहीदानीमपि तस्या जीवनं निश्चितं तन्निश्चये वा संभावयेयमित्याशंसायां लिङ्शब्दः कथं घटत इत्यलम्॥ **कापालिकौ**। कपालकुण्डलाघोरघण्टौ। 'पुमान्स्त्रिया' इत्येकशेषः। **देवीत्यादि**। रक्तोपहारं पुरतः संनिधाप्य स्तुतिनमस्कारपूर्वकं निवेदयेदिति देव्याः स्तुतिः क्रियते—**सावष्टम्भेति**। सावष्टम्भः सावलेपो यो निशुम्भः पादघातलक्षणपरिभवस्तत्संभ्रमेण। 'निशुम्भनिर्भर—' इति पाठे निशुम्भेन निर्भरमतिमात्रं नमद्भूगोलं भुवः संस्थानं तेन यन्निष्पीडनमतिभारत्वेन दुर्वहतया वहनशक्त्यवसादनं तेन न्यञ्चन्नवनमन्कर्परः पृष्ठास्थिकटाहो यस्य तादृशस्य कूर्मस्य पृष्ठाद्विगलन्ती तत्कम्पेन संसमाना ब्रह्माण्डखण्डस्य स्थितिर्यस्मिन्क्रीडिते तत्तथा। पातालस्य प्रतिमल्लयोः

अपि च ।

प्रचलितकरिकृत्तिपर्यन्तचञ्चन्नखाघातभिन्नेन्दुनिष्यन्दमानामृतश्च्योतजीवत्कपालावलीमुक्तचण्डाट्टहासत्रसद्भूरिभूतप्रवृत्तस्तुति ।
श्वसदसितभुजङ्गभोगाङ्गदग्रन्थिनिष्पीडनोत्फुल्लफुल्लत्फणापीठनिर्यद्विषज्योतिरुज्जृम्भणोड्डामरव्यस्तविस्तारिदोःखण्डपर्यासितक्ष्माधरम् ॥
ज्वलदनलपिशङ्गनेत्रच्छटाभारभीमोत्तमाङ्गभ्रमिप्रस्तुतालातचक्रक्रियास्यूतदिग्भागमुत्तुङ्गखट्वाङ्गशृङ्गध्वजोद्धूतिविक्षिप्ततारागणम् ।
प्रमुदितकटपूतनोत्तालवेतालतालस्फुटत्कर्णसंभ्रान्तगौरीघनाश्लेषहृष्यन्मनस्त्र्यम्बकानन्दि वस्ताण्डवं देवि भूयादरिष्ट्यै च हृष्ट्यै च नः ॥ २३ ॥ (इत्यभिनयतः ।)

---

प्रतिभटयोः । अधोभुवनकुहरसदृशयोरित्यर्थः । गल्लविवरयोः । कपोलसुषिरयोः प्रक्षिप्ताः सप्तार्णवा यत्र तत्तादृशम् । नन्दितस्य संतोषितस्य नीलकण्ठस्य भूतनाथस्य परिषदि व्यक्तं प्रसिद्धं तव क्रीडितं लास्यात्मकं विलासं वन्दे । अत्रापि विकटबन्धोचितरसाभावेऽपि वाच्यार्थौचित्यानुगुणा परुषवृत्तिरिति न प्रतिकूलवर्णत्वाख्यो दोषः शङ्कनीयः । एवमुत्तरत्रापि द्रष्टव्यम् । यद्यपि गल्लपदं केवलं लौकिकसंकेतसिद्धत्वाद्ग्राम्यमित्युक्तम् तथापि पाषण्डोक्तौ गुणत्वमेव ग्राम्यस्य न दोषत्वम् । यदाह— 'अधमप्रकृत्युक्तिषु ग्राम्यत्वं गुणः' इति ॥ २२ ॥ **प्रचलितेति** । भो देवि, व इति पूजायां बहुवचनम् । ताण्डवं नोऽस्माकमरिष्ट्या अशुभाभावाय हृष्ट्यै हर्षाय च भूयादित्याशीर्वचनम् । कीदृक्ताण्डवम् । प्रचलिताङ्गविक्षेपसंभ्रमवशाद्विक्षिप्ता ग्रोत्तरीयभूता करिकृत्तिर्गजचर्म तत्पर्यन्तेषु चञ्चन्तश्चञ्चला ये नखास्तेषामाघातेन भिन्नाद्विदीर्णादिन्दोर्निष्यन्दमानस्य स्रवतोऽमृतस्य श्च्योतेन क्षरणेन जीवतां लब्धजीवानां कपालानां मौलिमाल्यग्रथितानामावल्या पङ्क्त्या मुक्तैश्चण्डाट्टहासैस्त्रसद्भ्यो बिभ्यद्भ्यो भूरिभ्यो भूतेभ्यः प्रवृत्ता स्तुतिर्यस्य तत्तादृशम् । तथा श्वसतामतिखेदात्फूत्कुर्वतामसितभुजङ्गानां कृष्णसर्पाणां भोगा एवाङ्गदग्रन्थयः केयूरग्रन्थयः केयूरबन्धनानि तेषां निष्पीडनेनोत्फुल्ला विशालाः फुल्लन्त्यो विकसन्त्यो याः फणास्तासां पीठात् । कण्ठादिति यावत् । निर्यतो निर्गच्छतो विषज्योतिष उज्जृम्भणोड्डामराणां भयंकराणां व्यस्तानां विक्षिप्तानां विस्तारिणां प्रसारितानां दोष्णां खण्डेन सङ्घेन पर्यासिताः परितो विक्षिप्ताः क्ष्माधरा यस्मिंस्तत् । तथा ज्वलतानलेन पिशङ्गानां नेत्रच्छटानां नयनरश्मिप्रवाहाणां भारेण भीमं भीषणं यदुत्तमाङ्गं शिरस्तस्य भ्रमिर्भ्रमणं तेन प्रस्तुता प्रवृत्ता यालातचक्रस्य क्रिया । प्रदीप्तं काष्ठं वेगेन भ्राम्यमाणं चक्रवदाभाति तदलातचक्रमित्युच्यते । तस्यां स्यूत इव स्यूतो दिग्भागो दिक्चक्रं यत्र तत् । तथोत्तुङ्गस्य खट्वाङ्गस्य शृङ्गं शिखरमेव

**माधवः**—(विलोक्य ।) हा धिक् प्रमादम् ।

न्यस्तालक्तकरक्तमाल्यवसना पाषण्डचण्डालयोः
पापारम्भवतोर्मृगीव वृकयोर्भीरुर्गता गोचरम् ।
सेयं भूरिवसोर्वसोरिव सुता मृत्योर्मुखे वर्तते
हा धिक्कष्टमनिष्टमस्तकरुणः कोऽयं विधेः प्रक्रमः ॥ २४ ॥

**कपालकुण्डला**—

तं भद्रे स्मर दयितोऽत्र यस्तवाभू-
दद्य त्वां त्वरयति दारुणः कृतान्तः ।

**मालती**—हा देव्व माहव, परलोअगदो वि तुह्मेहिं सुमरिदव्वो अअं जणो । ण हु सो उवरदो जस्स वल्लहो सुमरेदि ।

---

१. हा देव माधव, परलोकगतोऽपि युष्माभिः स्मर्तव्योऽयं जनः । न खलु स उपरतो यस्य वल्लभः स्मरति ।

---

ध्वजस्तस्योद्धूतिभिरुद्धूननैर्विक्षिप्ता विशीर्णास्तारागणा यत्र तत् । तथा प्रमुदितानां कटपूतनानां पिशाचविशेषाणामुत्तालानां प्रचण्डानां वेतालानां भेतालानां च तालैः करतलद्वयास्फालनैः स्फुटत्कर्णा विदलच्छ्रवणकुहरा अत एव संभ्रान्ता या गौरी तस्या घनाश्लेषेण गाढालिङ्गनेन हृष्यन्मनसस्त्र्यम्बकस्यानन्दोऽत्रास्तीति तत्तादृशमिति दण्डकः । 'नौ रः' इति वचनात् ॥ २३ ॥ **माधवः** । मालतीमेव वधार्थमानीतां दृष्ट्वा हा धिगिति । प्रमादं पित्रोः कामन्दक्यादीनां चानवधानतां धिक् । यदियमनेन नृशंसेन कैरप्यनालक्षिता वधार्थमानीता वध्यवेषभूषिता चेति भावः । तदेवाह—**न्यस्तेति** । न्यस्तमनुलिप्तमलक्तकं यस्याः सा चासौ रक्तमाल्यवसना च पापानां पापकारिणामारम्भो मारणं कर्मानयोरस्तीति तद्वतोः । पाषण्डौ बौद्धावेव चण्डालौ । चण्डालकर्मकारित्वात्तत्सहकारित्वाच्च । तयोः । 'पुमान्स्त्रिया' इत्येकशेषः । वृकयोर्व्याघ्रादिक्रूरसत्त्वयोर्मृगी हरिणीव गोचरं विषयं गता । भीरुः स्वभावेनैव । वसोरिवाष्टवसुष्वन्यतमसदृशस्य । यद्वा वसोरग्नेरिव पराक्रमसंपन्नस्य देवतुल्यस्यापि भूरिवसोरमात्यस्य सुता मृत्योर्मुखे वर्तते । हा खेदे । धिगिति । ममेतः परं जीविताशामिति शेषः । कष्टमिदमनिष्टमापतितम् । अस्तकरुणः कृपाहीनो विधेः प्रक्रम आरम्भः कोऽयम् । कथमत्यन्तानुचितमेवारब्धं दैवहतकेनेत्यर्थः । हा धिक्कष्टमनिष्टमिति पदानामतीवार्थभेदाभावेऽप्यनुकम्पातिशयद्योतनार्थत्वान्न पौनरुक्त्यशङ्केति ध्येयम् । यदाह—'अनुकम्पाद्यतिशये यदि कश्चिन्निबध्यते । न दोषः पुनरुक्त्यादौ प्रत्युतेयमलंक्रिया ॥' इति ॥२४॥ **कपालकुण्डला—तं भद्र इति** । अत्र मरणसमये यस्तव दयितोऽभीष्टो देवोऽभूत्तं स्मर । मरणदशायामिष्टदेवतास्मरणममुत्राभ्युदयायेत्यागमः । अद्येति । मृत्युः संनिहित इत्यर्थः ॥ **मालती** । हा देव माधव, परलोकगतोऽपि स्मर्तव्योऽयं

**कपालकुण्डला**—हन्त, माधवानुरक्तेयं तपस्विनी ।

**अघोरघण्टः**—(शस्त्रमुद्यम्य ।)

चामुण्डे भगवति मन्त्रसाधनादा-
वुद्दिष्टामुपनिहितां भजस्व पूजाम् ॥ २५ ॥

**माधवः**—(सहसोपसृत्य खड्गं प्रकोष्ठेन विक्षिप्य ।) आः कापालिकापसद दुरात्मन्, अपेहि । प्रतिहतोऽसि ।

**मालती**—(सहसावलोक्य ।) परित्ताअदु[1] महाभाओ । (इति माधवमालिङ्गति ।)

**माधवः**—महाभागे, न भेतव्यम् ।

मरणसमये त्यक्ताशङ्कं प्रलापनिरर्गल-
प्रकटितनिजस्नेहः सोऽयं सखा पुर एव ते ।
सुतनु विसृजोत्कम्पं संप्रत्यसाविह पाप्मनः
फलमनुभवत्युग्रं पापः प्रतीपविपाकिनः ॥ २६ ॥

---

१. परित्रायतां महाभागः ।

---

जनो युष्माभिः । देवेत्यनेन त्वमेव ममेष्टदेवतास्वरूपः । तन्मरणदशायामपि त्वामेव स्मरिष्यामि । जन्मान्तरे वा त्वत्समागमो मे भूयादिति भावः । न खलु स उपरतो यस्य वल्लभो जनः स्मरति । यस्येतीयं कर्मणि षष्ठी । प्रियतमस्मृतिगोचरस्य जनस्य निरन्तरं तन्मनसि स्थित्या नोपरतिरित्यर्थः ॥ हन्तेति विषादे । तपस्विन्यनुकम्पार्हा । इयं माधवेऽनुरक्ता सती । तदिदानीं सोऽत्रैव महामांसस्य विक्रयार्थं पर्यटति । दैवादागत्य मोचयेद्वा तदा कष्टं मन्त्रसाधनप्रत्यूहः संभावित इति विषादः ॥ 'तं भद्रे' इति श्लोकस्योत्तरार्धम्—**चामुण्डे भगवतीति** । मन्त्रसाधनस्यादावुपक्रमसमय उद्दिष्टां संकल्पितामिदानीं तत्पर्यवसाने उपनिहितां समर्पितां पूजां स्त्रीरत्नोपहारं भजस्वेति ॥ २५ ॥ **माधवः** । खड्गं कापालिकस्योद्यतं प्रकोष्ठेन मणिबन्धेन विक्षिप्यापसार्य । अपेह्यपसर । प्रतिहतोऽसि वैपरीत्येन त्वमेव हतोसि । **मालती** । परित्रायतां महाभागः ॥ **माधवः** । **मरणसमय इति** । त्यक्ता शङ्का यस्मिन्कर्मणि तत्तथा प्रलापेऽनर्थकवचोजल्पने इदानीमेवैनं संहरिष्यामीत्येवंरूपे निरर्गलो निष्प्रतिरोधः । महानुभावाः खलूपकारं कुर्वन्त्येव न तु वचनपूर्वकं कुर्वन्तीति वचनस्यानर्थक्यम् । यद्यप्येवं करिष्यामीति न वक्तव्यं केवलं कर्तव्यमेव, तथापीदृश्यां दुर्दशायां प्रियायाः प्राणत्राणेन मज्जन्मनोऽतीव साफल्यमासादितमिति हर्षभरवशेन मनस्यवधारितत्वाल्लाघवशङ्कामपि विसृज्यानर्थकमेव किंचित्प्रलपितमिति भावः । तथा प्रकटितो निजः सहजः स्नेहो येन सोऽयं ते सखा पुरत एव वर्तते । अतः सुतनु, उत्कम्पं भयनिमित्तं वेपथुं विसृज ।

**अघोरघण्टः**—आः, क एष पापोऽस्माकमन्तरायः संवृत्तः ।

**कपालकुण्डला**—भगवन्, स एवास्याः स्नेहभूमिः कामन्दकीसुहृत्पुत्रो महामांसस्य पणयिता माधवः ।

**माधवः**—(सास्रम् ।) महाभागे, किमेतत् ।

**मालती**—(चिरादाश्वस्य ।) महाभाअ[1], अहं विं ण आणामि । एत्तिअं जाणामि । उवरिअलिन्दं एव्व पसुत्ता इह पडिबुद्धह्मि । तुह्मे उण कहिं ।

**माधवः**—(सलज्जम् ।)

त्वत्पाणिपङ्कजपरिग्रहधन्यजन्मा
भूयासमित्यभिनिवेशकदर्थ्यमानः ।
भ्राम्यन्नृमांसपणनाय परेतभूमा-
वाकर्ण्य भीरु रुदितानि तवागतोऽस्मि ॥ २७ ॥

---

१. महाभाग, अहमपि न जानामि । एतावज्जानामि । उपर्यलिन्दमेव प्रसुप्तेह प्रतिबुद्धास्मि । यूयं पुनः क्व ।

---

संप्रत्येवासौ पापः पापकारीहैव तवैव पुरतः प्रतीपं विपरीतं यथा तथा विपाकः फलारम्भो यस्य तादृशस्य पाप्मनः फलमनुभवति । त्वद्वधोद्यमेनायं स्वयमेव हत इत्यर्थः ॥ २६ ॥ **अघोरघण्टः** । अन्तरायः प्रत्यूहः । **कपालकुण्डला** । अस्याः स्नेहस्य भूमिरेकालम्बनमित्यनेनावश्यं रक्षणीयेयमिति सूचितम् । कामन्दकीसुहृत्पुत्र इत्यनेन महायोगिन्यास्तस्याः प्रसादादस्मिन्नास्माकं मणिमन्त्रमायादिकं प्रभवतीति सूचितम् । महामांसस्य पणयितेत्यनेनातिशूरत्वान्न पौरुषेणाप्यसौ साध्य इति दर्शयति । **माधवः—सास्रमिति** । आनन्दविषादाभ्यां सास्रत्वम् । किमेतत् । तत्कथमसावनर्थोपनिपात इत्यर्थः ॥ **मालती** । महाभाग, अहमपि न जानामि एतावज्जानामि उपर्यलिन्दमेव प्रसुप्तेव प्रतिबुद्धास्मि । यूयं पुनः क्व । समागता इति शेषः ॥ **माधवः—सलज्जमिति** । स्वस्यानुचितं स्वेनाचरितं कर्म नृमांसविक्रयरूपं निवेदनीयं जातमिति लज्जाहेतुः । त्वत्प्राप्तिप्रत्याशयानुचितमपि कृतमिति धार्ष्ट्यमवलम्ब्याह—**त्वदिति** । त्वत्पाणिपङ्कजपरिग्रहेण धन्यजन्मा भूयासमित्यनेनाभिनिवेशेनाभिषङ्गेण कदर्थ्यमानो धैर्यमपसार्य चापलापादनेन वितथीक्रियमाणोऽहं नृमांसपणनाय विक्रयाय परेतभूमौ श्मशाने भ्राम्यन्, हे भीरु, तव रुदितान्याकर्ण्य समागतोऽस्मीति । बिभेतेस्ताच्छील्ये 'भियः कुक्लुकनौ' इति क्रुः । 'ऊङुतः' इत्युकारान्तान्मनुष्यजातिवाचिन ऊङ् । ततः 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वः । भीरुशब्दस्य नियमेन स्त्रीवाचित्वाद्रूढ्या

**मालती**—(अपवार्य।) [1]कहं मम कालणादो एव्व एदं अप्पणिरपेक्खं परिब्भमन्दि।

**माधवः**—अहो नु खलु भोः, तदेतत्काकतालीयं नाम। संप्रति हि

राहोश्चन्द्रकलामिवाननचरीं दैवात्समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम्।

---

१. कथं मम कारणादेवैत आत्मनिरपेक्षं परिभ्रमन्ति।

---

मनुष्यजातिवाचित्वम्। संज्ञायामिति वा ऊङ्प्रत्ययः॥ २७॥ **मालती—अपवार्येति**। 'अपवारितकं कार्यं त्रिपताकेन पाणिना' इत्युक्तव्रीडाहर्षातिशयगोपनात्मकस्य व्यभिचारिणोऽनुभावोऽपवारणम्। कथं मम कारणादेवैत आत्मनिरपेक्षं परिक्रामन्ति। मम स्त्रीमात्रस्यैव कृते महत्कार्यमुद्दिश्य कर्तुमात्मनिरपेक्षमेतत्कर्म कथमनेनारब्धम्। तदत्राहमेवापराधिनी या साहसेनापि नैनं समागतेत्यहो मे दारुणं चित्तमिति भावः॥ **माधवः**। अहो नु खलु भोः। एतद्व्याख्यातं प्राक्। **तदेतदिति**। तदेतत्प्रियाया दर्शनं काकतालीयं नाम। दैवात्काकागमनसमये तालफलपतनसदृशमित्यर्थः। स्वरूपसिद्धिस्तु 'इवे प्रतिकृतौ' इतीवार्थप्रकरणे 'कुशाग्राच्छः' इत्यतश्छ इत्यनुवर्तमाने 'समासाच्च तद्विषयात्' इति तच्छब्देनेवार्थः परामृश्यते। इवार्थविषयात्समासादिवार्थे छो भवतीति सूत्रार्थः। ननु समासेनैव तद्विषयेणेवार्थाभिधानात्किं प्रत्ययेनेति चेन्मैवम्। समासविषयादिवार्थादन्यस्मिन्निवार्थे प्रत्ययोत्पत्तिः। तथा हि यादृच्छिकं काकागमनं तालपतनं च। तेन पतता तालेन काकवधः कृतः। माधवस्य यदृच्छया तत्रागमनम्, मालत्या अपि तत्र तथैवागमनं च काकागमनतालपतनमिवेति विगृह्यास्मादेव वचनाज्ज्ञापकात्समासः। वृत्तिविषये च काकतालशब्दावागमनपतनक्रियावाचिनौ भवतः। ततः काकतालशब्दात्पतता तालफलेन काकवधसदृशं यदृच्छागतेन माधवेन कापालिकं हत्वा प्रियारक्षणमस्मिन्निवार्थे च्छः। काकतालीयमिवातर्कितोपनतं चित्रकरणमिति शब्दार्थः। सुप्सुपेति समासः। अन्यस्य विशेषविधानस्य चाभावात्तस्य चैवंविधा गतिरनेकविषयत्वादित्यलम्। संप्रतीत्युपस्कारः। **राहोरिति**। राहोरानने चरतीत्याननचरी। ताम्। तन्मुखान्तर्गतामित्यर्थः। 'चरेष्टः' इत्यधिकरण उपपदे टप्रत्ययः। टित्त्वान्ङीप्। तादृशीं चन्द्रकलामिव प्रेयसीम्। प्रियशब्दात् 'द्विवचनविभज्योपपदे तरबीयसुनौ' इतीयसुन्। तस्मिन्परतः 'प्रियस्थिर-' इत्यादिना प्रियशब्दस्य प्रेत्यादेशः। 'उगितश्च' इति ङीप्। दैवाद्यदृच्छया समासाद्य प्राप्य दस्योश्चोरस्यास्य कापालिकापसदस्य कृपाणपातविषयात्तत्खड्गपतनगोचरादाच्छिन्दतः प्रसह्यापहरतो मे मम चेत आतङ्कात्कथमियं राहोरिवातिक्रूरस्य दस्योः कृपाणपातविषयमिन्दुकलेव सौकुमार्यातिशयशालिनी प्रियतमा प्राप्ता। यदि मम क्षणमात्रमितः

आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मया-
त्क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्तते ॥ २८ ॥

परं विलम्बोऽभविष्यत्, महाननर्थ आपत्स्यत इत्येवंरूपाद्भयानकरसस्थायीभावात् 'भयं चित्तस्य वैक्लव्यं रौद्रसंजनितं विदुः' इत्युक्तलक्षणाद्भयाद्विकलमितिकर्तव्यतामूढम्। तथा करुणया क्षणव्यवधानेऽपि परासुरेवेयं तन्मृतैव पुनरुत्पन्नेत्येवं प्रियायास्तादृगवस्थाविभावनाजनितया करुणया शोकरसस्थायीभूतया द्रुतं विलीनम्। तथा विस्मयादहो दैवविलसितस्याचिन्त्यमहिमत्वं यदद्यैव महामांसविक्रयार्थमागमनं तत्रैव काकतालीयन्यायेनेहागमनं प्रियासंप्राप्तिरिति महदिदं चित्रमित्येवंरूपादद्भुतरसस्थायिनः 'विस्मयश्चित्तविस्तारः पदार्थातिशयादिभिः' इत्युक्तलक्षणाद्विक्षोभितं जनिताद्भुतरसम्। तथा क्रोधेन कथमयं पापकारी निरपराधिनीं त्रिभुवनरत्नभूतामिमामपीदानीं हन्तुं समुद्यतः, तस्मादवश्यमेष हन्तव्य इत्येवंरूपाद्रौद्ररसस्थायिना 'प्रतिकूलेषु तैक्ष्ण्यस्य प्रकर्षः क्रोध इष्यते' इत्येवंलक्षणेन ज्वलितं रौद्ररसेनोद्दीपितम्। तथा मुदा मत्प्राणेभ्योऽपि गरीयसीं प्रियां परिरक्ष्य कृतार्थो भवामीत्यादिबहुप्रकारया रत्या मनःप्रसादरूपया प्रधानशृङ्गाररसस्थायिन्या विकसितं रसास्वादेन विस्तारमुपगतम्। कथं केन प्रकारेण वर्तते। कथंचिदेतादृशी दशास्येति निरूपयितुं न शक्यत इति भावः। अत्र च प्रबन्धप्रवृत्ता माधवस्य मालतीगोचरा रतिः प्रेयसीमिति निर्दिष्टेनालम्बनविभावेन विभाव्यमाना तदवलोकनादिभिरुद्दीपिता मनोविकासप्रियवचनतद्रक्षणव्यापारादिभिरनुभावैर्वाङ्मनःशरीरारम्भरूपैरनुभाव्यमाना तद्दर्शनजनितैर्मदश्रमहर्षचिन्तास्मृत्यादिभिर्व्यभिचारिभिरुपचिता रसतामापन्ना प्राधान्येन ध्वन्यते। तदङ्गतया तु राहोराननचरीं चन्द्रकलामिवेत्युपमासूचितभीषणाकारकापालिकालम्बनस्तत्स्वरूपविभावनोद्दीपित आतङ्कपदनिर्दिष्टभयस्थायी विकलपदसूचितमनोवैक्लव्यतदनुगुणशरीरवागारम्भानुभावस्तन्नियतकम्पशङ्कानिर्वेदग्लानिजाड्यदीनतावेगविषादोन्मादचिन्तामोहादिभिर्व्यभिचारिभिः प्रतीयमानैरुपचितो भयानकरसः। तथा दस्योः कृपाणपातविषयादिति सूचितमृतप्रायप्रियतमालम्बनस्तद्दुर्दशापरिभावनोद्दीपितः करुणयेति निर्दिष्टः शोकस्थायीभावो द्रुतमिति निर्दिष्टचित्तद्रवीभावतदुचितशरीरवागारम्भानुभवतन्नियताश्रुवैवर्ण्यवैस्वर्यजाड्यावेगमोहोन्मादविषादादिभिर्व्यभिचारिभिः प्रतीयमानैः परिपोषं गतः करुणरसश्च। तथा दैवादासाद्येति सूचितयादृच्छिकसमागमालम्बनतद्धेतुविधिवैचित्र्यपरिशीलनोद्दीपितो विस्मयादिति निर्दिष्टाद्भुतस्थायीभावो विक्षोभितमिति मनोविक्षोभतदुचितशरीरवागारम्भानुभावस्तन्नियतस्तम्भप्रलयस्वेदहर्षगर्वस्मृतिवितर्कविबोधचिन्तादिभिर्व्यभिचारिभिरुपचितोऽद्भुतरसश्च। तथाच्छिन्दत इति सूचितः प्रियावधोद्यतो हन्तव्य इत्यालम्बनस्तद्दौरात्म्यविमर्शनोद्दीपितो ज्वलितमिति मनोज्वलनतदुचितवागारम्भानुभावतन्नियतस्तम्भरोमाञ्चस्वेदहर्षावेगभ्रमोन्मादमदहर्षचापलासूयाश्रमामर्षादिभिर्व्यभिचारिभिः सर्वत्र कथं वर्तत इत्यनेन सूचितैरुपचितो रौद्ररसश्चेत्येते रसा अङ्गभावापत्त्यैव दूरतो

**अघोरघण्टः**—अरे ब्राह्मणडिम्भ,

व्याघ्राघ्रातमृगीकृपाकुलमृगन्यायेन हिंसारुचेः
पाप प्राण्युपहारकेतनजुषः प्राप्तोऽसि मे गोचरम् ।
सोऽहं प्राग्भवतैव भूतजननीमृघ्नोमि खड्गाहति-
व्यस्तस्कन्धकबन्धरन्ध्ररुधिरप्राग्भारनिष्यन्दिना ॥ २९ ॥

flood, a large quantity

**माधवः**—आः दुरात्मन्पाखण्डचण्डाल,

असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम् ।

---

निरस्तपरस्परविरोधाः प्रधानरसापेक्षयाऽविरोधाः । प्रधानरसपरिपोषापेक्षया न्यूनरसपरिपोषत्वेन श्लाघनीयौचित्यनिबन्धनाव्यतिकराख्यया शोभनाख्यया च मेलनगत्या श्रृङ्गारेण सह संकीर्यन्ते । यथाह—'समकालसमुत्पन्नैस्त्रिभिर्द्वाभ्यामथापि वा । रसश्चेद्व्यतिकीर्येत समव्यतिकरः स्मृतः ॥ विरोधे मित्रशत्रूणां रसानां संकरेऽपि च । महिम्ना शोभते स्वेन यः स शोभन ईरितः ॥' इत्यलमतिकथनेन ॥ २८ ॥ **अघोरघण्टः**। ब्राह्मणडिम्भ । विप्रत्वाच्छिशुत्वाच्च भीरुस्वभावतया पौरुषशून्येत्यर्थः । **व्याघ्राघ्रातेत्यादि** । व्याघ्रेणाघ्रातायां गृहीतायां मृग्यां हरिण्यां कृपाकुलः कृपालुर्यो मृगो हरिणस्तन्न्यायेन हिंसारुचेरनवरतहिंसापरस्य प्राणिनामुपहारस्य साधकैः क्रियमाणस्य केतनमास्थानं करालास्थानं तज्जुषः सेवमानस्य मे गोचरं विषयं प्राप्तोऽसि गतोऽसि । यथा मृग्यां दयालुर्मृगो व्याघ्रेण हन्यते,तथा त्वमप्यस्यां मयोपहारार्थमानीतायां दयालुर्मया वध्यस इति भावः । पापेति प्रारब्धकर्मप्रत्यूहकारित्वान्माधवस्य संबोधनम् । सोऽहं पूर्वं खड्गाहत्या व्यस्तस्कन्धं विक्षिप्तस्कन्धं यत्कबन्धं विगतशिरस्कं तस्य रन्ध्रेभ्यो रुधिरप्राग्भारं रक्तप्रवाहं निष्यन्दते वर्षतीति तथोक्तेन भवतैव भूतानां जननीं मातरं भद्रकालीमृघ्नोमि प्रीणयामि । पश्चादनयेति शेषः ॥ २९ ॥ **माधवः । असारमिति ।** अये दुरात्मन्पाखण्डचण्डाल, कथमेवं विधातुं व्यवसितोऽस्युद्युक्तोऽसि । किं विधातुमित्यपेक्षायामाह—संसारमाकीटमाविरञ्चं देवतिर्यङ्मनुष्यादिविविधविचित्रप्राणिवर्गस्य जननजीवनमरणतत्तद्देशकालोचितशरीरपरिग्रहतत्तच्छरीरानुरूपसुखदुःखाद्यनुभवादिव्यापारप्रवाहाद्यविच्छेदेन संतन्यमानं प्रपञ्चमसारं परार्ध्यवस्तुशून्यं कर्तुं कथं व्यवसितवानसीति सर्वत्र संबध्यते । अयं हि संसारः सत्स्वपि चन्दनचामीकरादिषु पदार्थेषु तैर्न सारवान्, किंत्वनयैव सारभूतया, अस्यां च त्वया निहतायां केवलमृजीषकल्पोऽयं निःसार एव स्यात् । तदिमां हन्तुमुद्यतस्त्वं संसारमेवासारं कर्तुमुद्यतोऽसीत्यर्थः । अत्र विषयनिगरणेन मालत्यां सकलसंसारैकसारवस्तुत्वस्याध्यवसितत्वात् 'निगीर्याध्यवसानं तत्प्रकृतस्य परेण यत्' इत्युक्तलक्षणाध्यवसितप्रयत्नातिशयोक्तिः, सिद्धवन्निर्दिष्टाया

अदर्पे कंदर्पे जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥ ३० ॥

व्यवसायक्रियायाः सर्वत्रान्वयात्क्रियादीपकं च वाच्यालंकारौ । चन्दनचामीकरादीनां न वस्तुतः सारत्वम्, किंतु पामरजनप्रसिद्ध्यैव । इयमेव सारभूतेत्यपह्नवः, सर्वसारवस्तूपमानानि यानि तेभ्योऽपि सारभूतेयमेवेति व्यतिरेकश्च व्यङ्ग्याविति सर्वत्र द्रष्टव्यम् । तथा त्रिभुवनं त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । 'पात्रादिभ्यः प्रतिषेधो वक्तव्यः' इति वचनात् 'द्विगोः' इति ङीन्न भवति । परिमुषितं लुण्ठितं रत्नं यस्य तत्कर्तुम् । सत्स्वपि कौस्तुभकनकादिषु न तै रत्नवत्त्रिभुवनम् । न च तानि वस्तुतो रत्नानि । अविवेकिनां तु तत्र रत्नत्वव्यपदेशः समीचीनवस्तूपमानत्वप्रसिद्धिश्च । इयमेव त्रिभुवनस्य सकलरत्नातिशायिगुणशालिन्येकं रत्नमिति निगीर्याध्यवसानम् । तां हन्तुं प्रवृत्तः रत्नशून्यमेव जगत्कर्तुं प्रवृत्तोऽसीत्यर्थः । अलंकारयोगः पूर्ववत् । तथा लोकं प्रमाणषट्कपथपथिकं प्रपञ्चं निरालोकं प्रकाशशून्यं केवलमन्धकाराक्रान्तं कर्तुम् । न खलु सौरादिभिरालोकैः सालोकोऽयं लोकः । तेषां जडरूपाणां प्रकाशान्तरप्रकाश्यत्वेनाभासत्वात् । अनयैव पुनरानन्दैकरससंविन्मयप्रकाशात्मिकया त्रिभुवनभवनलोकोत्तररत्नप्रदीपकलिकया समुद्भासितोऽयं ससूर्यचन्द्रादितेजस्को लोकः । तदिमां निर्वापयितुकामः । जगदन्धं कर्तुकामोऽसीत्यर्थः । तथा बान्धवजनं सकलमपि बन्धुवर्गमेतदेकजीवितं मरणमेव शरणमेतद्विपत्तिजनितशोकनिराकरणसमर्थं यस्य तत्तादृशं कर्तुम् । इदं चावान्तरवाक्यं सहचरभिन्नम् । इह हि महावाक्यरूपे श्लोकोऽसारं संसारमित्यादिभिरवान्तरवाक्यैर्मालत्याः सकललोकातिशायिलावण्यादिगुणशालित्वेन सर्वपदार्थोत्कर्षित्वं तदन्वयव्यतिरेकाभ्यामेव लोकस्योपादेयत्वान्वयव्यतिरेकौ चेत्येतावद्भङ्गिवैचित्र्येण प्रौढोक्तियुक्त्या च निरूप्यते । तत्र चानेन वाक्येन मालत्या उत्कर्षो न प्रतिपाद्यते । बान्धवा हि काणकुब्जदुःशीलापत्यनाशेऽपि मरणशरणा भवन्ति न च तदन्वयाल्लोकस्योपादेयता कदाचित् । नापि तद्व्यतिरेकादनुपादेयत्वम् । बहुतरश्रेष्ठवस्तुप्रचुरत्वादेव तदुपादानसिद्धेः । ततश्चात्युत्कर्षप्रतिपादकवाक्यमध्ये तद्विजातीयतया सहचरैर्भिन्नं तन्निकृष्टत्वाद्विरुद्धमिदं वाक्यं षाण्मासिकमुक्ताफलग्रथितहारलतामध्ये वराटिकेव नायकत्वेन निवेशनं नार्हति प्रक्रमभङ्गश्च स्यात् । प्रक्रान्तातिशयोक्त्याद्यलंकाराणामुपर्युपरि निबद्धानामकाण्डे विच्छेदात् । केचित्तु जनमित्युदासीनवाचिना जनशब्देन माधवः प्रेयसीविनाशदुःखोत्तरणोपायान्तरमपश्यन्तं मरणमेव तदुपायत्वेनाधिगच्छन्तमात्मानं निर्दिशति । तेन तन्नाशे स्वस्य मरणमेवेति तल्लावण्यातिशयप्रकाशनान्नोक्तदोष इति व्याचक्षते । तदसत् । बान्धवजनमित्युक्ते स्वनिर्देशस्य कथंचिदप्यप्रतीतेः प्रतीतौ वा नैतावता तस्या उत्कर्षः । सर्वो रागान्धः स्वहृदयाभिमतमेव वस्त्वधमभूतमपि सर्वलोकोत्तरमित्यभिमन्यते । तथा हि—'या यस्याभिमता लोके सा तस्याधिकरूपिणी' इति । अत एव चक्रवाकोऽपि स्वप्रियाविरहे जगदेव शू-

अपि च । रे रे पाप,

प्रणयसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ ३१ ॥

---

न्यमाकलयंस्तानेव लोकोत्तरसौन्दर्यशालिनीं मन्यत इति तिर्यक्ष्वपि प्रसिद्धम् । न चात्रापि माधवाभिमानमात्रसिद्धमेव तस्या लोकोत्तरत्वमिति वाच्यम् मा भूत् प्रबन्धरसास्वादयितॄणां सहृदयानामन्यथाभावप्रतीत्यानौचित्यस्फुरणाद्रसास्वादभङ्गः । न च स्वाभिमानेन तस्याः श्लाघ्यत्वेऽपि न तावता तत्सत्त्वासत्त्वाभ्यां जगतोऽस्ति कश्चिद्विशेष इत्युपेक्षणीयमेवैतत् । अतो 'विधिविलसितं सर्वमफलम्' इति पठनीयमिति कुन्तकप्रभृतयः काव्यतत्त्वज्ञाः सहृदयाः । एवं हि नावद्यलेशोऽपि । अनादौ ह्यसारे संसारे मनोहरतरवस्तुसृष्टौ प्रवृत्तस्य विधेर्यो विलासो व्यापारो न तस्य चन्द्रादिनिर्माणं फलम् । तेषां तुच्छतया तादृशविधिप्रयासफलत्वायोगात् । अपि त्वियमेव तस्य फलमिति निगीर्याध्यवसानम् । तदेतत्फलमकाण्डे हन्तुमुद्युक्तस्त्वम् । विधातृव्यापारमेव निष्फलं कर्तुमुद्यत इत्यर्थः । तथा कन्दर्पमदर्पं दर्पशून्यं कर्तुम् । तस्य हि सत्स्वपि मन्दानिलचन्दनचन्द्रिकादिभावेषु न तानवलम्ब्य त्रिलोचनावधिकां त्रिलोकीमहं जेष्यामीति दर्पस्तेषां तत्सहकारशक्त्यभावात्, किं त्विमामेवाप्रतिहतां निजां शक्तिमवलम्ब्य न मे कश्चित्त्रिलोक्यां प्रतिभटोऽस्ति, अहमेक एव वीर इति तस्य दर्पः । तामिमां हन्तुकामः कन्दर्पमेव दर्पशून्यं निरुत्साहं कर्तुकामोऽसीत्यर्थः । तथा जनानां नयननिर्माणफलं फलहीनं कर्तुम् । निरतिशयसौन्दर्यशालिवस्तुदर्शनमेव हि नयननिर्माणस्य फलम् । न च वस्त्वन्तरदर्शनं फलं तस्य । एतादृशसौन्दर्यशालिनोऽन्यस्याभावात् । इयमेव लावण्यासारसीमा तस्य फलमिति तद्विनाशे नेत्रनिर्माणमेव वन्ध्यं स्यादित्यर्थः । तथा जगज्जीर्णजरच्छुष्ककण्टककोटरादिदुष्प्रेक्षवृक्षमरण्यं क्रूरसत्त्वराक्षसपुलिन्दादिभीषणं कान्तारं कर्तुम् । इदं हि जगद्वनमनयैव हि प्रमदवनवसन्तश्रियातिसुकुमारविविधतरुलताकुसुमवासनासुरभीकृतं सकलसंतापनिवारकमानन्दानुभवैकभूमिः प्रमदोद्यानमभूत् । न तु भावैरन्यैरनीदृशगुणगणोज्ज्वलैः । तदिमां कथावशेषितां कर्तुमिच्छता जगदिदमत्युद्वेगदायि भयंकरमरण्यमेव केवलं चिकीर्षितमित्यर्थः । अत्र चैकेन वाक्येनोत्कर्षप्रतिपादनात्तस्यैव वाक्यान्तरैरपि प्रतिपादनादार्थे पौनरुक्त्यमाशङ्क्य रसाक्षिप्तवक्त्रा तस्यैवार्थस्य प्रौढोक्तिवैचित्र्येण गम्भीरविशेषणोपादानान्न पौनरुक्त्यमिति भोजराजः परिजहार । यथाह—'विशेषणं तु पूर्वोक्तं यदि भूयोऽपि कीर्त्यते । तदेकार्थं रसाक्षिप्तं तत्तस्मात्तु न दूष्यते ॥' इति । छेकानुप्रासोऽत्र शब्दालंकारः । इत्यलमलंकारग्रन्थगौरवेण ॥ ३० ॥

**प्रणयेति** । प्रणयसखीनां प्रेमास्पदानामालीनां सलीलो यः परिहासः क्रीडाविशेषः कुसुमस्तबकप्रहारादिस्तत्र रसेन रागेणाधिगतैः स्वेच्छयैव लब्धैर्ललितैरतिसुकुमारैः

**अघोरघण्टः**—आः दुरात्मन्, प्रहर प्रहर। नन्वयं न भवसि।

**मालती**—[1]पसीद णाह साहसिअ, दारुणो क्खु अअं हदासो। ता परित्ताअसु मं। णिवत्तअदु इमादो अणत्थसंकटादो।

**कपालकुण्डला**—भगवन्, अप्रमत्तो भूत्वा दुरात्मानं व्यापादय।

1. **माधवाघोरघण्टौ**—(मालतीकपालकुण्डले प्रति।) अयि भीरु,

धैर्यं निधेहि हृदये हत एष पापः
किं वा कदाचिदपि केनचिदन्वभावि।
सारङ्गसंहतिविधाविभकुम्भकूट-
कुट्टाकपाणिकुलिशस्य हरेः प्रमादः॥ ३२॥

१. प्रसीद नाथ साहसिक, दारुणः खल्वयं हताशः। तत्परित्रायस्व माम्। निवर्ततामस्मादनर्थसंकटात्।

शिरीषकुसुमैर्हननैरपि किं पुनरन्येन कठिनद्रव्येण। यद्वपुस्ताम्यति सद्य एव म्लायते तत्र वपुषि वधाय शस्त्रमुपक्षिपतः पातयतस्तव शिरस्यकस्मादेव निपाती यमदण्डः कालदण्ड इवैष भुजो वामबाहुः पतत्विति समुद्दीपितक्रोधस्य माधवस्य रौद्ररसोचितो वागारम्भः॥३१॥ **अघोरघण्टः। प्रहर प्रहरेति**। पश्यामि तव पौरुषमित्युपहासगर्भोक्तिः। अयं न भवसीति माधवस्यैव संनिहितत्वेनोपचारात्पुरोवर्तित्वधर्मिप्राधान्येनेदंशब्देनोच्यते। अन्योन्यमन्योन्यवधस्य निष्पन्नप्रायतया निश्चितत्वाद्वर्तमानसामीप्येन लड्भयत्रापि॥ **मालती**। प्रसीद नाथ साहसिक, दारुणः खल्वयं हताशः। तत्परित्रायस्व माम्। निवर्ततामस्मादनर्थसंकटात्। न मम स्त्रीमात्रस्य कृते सकललोकमौलिना त्वया साहसमाचरणीयम्। यतोऽयं दारुणः किं कुर्याद्वा। तन्निवर्तस्वेति भावः॥ **कपालकुण्डला**। अप्रमत्तः सावधानः॥ माधवो मालतीमघोरघण्टश्च कपालकुण्डलामेकेनोभाभ्यां पाठ्येनोभयत्रापि तुल्यार्थेन श्लोकेन समाश्वासयन्तौ युगपदेवाहतुः—**माधवाघोरघण्टौ**। अयि भीरु, इति संबोधनमिदमुभयोरुभे प्रति। **धैर्यमिति**। हे भीरु स्त्रीस्वभावसुलभसाध्वसे, हृदये धैर्यं निधेहि, मा कातर्यं गमः। हत एष पाप इत्युभाभ्यामुभयोर्निर्देशः। हत एव। कथमत्रापि मम प्रमादमाशङ्कसे। पश्य कदाचित्केनचिद्वा सारङ्गसंहतिविधौ हरिणसंहरणकृत्य इभकुम्भानां कूटस्य सङ्घस्य कुट्टाकः कुट्टनशीलः। 'जल्पभिक्षकुट्टलुण्ठवृङः षाकन्' इति ताच्छील्ये षाकन्प्रत्ययः। पाणिकुलिशस्य पाणिरेव कुलिशं कुलिशमिव पाणिर्यस्य तादृशस्य हरेः प्रमादः किमन्वभावि। न केनचिदनुभूतमित्यर्थः। अत्र क्षुद्रविपक्षपथे मम प्रमादो न संभवतीति तदसंभवलक्षणे वाक्यार्थे हरिणपतेर्हरेः प्रमादासंभवलक्षणो वाक्यार्थोऽध्यारोप्यमाणः सारङ्गवधे सिंहस्य प्रमादसंभवेन ममाप्येतद्वधे प्रमादसंभावनेत्युपमानोपमेयभावं परिकल्पयतीति 'असंभवधर्मसंबन्ध उपमा परिकल्पिता' इत्युक्तलक्षणो निदर्शनालंकारः।

(नेपथ्ये कलकलः । सर्वे आकर्णयन्ति ।)

भो भो मालत्यन्वेषिणः, इयममात्यभूरिवसुमाश्वासयन्त्यप्रतिहतप्रज्ञाचक्षुर्भगवती कामन्दकी समादिशति, पर्यवष्टभ्यतामेतत्करालायतनम् ।

नाघोरघण्टादन्यस्मात्कर्मैतद्दारुणादभूत् ।
न करालोपहाराच्च फलमन्यद्विभाव्यते ॥ ३३ ॥

**कपालकुण्डला**—भगवन्, पर्यवष्टब्धाः स्मः ।

**अघोरघण्टः**—संप्रति विशेषतः पौरुषस्यावसरः ।

**मालती**—हा[1] ताद, हा भअवदि ।

**माधवः**—भवतु बान्धवसंस्थामेनां विधाय तत्समक्षमेनं व्यापादयामि । (मालतीमन्यतः प्रेषयन्परिक्रामति ।)

(माधवाघोरघण्टावन्योन्यमुद्दिश्य ।)

आः, रे रे पाप,

कठोरास्थिग्रन्थिव्यतिकरघणात्कारमुखरः
खरस्नायुच्छेदक्षणविहितवेगव्युपरमः ।

---

१. हा तात, हा भगवति ।

---

न चात्र श्लेषभ्रान्तिः कर्तव्या । वाक्यद्वयस्यैव युगपदुभाभ्यां पाठादिति ॥ ३२ ॥ कलकलः कोलाहलः । आश्वासयन्ती सुशकुनादिना दुःखं श्लथयन्ती । अप्रतिहताकुण्ठिता प्रज्ञैव चक्षुर्यस्याः सा भगवती कामन्दकी समादिशति समाज्ञापयति । किमिति । पर्यवष्टभ्यतां परिवेष्ट्यतामेतत्करालायतनम् । किमर्थमित्यत आह—**नेति** । दारुणाद्भीषणादघोरघण्टादन्यस्मात्तद्व्यतिरिक्तादेतन्मालत्यपहरणरूपं कर्म नाभूत् । नापि तदीयस्य कर्मणो मन्त्रसाधनार्थं करालोपहारीकरणादन्यच्चापि फलं विभाव्यते । तस्मात्तेनैव कपालकुण्डलयोपहारिता देवी बल्यर्थमिति तदेव स्थानं विमृश्यतामित्याज्ञापयति भगवतीत्यर्थः ॥३३॥ **कपालकुण्डला** । भगवन्, पर्यवष्टब्धाः परिवृता भटैः । किमतःपरं कर्तव्यमिति कातर्योक्तिः ॥ **अघोरघण्टः—संप्रतीति** । रक्षणार्थमागतानामेवाग्रत एनं व्यापादयिष्यामि । तन्न भेतव्यं लयेत्याश्वासनोक्तिः । **मालती** । हा तात, हा भगवति ॥ **माधवः** । बान्धवानां रक्षणार्थमागतानां समाजे समूहे सुखेन स्थितामेनां विधाय पश्चान्निश्चिन्त्येन यत्नात्तेषामेवाग्रतो हनिष्यामि । यथा एक एव मालतीप्राणत्राणनिमित्तमस्मत्पुरत एवासावेतं दुरात्मानं हत्वा महान्तमुपकारं कृतवानित्यमात्याय निवेद्य तस्य मदर्थं मालतीप्रदाने रुचिमुत्पादयेयुरिति भावः । एकमेव वाक्यमुभावुभयोद्देशेन प्रयुञ्जाते—**रे रे इति** । **कठोरेति** । कठोराः क-

निरातङ्कः पङ्केष्विव पिशितखण्डेषु निपत-
न्नसिर्गात्रं गात्रं सपदि लवशस्ते विकिरतु ॥ ३४ ॥

(इति निष्क्रान्ताः सर्वे ।)

**इति महाकविश्रीभवभूतिविरचिते मालतीमाधवे पञ्चमोऽङ्कः ।**

---

ठिना येऽस्थिग्रन्थयः कीकसकूटानि तैः सह व्यतिकरेण तदभिघातेन जनितो यो घणात्कारोऽनुकरणशब्दस्तेन मुखरः तथा खराणां स्नायूनां छेदेन क्षणमात्रं जनितो वेगस्य व्युपरमो विश्रान्तिर्यस्य सः । तथा पिशितखण्डेष्वस्थिस्नायुरहितेषु मांसखण्डेषु पङ्केष्विव निरातङ्को निष्प्रतिरोधो निपतन्नेवंविधोऽसिः सपदि ते गात्रं-गात्रं प्रत्यङ्गं लवशः खण्डशः कृत्वा विकिरतु दिक्षु विक्षिपतु । बीभत्सोपस्कृतो रौद्ररसो व्यज्यते ॥ ३४ ॥ प्रत्यक्षयुद्धवर्णनस्य निषिद्धत्वान्नोक्तम् । तत्फलमग्रे सूचयिष्यते। यदुक्तम्—'दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् । संरोधं भोजनं स्नानं सुरतं चानुलेपनम् ॥ अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ॥' इति ॥ ३४ ॥ युद्धार्थं निष्क्रान्ताः ॥

यथामति मयाख्यातो भवभूतेरिहाशयः ।
तत्सर्वार्थपरिज्ञाने समर्थास्तु सचेतसः ॥

**इति श्रीमद्भारद्वाजकुलतिलकपर्वतनाथयायजूकनन्दनत्रिपुरारिसूरिविरचितायां मालतीमाधवभावप्रदीपिकायां पञ्चमाङ्कविवरणम् ॥**

# षष्ठोऽङ्कः ।

(ततः प्रविशति कपालकुण्डला ।)

**कपालकुण्डला**—आः पाप दुरात्मन्, मालतीनिमित्तं विनिपातितास्मद्गुरो माधवहतक, अहं त्वया तस्मिन्नवसरे निर्दयं निघ्नत्यपि स्त्रीत्यवज्ञाता । (सक्रोधम् ।) तदवश्यमनुभविष्यसि कपालकुण्डलाकोपस्य फलम् ।

शान्तिः कुतस्तस्य भुजङ्गशत्रो-
र्यस्मिन्निबद्धानुशया सदैव ।
जागर्ति दंशाय निशातदंष्ट्रा-
कोटिर्विषोद्गारगुरुर्भुजङ्गी ॥ १ ॥

(नेपथ्ये ।)

भो राजानश्चरमवयसामाज्ञया संचरध्वं
कर्तव्येषु श्रवणसुभगं भूमिदेवाः पठन्तु ।

---

अनाहार्यगुणोदारामनागन्तुकभूषणाम् ।
अयत्नसिद्धसारस्यामाश्रये सहजां गिरम् ॥

कविरिदानीमङ्कान्तरमारभमाणो वृत्तवर्तिष्यमाणार्थसूचनायैकपात्रप्रयोज्यं शुद्धविष्कम्भाख्यमर्थोपक्षेपकं प्रस्तौति—**तत इत्यादि । कपालकुण्डला ।** मालतीनिमित्तं विनिपातितोऽस्मद्गुरुर्येन तादृशेति । तादृशेन संबोधनेन युद्धे माधवेनाघोरघण्टवधो, मालत्यर्थं हि त्वयास्मद्गुरुर्निहतस्तन्मालत्यपहरणेनैव प्रत्यपकरिष्यामीति कपालकुण्डलाभिप्रायश्च सूच्यते । तस्मिन्नवसरे युद्धसमये निर्दयं निघ्नती स्त्रीजातिप्रयुक्तं भीरुत्वं परित्यज्य गुरुवधकोपान्निष्करुणं प्रहरन्त्यहं त्वया स्त्रीत्यवज्ञातावधीरिता । तस्मादवश्यं मदवज्ञायाः फलमनुभविष्यसीति । अस्मद्गुरुवधपातकस्य मयि बद्धवैरायां जाग्रत्यां कुतः सुखमित्येव वाक्यार्थे तदवश्यमित्यादिवाक्योक्तिर्वाक्यार्थान्तरमसंभवद्वस्तुसंबन्धात्मकमुपमानोपमेयपरिकल्पितं निदर्शनालंकारच्छाययाध्यारोपयन्नाह—**शान्तिरिति ।** तस्य भुजङ्गशत्रोराशीविषस्य हन्तुः शान्तिः सौख्यं कुतः । यत्र यस्मिन्निबद्धानुशया दृढतरबद्धवैरातितीक्ष्णदंष्ट्राग्रा विषोद्गमनभीषणा भुजङ्गी दंशार्थं जागर्ति सावधाना वर्तते । तस्याः सौख्यासंभवात्तवापि सौख्यं न संभवतीति भावः ॥१॥ वर्तिष्यमाणं सूचयति—**भो राजान इति ।** हे राजानः सकलदिगन्तविश्रान्तशासनस्य महाराजस्य पादमूलसेवार्थमङ्गीकृतकिंकरभावाः सामन्तमहीपतयः, चरमवयसां दृष्टपरापरव्यवहाराणां वृद्धानामाज्ञया कर्तव्यविदामाज्ञया कर्तव्येषु प्रयोजनेषु संचर-

चित्रं नानावचननिवहैश्चेष्टयतां मङ्गलेभ्यः
प्रत्यासन्नस्त्वरयतितरां जन्ययात्राप्रवेशः ॥ २ ॥

यावच्च संबन्धिनो न परापतन्ति तावद्वत्सया मालत्या नगरदेवतागृहमविघ्नमङ्गलाय गम्यतामित्यादिशति भगवती कामन्दकी । अन्यच्च गृहीतसविशेषमण्डनः प्रतीक्ष्यतामानुयात्रिको जन इति ।

**कपालकुण्डला**—भवतु । इतो मालतीविवाहपरिकर्मसत्वरप्रतिहारजनसहस्रसंकुलात्प्रदेशादपक्रम्य माधवापकारं प्रत्यभिनिविष्टा भवामि । (इति निष्क्रान्ता ।)

इति शुद्धविष्कम्भः ।

**कलहंसः**—(प्रविश्य ।) [१]आणत्तोह्मि णअरदेव्वदागब्भघरवट्टिणा मअरन्दसणाहेण माहवेण जाणीहि दाव इदोमुहं प्पउत्ता मालदी ण वेत्ति । ता जाव णं आणन्दइस्सं ।

---

१. आज्ञप्तोऽस्मि नगरदेवतागर्भगृहवर्तिना मकरन्दसनाथेन माधवेन जानीहि तावदितोमुखं प्रवृत्ता मालती न वेति । तद्यावदेनमानन्दयिष्यामि ।

---

ध्वम् । विप्राश्च श्रुतेः श्रवणस्य सुभगं यथा स्यात्तथा पठन्तु । आशीर्वादमन्त्रानिति शेषः । नानावचननिवहैः संस्कृतप्राकृतादिनानाभाषाविशेषैः सहितं चित्रमाश्चर्यकारि गीतवाद्यनृत्तादिकं मङ्गलेभ्यो मङ्गलार्थम् । तादर्थ्ये चतुर्थी । चेष्टयतां व्याप्रियताम् । ततो जन्यानां वरसंबन्धिनां जनानाम् । 'जन्याः स्निग्धा वरस्य ये' इत्यमरः । यात्राया वरगृहाद्वधूगृहगमनक्रियायाः प्रवेशः प्राप्तिस्त्वरयति । त्वरां जनयतीत्यर्थः ॥ २ ॥ न परापतन्ति न समागच्छन्ति । गृहीतं सविशेषमण्डनं येन । सम्यगलंकृत इत्यर्थः । आनुयात्रिको मालत्या अनुचरो जनः प्रतीक्ष्यतां परिपाल्यताम् । शीघ्रमाहूयतामित्यर्थः । यद्वानुयात्रिको वरानुगामी तत्सुहृज्जनः । गृहीतं सविशेषमण्डनमाभरणवस्त्रादिकं यस्मात्स तादृशः प्रतीक्ष्यतामभ्युद्गमनादिना संभाव्यतामिति॥ **कपालकुण्डला—भवत्वित्यादि** । तेन नेदानीं मालत्यपहरणं शक्यमिति भावः । आकुलाज्जनसंमर्दान्माधवस्यापकारो मालत्यपहरणरूपस्तं प्रत्यभिनिविष्टा दृढतरप्रयत्ना भवामि । इति निष्क्रान्ता । इति शुद्धविष्कम्भः ॥ **कलहंसः** । आज्ञप्तोऽस्मि नगरदेवताया गर्भगृहवर्तिना मकरन्दसनाथेन माधवेन जानीहि तावदितोमुखं प्रवृत्ता मालती न वेति।तद्यावदेनमानन्दयिष्यामि । इतोमुखं प्रवृत्ता मालतीति प्रियनिवेदनेनेति शेषः।अनेन वाक्येन माधवमकरन्दयोः कृत्रिमपरिणयार्थं छद्मना नगरदेवतागर्भगृहे पूर्वमेव प्रविश्य निलीयावस्थानसूचनादभूताहरणं नाम गर्भ-

(ततः प्रविशतो माधवमकरन्दौ ।)

**माधवः**—

मालत्याः प्रथमावलोकनदिनादारभ्य विस्तारिणो
भूयः स्नेहविचेष्टितैर्मृगदृशो नीतस्य कोटिं पराम् ।
अद्यान्तः खलु सर्वथास्य मदनायासप्रबन्धस्य मे
कल्याणं विदधातु वा भगवतीनीतिर्विपर्येतु वा ॥ ३ ॥

**मकरन्दः**—कथं भगवत्याः सा मेधाशक्तिर्विपर्येष्यति ।

**कलहंसः**—(उपसृत्य ।) [1]णाह, दिट्ठिआ वड्ढसि । पउत्ता खु इदोमुहं मालदी ।

**माधवः**—अपि सत्यम् ।

**मकरन्दः**—किमश्रद्दधानः पृच्छसि । न केवलं प्रवृत्ता प्रत्यासन्ना च वर्तते । तथा हि ।

अस्माकमेकपद एव मरुद्विकीर्ण-
जीमूतजालरसितानुकृतिर्निनादः ।

---

१. नाथ, दिष्ट्या वर्धसे । प्रवृत्ता खल्वितोमुखं मालती ।

---

संध्यङ्गमुक्तम् । यथा—'अभूताहरणं तत्स्याद्वाक्यं यत्कपटाश्रयम्' इति । इदमेव तयोः प्रवेशकं च ॥ **माधवः—मालत्या इति** । मदनायासप्रबन्धस्य सरव्यथानुबन्धस्य सर्वथाद्य खल्वितो मालतीलाभान्यतरकोटिपरिच्छेदेन पर्यवसानं भविष्यतीत्येष तत्त्वार्थकीर्तनान्मार्गो नाम गर्भसंधेरङ्गमुक्तम् । यथा—'तत्त्वार्थकीर्तनं मार्गः' इति । कथमत्रान्यतरकोटिपरिच्छेद इत्यपेक्षायां भगवतीप्रयुक्तोपायसिद्ध्यसिद्धिभ्यामित्याह—भगवत्याः कामन्दक्या नीतिः कृत्रिमविवाहरूप उपाये कल्याणं मालतीपाणिग्रहणरूपं वा विदधातु । तथा सति तत्प्राप्त्यैव मदनायासस्यान्तो भविष्यति । अथवा मद्भाग्यवैकल्याद्विपर्येतु विपरीता भवतु । तथापि प्रयुक्तोपायभङ्गादुपायान्तराभावाच्च तदलाभनिश्चये ध्रुवं मम विपत्तिरित्याश्रयान्तराभावादेव मदनायासस्यान्तो भविष्यतीत्यर्थः । कीदृशस्य मदनायासस्येत्यपेक्षायां तावदाह—मालत्याः प्रथमदर्शनक्षणादारभ्य विस्तारिणः प्रवर्धमानस्य । तथा मृगदृशस्तस्याः स्नेहसूचकैर्विचेष्टितैः साभिप्रायावलोकनादिभिः परां निरतिशयां कोटिं प्रकृष्टतां नीतस्येति योज्यम् । एषा प्राप्त्याशा नाम तृतीया कार्यावस्था । यथा—'उपायापायचिन्ताभ्यां प्राप्त्याशा प्राप्तिसंभवः' इति ॥ ३ ॥ **मकरन्दः** । विपर्येष्यति विपरीता भविष्यति ॥ **कलहंसः** । नाथ, दिष्ट्या, वर्धसे । प्रवृत्ता खल्वितोमुखं मालती । **माधवः** । अपिसत्यं किं सत्यमितोमुखं प्रवृत्तेत्यसंभावयतः प्रश्नः ॥ **मकरन्दः** । अश्रद्दधानो विश्वासरहितः । **अस्माकमिति** । मरुता प्रबलपवनेन विकीर्णं विशकलितं

गम्भीरमङ्गलमृदङ्गसहस्रजन्मा
शब्दान्तरश्रवणशक्तिमपाकरोति ॥ ४ ॥

तदेहि । जालमार्गेण पश्यामः ।

(तथा कुर्वन्ति ।)

**कलहंसः**—[1]णाह, पेक्ख । इमे दाव उप्पडिअराअहंसविब्भमाभिरामचामरसमीरणुव्वेलिअकदलिआवलीतरङ्गिदुत्ताणगअणङ्गणसरोणिरन्तरुद्दण्डपुण्डरीअविब्भमं वहन्दो मङ्गलधवलातपत्तणिवहा दीसन्ति । इमाओ सविलासकवलिअतम्बूलाहिपूरिअकवोलमण्डलाभोअव्वइअरक्खलिअमहुरमङ्गलुग्गीअबद्धकोलाहलेहिं विविहरअणालंकारकिरणावलीविडम्बिअमहेन्दचापविच्छेअविच्छुरिअणहत्थलेहिं वारसुन्दरीकदम्बएहिं अज्झासिआओ क्कणन्तकणअकिंकिणीरणिअझणझणक्कारिणीओ करिणीओ ।

---

१. नाथ, पश्य । इमे तावदुत्पतितराजहंसविभ्रमाभिरामचामरसमीरणोद्वेलकदलिकावलीतरङ्गितोत्तानगगनाङ्गणसरोनिरन्तरोद्दण्डपुण्डरीकविभ्रमं वहन्तो मङ्गलधवलातपत्रनिवहा दृश्यन्ते । इमाः सविलासकवलितताम्बूलाभिपूरितकपोलमण्डलाभोगव्यतिकरस्खलितमधुरमङ्गलोद्गीतबद्धकोलाहलैर्विविधरत्नालंकारकिरणावलिविडम्बितमहेन्द्रचापविच्छेदविच्छुरितनभःस्थलैर्वारसुन्दरीकदम्बकैरध्यासिताः क्वणत्कनककिंकिणीरणितझणझणत्कारिण्यः करिण्यः ।

---

यज्जीमूतजालं तद्रसितानुकारी गम्भीरो यो मङ्गलार्थं मृदङ्गसहस्रजन्मा निनादः सोऽस्माकमेकपद एव स्वव्यतिरिक्तशब्दश्रवणसामर्थ्यं निरस्यति । मत्समीपमागत्याहेत्यर्थः ॥४॥ **कलहंसः** । नाथ, पश्य । इमे तावन्मङ्गलधवलातपत्रनिवहा दृश्यन्त इत्यन्वयः । कीदृशाः । उत्पतितानां राजहंसानां विभ्रमेणेव विभ्रमेणाभिरामाणां चामराणां समीरणेनोद्वेलोर्ध्वं चरन्ती या कदलिकावली पताकापङ्क्तिस्तया तरङ्गितं संजाततरङ्गं यदुत्तानं गगनाङ्गणं नभोभाग एव सरस्तत्र निरन्तराणां सान्द्राणामुद्दण्डपुण्डरीकाणां यो विभ्रमस्तं वहन्तो बिभ्राणाः । अत्र गगनाङ्गणस्योत्तानत्वं गाम्भीर्यद्योतनार्थम् । गम्भीरे सरसि पुण्डरीकाणामुद्दण्डकाण्डा भवन्ति नान्यत्र । **सविलासेति** । सविलासं कवलितेन ताम्बूलेनाभिपूरितस्य कपोलमण्डलस्याभोगेन विस्तारेण यो व्यतिकरः संपर्को गीताक्षराणां तेन स्खलितं यन्मधुरं मङ्गलार्थमुद्गीतं गौरीकल्याणादि गानं तेन बद्धः कोलाहलो येन तैः । विविधानां रत्नालंकाराणां किरणावलीभिर्विडम्बिता अनुकृता ये महेन्द्रचापविच्छेदास्तैर्विच्छुरितं व्याप्तं नभःस्थलं गगनस्थलं येषां तैर्वारसुन्दरीकदम्बकैरध्यासिताः

(माधवमकरन्दौ सकौतुकं पश्यतः ।)

**मकरन्दः**—स्पृहणीयाः खल्वमात्यभूरिवसोर्विभूतयः । तथा हि

प्रेङ्खद्भूरिमयूरमेचकचयैरुन्मेषिचाषच्छद-
च्छायासंवलितैर्विवर्तिभिरिव प्रान्तेषु पर्यावृताः ।
व्यक्ताखण्डलकार्मुका इव भवन्त्युच्चित्रचीनांशुक-
प्रस्तारस्थगिता इवोन्मुखमणिज्योतिर्वितानैर्दिशः ॥ ५ ॥

**कलहंसः**—[1]कहं ससंभमअणेअपडिहारमण्डलावज्जिओज्जलकणअकलधौअपङ्कलित्तचित्तवेत्तलदापरिक्खित्तरेहारइअमण्डलो दूरसंठिदो परिअणो । एसा अ बहुलसिन्दूरणिअरसंझाराओपरत्तमुहमहुरघोलन्तणक्खत्तमालाभरणधारिणिं करेणुरअणिं अलंकरन्ती इदो एव्व

---

१. कथं ससंभ्रमानेकप्रतिहारमण्डलावर्जितोज्ज्वलकनककलधौतपङ्कलिप्तचित्रवेत्रलतापरिक्षिप्तरेखारचितमण्डलो दूरसंस्थितः परिजनः । एषा च बहुलसिन्दूरनिकरसंध्यारागोपरक्तमुखमधुरघूर्णमाननक्षत्रमालाभरणधारिणीं करेणुरजनीमलंकुर्वतीत एव कौतूहलोत्फुल्लमुखसमस्तलोकदृश्यमानमनोहरा-

---

क्वणत्कनककिंकिणीरणितझणझणत्कारिण्यः करिण्यः । दृश्यन्त इति शेषः ॥ **मकरन्दः । प्रेङ्खदिति** । दिश उन्मुखानामूर्ध्वं प्रसृतानां मणिज्योतिषामनेकवर्णानां वितानैर्विस्तारैरेवंविधा भवन्ति । किंविधाः । उन्मेषिणां प्रसरणशीलानां चाषाणां कुलिङ्गानां मरुता आकुला ये छदाः पक्षास्तेषां छायाभिः संवलितैर्मिश्रीभूतैर्विवर्तिभिर्विसृमरैः प्रेङ्खतां प्रचलतां भूरीणां बहूनां मयूराणां मेचकचयैश्चन्द्रकरसमूहैः प्रान्तेषु पर्यन्तप्रदेशेषु परितः समन्तादावृता इव भवन्ति । तथा व्यक्ताखण्डलकार्मुका इव भवन्ति । तथा लिखितचित्राणां चीनदेशोद्भवानामंशुकानां प्रस्तारेण संस्तरेण स्थगिता आच्छादिता इव भवन्तीति रत्नालंकारबाहुल्यं सूचितम् । तस्मादतिपुरंदरवैभवममात्यभूरिवसोरैश्वर्यमिति भावः ॥ ५ ॥ **कलहंसः** । कथं ससंभ्रममागतानामनेकेषां प्रतिहाराणां वेत्रहस्तानां मण्डलेनावर्जिताभिरवनमिताभिरुज्ज्वलेन कनकेन कलधौतेन रूप्येण चान्तरान्तरा घटितेन चित्राभिर्वेत्रलताभिः परिक्षिप्ता भूमौ लिखिता या रेखा सा नलङ्घनीयेति सीमात्वेन परिकल्पिता । तया रचितमण्डलः पृथगवस्थितः स तादृशो जनो दूरत एव स्थितः । एषा च बहुलसिन्दूरनिकरेण संध्यारागेणेवोपरक्तमुखे वदने प्रादुर्भावे च मधुरं मनोहरं यथा स्यात्तथा घूर्णमाना प्रकाशमाना नक्षत्रमाला हारविशेषोऽश्विन्यादितारापङ्क्तिश्च तदेवाभरणं धारयतीति धारिणी तां करेणुरजनीम् । रजनीमिव करेणुमित्युपमितसमासेनोपमा वाच्या । अलंकुर्वतीत एव कौतूहलोत्फुल्लमुखसमस्तलोकदृश्यमानमनोहरापाण्डुरपरिक्षामदेहशोभाविभावितानङ्गवेदना

कोऊहलुप्फुल्लमुहसमत्थलोअदिस्सन्तमणहरप्पण्डुरपरिक्खामदेहसोहाविभाविआणङ्गवेअणा पुढमचन्दलेहाविब्भमं वहन्दी किंचिअन्दरं पसरिदा मालदी ।

**मकरन्दः**—वयस्य, पश्य ।

इयमवयवैः पाण्डुक्षामैरलंकृतमण्डना
(बहिः) कलितकुसुमा बालेवान्तर्लता परिशोषिणी ।
वहति च वरारोहा रम्यां विवाहमहोत्सव-
श्रियमुदयिनीमुद्धूतां च व्यनक्ति मनोरुजम् ॥ ६ ॥

कथं निषादिता गजवधूः ।

**माधवः**—(सानन्दम् ।) कथमवतीर्य भगवतीलवङ्गिकाभ्यां प्रवृत्तैव ।

(ततः प्रविशति कामन्दकी मालती लवङ्गिका च ।)

**कामन्दकी**—(सहर्षमपवार्य )

---

पाण्डुरपरिक्षामदेहशोभाविभावितानङ्गवेदना प्रथमचन्द्रलेखाविभ्रमं वहन्ती किंचिदन्तरं प्रसृता मालती ।

---

अत एव विशेषणद्वयस्य सामर्थ्यात्प्रथमचन्द्रलेखायाः प्रतिपच्चन्द्रकलाया विभ्रमं वहन्ती किंचिदन्तरं परिजनमण्डलादपसृत्यान्यदेशं प्रसृता मालती। कथमन्यविभ्रममन्या वहेदित्यसंभवधर्मयोगात्संध्यारागोपरक्ततारावलीविभूषितरजनीप्रारम्भोदिता स्वभावादप्रौढत्वाच्च पाण्डुक्षामकौतूहलोन्मुखसमस्तलोकदृश्यमाना प्रतिपच्चन्द्रलेखेव सिन्दूरोपरक्तहारालंकृतकरेणुमलंकुर्वती विरहभावनात्पाण्डुक्षामा सर्वलोकप्रेक्षणीया मालतीति बिम्बप्रतिबिम्बभावेनार्थान्तराध्यारोपान्मुखनक्षत्रमालाशब्दोपात्तश्लेषोपस्कृतसिन्दूरसंध्यारागकरेणुरजनीशब्दोपात्तोपमानुगृहीतो निदर्शनालंकारः ॥ **मकरन्दः । इयमिति** । इयं वरारोहोत्तमा नायिका । अवयवैः सहजलावण्यमयैर्विरहवशात्पाण्डुक्षामैरेव प्रत्युतालंकृतानि मण्डनानि भूषणानि यस्याः सा । अलंकरणैर्न कश्चिदतिशयस्तदवयवानाम् । किंतु तद्गतत्वेन तेषामेव शोभातिशयो दृश्यत इत्यर्थः । तादृशी सती माङ्गल्यमण्डनसनाथतया रम्यां विवाहमहोत्सवश्रियमौपयिकीं गुरुनिर्बन्धादाहृतां बहिः केवलं वहति । तथात्यर्थमुदयिनीमिदानीं प्रतिक्षणमुपचीयमानां मनोरुजं मन्मथवेदनामवयवगतपाण्डिमकृशिमादिभिरेव व्यनक्ति । अन्तर्गतमनुपाधिकं दुःसहमन्मथव्यथाविकारं द्योतयतीत्यर्थः । कथमिव । बहिःकलितकुसुमान्तःकीटादिदोषवशात्परिशोषिणी बाललतेवेत्युपमालंकारः । धीरा चेयं नायिका ॥ ६ ॥ निषादितोपवेशिता ॥ **ततः प्रविशतीति** । पूर्ववाक्येनैव सूचितत्वादत्र माधवमकरन्दयोः कथानुबन्धेन कामन्दक्यादिप्रवेशसूचनात्तयोश्च कामन्दकीं प्रति शिष्य-

विधाता भद्रं नो वितरतु मनोज्ञाय विधये
विधेयासुर्देवाः परमरमणीयां परिणतिम् ।
कृतार्था भूयासं प्रियसुहृदपत्योपनयतः
प्रयत्नः कृत्स्नोऽयं फलतु शिवतातिश्च भवतु ॥ ७ ॥

**मालती**—(स्वगतम् ।[1]) केण उण उवाएण संपदं मरणणिव्वाणस्स अन्दरं संभावयिस्सं । मरणं वि मे मन्दभाअहेआए अहिमदं अदिदुल्लहं होइ ।

---

१. केन पुनरुपायेन सांप्रतं मरणनिर्वाणस्यान्तरं संभावयिष्यामि । मरणमपि मे मन्दभागधेयाया अभिमतमतिदुर्लभं भवति ।

---

तया परिजनत्वात् । 'परिजनकथानुबन्धः प्रवेशको नाम विज्ञेयः' इत्युक्तलक्षणप्रवेशकोऽयं ग्रन्थभाग इति कश्चिद्व्याचष्टे । स वक्तव्यः । कथं प्रत्यक्षाभिनयरूपाङ्कमध्ये केवलाभिनयसूचनैकपात्रसूच्यार्थसूचकस्य प्रवेशकस्य निवेशः । कथं वा प्रधाननायकस्य वस्तुतः शिष्यस्यापि प्रवेशकपात्रत्वपरिजनत्वादिपरिकल्पनमनौचित्यापादकमिति । कथं च स्वपठितस्योत्तरश्लोको न दृष्टः । 'अङ्कच्छेदं कृत्वा मासकृतं वर्षसंचितं वापि । तत्तत्र सूचनीयं वर्षादूर्ध्वं तु न कदाचित् ॥' इति । तथा 'दिवसावसानकार्यं यद्यङ्केनोपपद्यते सर्वम् । अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधातव्यम् ॥' इत्यादि भरतग्रन्थेषु तदनन्तरश्लोकेषु बहुप्रवेशकानभिधेयार्थसूचकत्वेन पृथगेव निवेशाभिधानात् । 'एतेष्वङ्कबहिर्भावः स्याद्विष्कम्भप्रवेशयोः । चूलिकायाः क्वचिद्बाह्ये क्वचिन्मध्ये निवेशनम्' ॥ इति भावप्रकाशेऽभिहितत्वाच्च तस्याङ्कमध्ये निवेशनं प्रधाननायकस्य नैच्याङ्गीकरणं च लोकशास्त्रविरुद्धम् । अथ प्रवेशयतीति व्युत्पत्त्या प्रवेशकत्वसूचकमात्रेण प्रवेशकत्ववाचोयुक्तिस्तर्हि न तस्य परिजनेत्यादिकं लक्षणम्, किंतु विष्कम्भकादिपञ्चकान्तर्गतस्येति तदुदाहरणमनुगतम् । चूलिकादीनां तु त्रयाणां पात्रप्रवेशसूचनार्थमेव स्वीकारात्तथैव लक्षितत्वाच्च युज्यते क्वचित्तेषामङ्कमध्ये पात इत्यास्ताम् ॥ **कामन्दकी—सहर्षमिति** । स्वप्रयुक्तोपायस्य सिध्यौन्मुख्यं हर्षहेतुः । 'श्रेयांसि बहुविघ्नानि' इति संभावितविघ्नविघातायेष्टदेवतां प्रार्थयते—**विधातेति** । विधाता ब्रह्मा । अन्योन्यानुगुणयोगान्मनोहराय विधये मालतीमाधवविवाहरूपाय प्रयोजनाय नोऽस्माकं भद्रं वितरतु । अत्र सर्वज्ञाया अपि भगवत्या अकारप्रश्लेषणादभद्रमिति नो इति च निषेधवाचिना निपातेन चामङ्गलार्थद्योतकं वाक्यं कार्यव्यग्रताहठान्निर्गतं भाव्यनिष्टमुत्तराङ्कस्थं द्योतयतीति केचित् । देवाः परमामुत्कृष्टां रमणीयां परिणतिं समुचितवधूवरसमागमरूपां विधेयासुः । 'एर्लिङि' इत्येलम् । प्रियसुहृदपत्ययोरुपनयतः संघट्टनादहं कृतार्था भूयासम् । उक्तं हि प्राक्—'प्राणैस्तपोभिः' इत्यादि । अयं च सर्वः सुहृदपत्यप्रतिज्ञामारभ्यैतदन्तः प्रयत्नोऽद्य मालतीमाधवविवाहरूपेण फलेन फलतु । शिवतातिः शिवंकरश्च भवतु ।

**लवङ्गिका**—[1]अदिकीलालिआ क्खु पिअसही एदिणा अणुऊलविप्पलम्भेण ।

(प्रविश्य भूषणपटलकहस्ता ।)

**प्रतिहारी**—[2]भअवदीं अमच्चो भणादि । एदिणा णरेन्दाणुप्पेसिदविवाहणेवच्छेण देवदाए वुरदो अलंकरिदव्वा मालदि त्ति ।

**कामन्दकी**—युक्तमाङ्गलिकं हि तत्स्थानम् । इतो दर्शय ।

**प्रतिहारी**—[3]एदं दाव धवलपट्टंसुअजुअलं । एदं अ उत्तरीअवण्णंसुअं । इमे अ सव्वङ्गिआ आहरणसंजोआ । इमे अ मोत्तिआहारा । एदं चन्दणं । एसो सिदकुसुमापीडो त्ति ।

**कामन्दकी**—(अपवार्य ।) रमणीयं वत्सं मकरन्दमवलोकयिष्यति जनः । (प्रकाशम् । गृहीत्वा ।) भवतु । एवमुच्यताममात्यः ।

(प्रतिहारी निष्क्रान्ता ।)

---

१. अतिक्लेशिता खलु प्रियसख्येतेनानुकूलविप्रलम्भेन ।

२. भगवतीममात्यो भणति । एतेन नरेन्द्रानुप्रेषितविवाहनेपथ्येन देवतायाः पुरतोऽलंकर्तव्या मालतीति ।

३. एतत्तावद्धवलपट्टांशुकयुगलम् । एतच्चोत्तरीयवर्णांशुकम् । इमे च सर्वाङ्गिका आभरणसंयोगाः । इमे च मौक्तिकहाराः । एतच्चन्दनम् । एष सितकुसुमापीड इति ।

---

शिवशब्दात्‘शिवशमरिष्टस्य करे’ इति तातिन्प्रत्ययः । ‘क्षेमंकरोऽरिष्टतातिः शिवतातिः शिवंकरः’ इत्यमरः ॥ ७ ॥ अथ मालती मुहूर्तानन्तरं नन्दनपाणिग्रहणं वज्रनिपातसमुत्प्रेक्षमाणा दुर्विषहतत्पाणिग्रहणलक्षणदुःखात्यन्तोच्छेदकत्वेन मरणमेव शरणं निःश्रेयसं मन्यमाना तमुपायमपि दुर्लभं मत्वा वितर्कयति—केन पुनः सांप्रतमुपायेन मरणनिर्वाणस्यान्तरमवसरं संभावयिष्यामि । एतद्वितर्कप्रतिपादनाद्रूपं नामाङ्गम् । यथा—‘वितर्को रूपमुच्यते’इति । मरणमपि मन्दभागधेयाया मेऽभिमतमतिदुर्लभं भवति॥**लवङ्गिका** । अतिक्लेशिता खलु प्रियसख्येतेनानुकूलस्य प्रियस्य विप्रलम्भेन ॥ प्रविश्य । आहेति शेषः । पटलकमाभरणधारणपात्रम् । **प्रतिहारी** । अमात्यो भगवतीं भणति । एतेन नरेन्द्रानुप्रेषितविवाहनेपथ्येन देवतायाः पुरतोऽलंकर्तव्या मालतीति ॥ **कामन्दकी** । माङ्गलिकं मङ्गलप्रयोजनमिति ठक् ॥ **प्रतिहारी** । एतत्तावद्धवलपट्टांशुकयुगलम् । एतच्चोत्तरीयवर्णांशुकम् । इमे च सर्वाङ्गिका आभरणसंयोगा आभरणान्येव संयोज्यन्ते स्थाप्यन्ते येष्ववयवेष्विति संयोगाः । कर्मणि घञ् । सर्वाङ्गिकाः सर्वाङ्गस्थाप्याः । इमे च मौक्तिकहाराः । एतच्चन्दनम् । एष सितकुसुमशेखर इति ॥ **कामन्दकी** । **रमणीयमिति** । अ-

**कामन्दकी**—लवङ्गिके, प्रविश त्वमभ्यन्तरं वत्सया मालत्या सह।

**लवङ्गिका**—[1]भअवदी उण।

**कामन्दकी**—अहमपि विविक्ते तावदलंकरणरत्नानां प्राशस्त्यं शास्त्रतः परीक्ष्ये। (इति निष्क्रान्ता।)

**मालती**—(आत्मगतम्।) [2]लवङ्गिकामेत्तपरिवारा दाव संउत्ता। (प्रकाशम्।) एदं देवदामन्दिरदुवारं। ता पविसदु पिअसही।

(प्रविशतः।)

**मकरन्दः**—इतः स्तम्भान्तरितौ पश्यावः।

(तथा कुरुतः।)

**लवङ्गिका**—[3]सहि, अअं अङ्गराओ। इमाओ कुसुममालाओ।

**मालती**—[4]तदो किं।

**लवङ्गिका**—[5]सहि, इमस्सिं पाणिग्गहणमङ्गलारम्भे कल्लाणसंवत्तिणिमित्तं देवदां पूजेहि त्ति अम्बाए अणुप्पेसिदासि।

**मालती**—(स्वगतम्।) [6]कुदो दाणिं दारुणसमारम्भदेव्वदुव्वि-

---

१. भगवती पुनः।

२. लवङ्गिकामात्रपरिवारा तावत्संवृत्ता। इदं देवतामन्दिरद्वारम्। तत्प्रविशतु प्रियसखी।

३. सखि, अयमङ्गरागः। इमाः कुसुममालाः।

४. ततः किम्।

५. सखि, अस्मिन्पाणिग्रहणमङ्गलारम्भे कल्याणसंपत्तिनिमित्तं देवतां पूजयेत्यम्बयानुप्रेषितासि।

६. कस्मादिदानीं दारुणसमारम्भदैवदुर्विलासपरिणामदुःखनिर्दलितमानसां पुनरपि मर्मच्छेददुःसहां मन्दभागिनीमुपतापयसि।

---

नेन प्रसाधनेन प्रसाधितं मालतीरूपधारिणं रमणीयं मकरन्दं जनो विप्रलब्धो मालतीबुद्ध्या क्षणान्तरमवेक्ष्यतीत्यर्थः॥ **लवङ्गिका**। भगवती पुनः। क्व यास्यतीति शेषः॥ **मालती**। लवङ्गिकामात्रपरिवारा तावत्संवृत्ता। तदिदानीं यथाकथंचिदेनां लवङ्गिकामुपनीय शक्यं प्राणांस्त्यक्तुमिति भावः। इदं देवतामन्दिरद्वारम्। तत्प्रविशतु प्रियसखी॥ स्तम्भान्तरितौ स्तम्भापवारितौ॥ **लवङ्गिका**। सखि, अयमङ्गरागः। इमाः कुसुममालाः॥ **मालती**। ततः किम्। मर्तुकामाया मम किमेभिरित्याशयः॥ **लवङ्गिका**। सखि, अस्मिन्पाणिग्रहणमङ्गलस्यारम्भ उपक्रमसमये कल्याणस्य विवाहमङ्गलस्य संपत्तिरविघ्नेन निष्पत्तिस्तन्निमित्तं तदर्थं देवतां पूजयेत्यम्बयानुप्रेषितासि। तदेतैर्देवतामर्चयेति शेषः। **मालती**। कस्मादिदानीं दा-

लासपरिणामदुक्खणिद्दलिअमाणसं पुणो वि मम्मच्छेददूसहं मन्दभाइणीं दूमिज्जसि ।

लवङ्गिका—[1]अइ, किं वत्तुकामासि ।

मालती—[2]किं दाणिं दुल्लहाभिणिवेसमणोरहविसंवदन्तभाअहेओ जणो मन्तेदि ।

मकरन्दः—सखे श्रुतम् ।

माधवः—असंतोषस्तु हृदयस्य ।

मालती—(लवङ्गिकां परिष्वज्य ।) [3]परमत्थभइणि पिअसहि लवङ्गिए, एसा दाणिं दे पिअसही अणाहा मरणे वट्टमाणा आगब्भणिग्गमणिरन्तरोवारूढविस्सम्भसरिसं परिस्सज्जिअ अब्भत्थेदि । जइ दे अहं अणुवट्टणीआ तदो मं हिअएण धारअन्ती समग्गसोहग्गलच्छीपरिग्गहेक्कमङ्गलं माहवस्स सिरिमुहारविन्दं आणन्दमसिणं पलोएहि । (इति रोदिति ।)

---

१. अयि, किं वक्तुकामासि ।

२. किमिदानीं दुर्लभाभिनिवेशमनोरथविसंवदद्भागधेयो जनो मन्त्रयते ।

३. परमार्थभगिनि प्रियसखि लवङ्गिके, एषेदानीं ते प्रियसख्यनाथा मरणे वर्तमानाऽऽगर्भनिर्गमनिरन्तरोपारूढविस्रम्भसदृशं परिष्वज्याभ्यर्थयते । यदि तेऽहमनुवर्तनीया ततो मां हृदयेन धारयन्ती समग्रसौभाग्यलक्ष्मीपरिग्रहैकमङ्गलं माधवस्य श्रीमुखारविन्दमानन्दमसृणं प्रलोकय ।

---

रुणसमारम्भस्य दैवस्य यो दुर्विलासो दुर्व्यापारस्तत्परिणामरूपेण दुःखेन निर्दलितं खेदितं मानसं यस्यास्तां पुनरपि मर्मच्छेददुःसहां मन्दभागिनीमुपतापयसि । इदं चात्मगतमेव लवङ्गिकां संबोध्योपालम्भ इति द्रष्टव्यम् ॥ **लवङ्गिका** । अयि किं वक्तुकामासि । तद्वदेति शेषः ॥ **मालती** । किमिदानीं दुर्लभविषयो योऽभिनिवेशः प्रयत्नविशेषस्तत्र यो मनोरथस्तत्र विसंवदद्विपरीतीभवद्भागधेयं यस्य तादृशो जनो मन्त्रयते । प्रियतमसमागमरूपमनोरथविसंवादे मरणं मयापेक्षितं तदपीदानीं भाग्यवैकल्यान्मम दुर्लभं जातमिति किमिदानीं मया वक्तव्यमित्याशयः । एतच्च प्रस्तुतमरणोत्कर्षद्योतकत्वादुदाहरणं नामाङ्गम् । यथा—'यत्तु सातिशयं वाक्यं तदुदाहरणं भवेत्' इति ॥ **मकरन्दः** । सखे, श्रुतमित्यत्र काकुः ॥ **माधवः** । असंतोषस्त्विति स्वनिमित्तत्वस्यास्फुटत्वात् ॥ **मालती** । परमार्थभगिनि प्रियसखि लवङ्गिके, एषेदानीं ते प्रियसख्यनाथा मरणे वर्तमाना आगर्भनिर्गमनिरन्तरोपारूढविस्रम्भसदृशं परिष्वज्याभ्यर्थयते । तत्र प्रस्तुतोपयोगिसामवचनत्वात्संग्रहो नामाङ्गम् । यथा—'संग्रहः सामदानोक्तिः' इति । यदि तेऽहमनुवर्तनीया ततो मां हृद-

**माधवः**—वयस्य मकरन्द,

म्लानस्य जीवकुसुमस्य विकासनानि
संतर्पणानि सकलेन्द्रियमोहनानि ।
आनन्दनानि हृदयैकरसायनानि
दिष्ट्या मयाप्यधिगतानि वचोमृतानि ॥ ८ ॥

**मालती**—[1]जह तस्स जीविदप्पदाइणो अवसिदां मं सुणिअ संदप्पमाणस्स तहाविहं सरीररअणं ण परिहीअदि, जह अ लोअन्दरगअं वि मं उद्दिसिअ सो जणो सुमरणकहामेत्तपरिसेसं कालन्दरेण वि लोअजत्तं ण सिढिलेदि, तह करेसु । एव्वं दे पिअसही मालदी सकामा होइ ।

---

१. यथा तस्य जीवितप्रदायिनोऽवसितां मां श्रुत्वा संतप्यमानस्य तथाविधं शरीररत्नं न परिहीयते, यथा च लोकान्तरगतामपि मामुद्दिश्य स जनः स्मरणकथामात्रपरिशेषां कालान्तरेणापि लोकयात्रां न शिथिलीकरोति, तथा कुरु । एवं ते प्रियसखी मालती सकामा भवति ।

---

येन धारयन्ती समग्रसौभाग्यलक्ष्मीपरिग्रहैकमङ्गलं माधवस्य श्रीमुखारविन्दमानन्दमसृणं यथा स्यादेवं प्रलोकय । अनेन मन्निर्विशेषया त्वया मां स्मरन्त्या प्रियतमो दृष्टश्चेन्मयैव दृष्ट इति प्रतीतेर्माधवविषयः प्रेमैव परां कोटिमारूढः । सर्वथा तदलाभनिश्चयान्मरणं निश्चितमिति व्यज्यते । आनन्दमसृणमित्यनेन च येन प्रकारेणाहं तमवलोकयामि तेनैवावलोकय, न तु स्वोचितेन ताटस्थ्येनेत्युक्तम् ॥ **माधवः** । स्वविषयतां प्रेमबन्धस्य निरतिशयतां च ज्ञात्वाह—**म्लानस्येति** । दिष्ट्या भाग्येन मया तादृशसौभाग्यानर्हेणापि वचोमृतान्येतान्यधिगतानि प्राप्तानि । कीदृशानि । प्रियाप्राप्त्यसंभावनया ग्लानिमुपगतस्य जीवस्यैव सौकुमार्यात्कुसुमस्य विकासनानि । तथा संतर्पणानि सम्यक्तृप्तिजनकानि । तेन हि मालत्याः शतशो दर्शनेऽपीदृशवचनश्रवणाद्यादृशी तृप्तिस्तादृशी न भवतीति वचनानां संतर्पकत्वम् । तथा सकलेन्द्रियाणां मोहनानि । प्रलयाख्यसात्त्विकभावहेतुत्वात् । इन्द्रियास्तमयो हि प्रलयः । तथानन्दनानि निरतिशयानन्दस्यात्मसंवेद्यत्वादानन्दजनकानि । तथा हृदयस्य विरहदुःखशोषितसर्वरसादिधातुकस्य रसायनानि रसादिधातुसंपादकत्वेन रसजनकानि । 'नीरसानां हि धातूनां लाभोपायो रसायनम्' इति रसायनम् ॥ ८ ॥ **मालती** । यथा तस्य जीवितप्रदायिनोऽहमवसिता मृतेति मां श्रुत्वा संतप्यमानस्य तत्तथाविधं शरीररत्नं न परिहीयते, यथा च लोकान्तरगतामपि मामुद्दिश्य स जनः स्मरणकथामात्रपरिशेषां कालान्तरेणापि लोकयात्रां न शिथिलीकरोति तथा कुरु । अत्र माधवमरणशङ्काबीजं स्वात्मनि माधवानुरागोत्कर्षः । यथाहं तदलाभात्तदनुरागे जीवितं त्यक्ष्यामि तथासावपि मदनु-

**मकरन्दः**—हन्त, अतिकरुणं प्रस्तुतम् ।

**माधवः**—

नैराश्यकातरधियो हरिणेक्षणायाः
श्रुत्वा निकामकरुणं च मनोहरं च ।
वात्सल्यमोहपरिदेवितमुद्वहामि
चिन्ताविषादविपदं च महोत्सवं च ॥ ९ ॥

**लवङ्गिका**—अइ, पडिहदं दे अमङ्गलं । इदो वि अवरं ण सुणिस्सं ।

१. अयि, प्रतिहतं तेऽमङ्गलम् । इतोऽप्यपरं न श्रोष्यामि ।

रागोत्कर्षाच्छ्मशानप्रदेशवृत्तान्तावगमाच्च मय्यवसितायामसौ स्वजीवितनिरपेक्षस्त्यजेदपि शरीरम् । यथा तु जीवति तथा कुर्विति । त्वत्प्रयत्नवशात्कथंचिदपरित्यक्तजीवितोऽसौ कालक्रमेण यथा मां न विस्मरति तदपि त्वयैव कर्तव्यमिति भावः । एवं ते प्रियसखी मालती सकामा भवति ॥ **मकरन्दः** । हन्तेति प्रेमातिशयमरणोद्योगप्रतीतेर्हर्षविषादद्योतकः॥ **माधवः—नैराश्येति** । नैराश्येन मत्पाणिग्रहणप्रत्याशाभावे तद्धेतुकस्वजीवितप्रत्याशाभावेन कातरा चकिता धीर्यस्यास्तस्या हरिणेक्षणाया निकामं भृशं करुणं मरणोद्योगसूचनाच्छोकातिशयजनकम् । अथ स्वविषयानुरागप्रकर्षप्रतीतेर्मनोहरं च वात्सल्येन रतिभावेन । यद्यपि वात्सल्यशब्दोऽपत्यविषयां रतिमाचष्टे, तथाप्यत्र लक्षणया रतिसामान्यमात्रमाह, न तु वात्सल्यं नाम दशमं रसान्तरम् । प्रसिद्धालंकारप्रस्थानेष्वव्युत्पादनात् । प्रत्युत निषेधादेव गुरुनृपपुत्रादिविषयाया रतेर्भावत्वमेव हि व्यवस्थापितम् । 'रतिर्देवादिविषया व्यभिचारी तथा जिता' । तस्मात् 'तमङ्कमारोप्य शरीरयोगजैः' इत्यादौ पुत्रगोचराया रतेः परिपोषादसंलक्ष्यक्रमव्यङ्ग्यभेदो भावध्वनिरेव रसान्तरम् । न च भरतेनात्र पृथक्स्थायी प्रदर्शितः । नापि रतिरेवास्य स्थायी । तस्याः शृङ्गारैकस्थायित्वात्, अस्य रसान्तरत्वाभावप्रसङ्गाच्च । नापि शृङ्गारभेद एवायम् । तद्भेदेषु संभोगादिष्वपरिगणनात् । मात्रादीनां पुत्रादौ शृङ्गारस्यात्यन्तानौचित्याच्च । अस्तु वा वात्सल्यं रसान्तरम् । तथापि प्रकृते तन्न संभवति । तस्यापत्यमात्रालम्बनत्वात् । न हि मालत्या माधवे वात्सल्यं युक्तमित्यर्थः । अलं कुत्सितेन विचारणेन । तस्मादत्र रतिसामान्यं लक्ष्यते । तेन मोहेन 'मोहश्चित्तस्य शून्यता' इत्युक्तेन व्यभिचारिणा च यत्परिदेवितं विलापवचनं तत्र तद्गतचिन्तया मदलाभादियं प्राणानपि त्यक्तुमुद्यता । अनया किमिदानीं कर्तव्यमित्येवंरूपया यो विषादो विषण्णत्वमेव विपत् । तां च महोत्सवं च । अहो मे सौभाग्यं यदेतादृशस्य स्त्रीरत्नस्य मय्येवंविधानुरागबन्धस्तदेतल्लाभाभावेऽप्येतावतैव लब्धजन्मसाफल्योऽहमित्येवमात्मनो हर्षोत्कर्षः । तं च वहामि । उक्तं च—'परस्परप्राप्तिनिराशयोर्वरं शरीरनाशोऽपि समानरागयोः' इति । शोकहर्षाभ्यां करुणशृङ्गारसंकीर्णं मनो वर्तत इति भावः ॥९॥ **लवङ्गिका** । अयि,

**मालती**—[1]सहि, पिअं खु तुह्माणं मालदीजीविदं । ण उण मालदी ।

**लवङ्गिका**—[2]सहि, किं ति भणिदं होइ ।

**मालती**—[3]जेण पच्चासाणिवन्धणेहिं वअणसंविहाणेहिं जीवाविअ इमं महावीभच्छारम्भं अनुभाविदह्मि । संपदं उण मे मणोरहो एत्तिअं एव्व । जं तस्स देवस्स परकेरअत्तणेण अवरद्धं अत्ताणं परिच्चइअ णिव्वुदा हुविस्सं । अस्सिं पओअणे पिअसही मे अपरिपन्थिणी होदु । (इति पादयोः पतति ।)

**मकरन्दः**—सैषा परमा सीमा स्नेहस्य ।

(लवङ्गिका माधवं संज्ञयाह्वयति ।)

**मकरन्दः**—वयस्य, लवङ्गिकास्थाने तिष्ठ ।

---

१. सखि, प्रियं खलु युष्माकं मालतीजीवितम् । न पुनर्मालती ।

२. सखि कमिति भणितं भवति ।

३. येन प्रत्याशानिबन्धनैर्वचनसंविधानैर्जीवयित्वेमं महावीभत्सारम्भमनुभावितास्मि । सांप्रतं पुनर्मे मनोरथ एतावानेव । यत्तस्य देवस्य परकीयत्वेनापराद्धमात्मानं परित्यज्य निर्वृता भविष्यामि । अस्मिन्प्रयोजने प्रियसखी मेऽपरिपन्थिनी भवतु ।

---

प्रतिहतं तेऽमङ्गलम् । इतोऽप्यपरं न श्रोष्यामि ॥ **मालती** । सखि, प्रियं खलु युष्माकं मालतीजीवितम् । न पुनर्मालती ॥ **लवङ्गिका** । सखि, किमिति भणितं भवति । मालतीजीवितं प्रियं न तु मालतीति वचनस्य व्याहतत्वादिति भावः ॥ **मालती** । येन प्रत्याशानिबन्धनैर्वचनसंविधानैर्जीवयित्वैतावन्तं कालमीदृशं महावीभत्सारम्भमनुभवितास्मि । तदनेनातिजुगुप्सितमपि मम जीवितमेव युष्माकं प्रियं यथा तथा वा जीवति चेदलमिति न तु दुःखविवर्जिता मालती कथं सुखेन तिष्ठतीति युष्माकं न विचार इत्यस्य स्ववाक्यस्याभिप्रायो वर्णितो भवति । महावीभत्सारम्भमतिजुगुप्सितं नन्दनपाणिग्रहणोद्योगमित्यर्थः । सांप्रतं पुनर्मम मनोरथ एतावानेव । यत्तस्य देवस्य । जीवितप्रदायिनो माधवस्येति यावत् । परकीयत्वेन पराधीनत्वेनापराद्धमात्मानं परित्यज्य निर्वृता भविष्यामीति जीवितपरित्राणाज्जीवितस्य स एव स्वामीति तदीयस्यास्य जीवितस्य गुरुपारतन्त्र्यादन्यायत्तीकरणोद्योगोऽपराधः । तस्य च तदीयजीवितपरित्याग एव प्रायश्चित्तमन्याधीनतासंपादनकलङ्कापाकरणादिति भावः । अस्मिन्प्रयोजने प्रियसखी मेऽपरिपन्थिन्यप्रतिकूला भवतु ॥ **मकरन्दः** । परमा सीमा परा काष्ठा । नेतःपरं स्नेहस्यातिशय इति भावः । अथ पूर्वमेव विहितसंकेता लवङ्गिका स्तम्भान्तरितं माधवं प्रत्यवस-

**माधवः**—परवानस्मि साध्वसेन ।

**मकरन्दः**—इयमेव नेदीयसां प्रकृतिरभ्युदयानाम् ।

(माधवः स्वैरं लवङ्गिकास्थाने तिष्ठति ।)

**मालती**—सहि[1], अणुऊलदाए पसादं करेहि ।

**माधवः**—

सरले साहसरागं परिहर रम्भोरु मुञ्च संरम्भम् ।
विरसं विरहायासं सोढुं तव चित्तमसहं मे ॥ १० ॥

**मालती**—सहि[2], अलङ्घणिज्जो दे मालदीपणामो ।

---

१. सखि, अनुकूलतया प्रसादं कुरु ।

२. सखि अलङ्घनीयस्ते मालतीप्रणामः ।

---

रोऽयं त्वदागमनस्येति हस्तसंज्ञया बोधयतीति ॥ **माधवः** । परवानस्मि पराधीनः कृतोऽस्मि साध्वसेन वेपथुस्तम्भादिना सात्त्विकेन, न तु भयेन । तस्येदानीमनुचितत्वात्तेन शङ्कामात्रं साध्वसशब्देन विवक्षितम् । शङ्कया च स्तम्भादयो लक्ष्यन्त इति ग्राह्यम् । मालतीसमीपे लवङ्गिकाधिष्ठिते प्रदेशे स्थातुं परवानधीनोस्मीति ॥ **मकरन्दः**—**इयमिति** । नेदीयसामतिसंनिहितानां चिराभिलषितानामभ्युदयानां प्रियाप्राप्तिप्रभृतीनामभीष्टानामियमेव प्रकृतिः स्वभावः । यत्स्तम्भप्रलयवेपथुप्रभृतिसात्त्विकाविर्भावकृतं पारवश्यमित्यर्थः । एतच्च प्रकृतोपयोगित्वेन वञ्चनादधिबलं नामाङ्गम् । यथा—'चेष्टया सातिसंधानं वदन्त्यधिबलं हि तत्' ॥ **मालती** । सखि, अनुकूलतया प्रसादं कुरु । मरणमभिजानीहीत्यर्थः । अथ माधवो लवङ्गिकात्वमिवापन्नस्तस्याश्च स्वस्य च धारणं प्राकृतसंस्कृतयोः समानरूपं वाक्यं प्रयुङ्क्ते—**सरल इति** । सरले ऋजुबुद्धे । रम्भोरु । 'ऊरूत्तरपदादौपम्ये' इत्यूङ् । साहसे मरणोद्योगे रागमिच्छां परिहर परित्यज । संरम्भं मुञ्च । यतस्तव विरहायासं वियोगदुःखं विरसमत्यन्तविनाशरूपं मम हृदयं सोढुमसहमक्षममिति तत्समत्वादेतेषां शब्दानां प्राकृतसंस्कृतयोः समानं रूपम् । यथाह—'तत्समं तद्भवं देशीत्यनेकः प्राकृतक्रमः' इति । न चात्र भाषाश्लेषभ्रान्तिः कार्या । वाच्यभेदाभावाच्छ्लेषत्वानुपपत्तेः । न च लवङ्गिकामाधवयोर्वक्त्रोर्भेदाद्वाच्यभेदोऽप्यस्त्येवेति वाच्यम् । माधवस्यात्र वक्तृत्वात्किंतु हठादेव लवङ्गिकाबुद्धितिरोधानेन स्वप्रज्ञापनेन वैलक्षण्यान्निःशङ्कं स्वमनोगतसर्वस्वनिवेदनं न कुर्यादिति लवङ्गिकावाच्यमेवार्थं तदुचितैरेव शब्दैर्माधवः प्रतिपादितवानित्येकमेव वाक्यमेक एवार्थ इति न श्लेषावकाश इति ॥ १० ॥ **मालती** । अलङ्घनीयस्ते मालत्याः प्रणामः ॥ पूर्ववदेव माधवस्तत्समैरेव शब्दैर्लवङ्गिकेवाह—

**माधवः—**

किं वा भणामि विच्छेददारुणायासकारिणि।
कामं कुरु वरारोहे देहि मे परिरम्भणम्॥ ११॥

**मालती—**(सहर्षम्।) [1]कहं अणुगहीदह्मि। (उत्थाय।) इअं आलिङ्गामि। दंसणं उण वाफप्पीडणेण पिअसहिआए पच्चक्खं ण लभिअदि। (आलिङ्ग्य सानन्दम्।) सहि, कठोरकमलगब्भपह्मलो अण्णारिसो एव्व दे अज्ज णिव्वावेदि मं सरीरप्फंसो। (सास्रम्।) किं अ मौलिविनिवेसिअअञ्जली मह वअणेण विण्णवेहि तं जणम्। जह ण मए मन्दभाआए विकसन्तसदपत्तलच्छीविलासहारिणो मुहचन्दमण्डलस्स सच्छन्ददंसणेण संभाविदो चिरं लोअणमहोसवो।

---

१. कथमनुगृहीतास्मि। इयमालिङ्गामि। दर्शनं पुनर्वाष्पोत्पीडनेन प्रियसख्याः प्रत्यक्षं न लभ्यते। सखि, कठोरकमलगर्भपक्ष्मलोऽन्यादृश इव तेऽद्य निर्वापयति मां शरीरस्पर्शः। किं च मौलिविनिवेशिताञ्जलिर्मम वचनेन विज्ञापय तं जनम्। यथा न मया मन्दभाग्यया विकसच्छतपत्रलक्ष्मीविलासहारिणो मुखचन्द्रमण्डलस्य स्वच्छन्ददर्शनेन संभावितश्चिरं लो-

---

**किं वेति**। विच्छेदेनात्यन्तविप्रयोगेण दारुणो य आयासो मरणोद्योगात्मकं दुष्करं कर्म तत्कारिणीति संबोधनम्। ईदृशीं त्वां किं वा भणामि कथं म्रियस्वेत्यनुज्ञां दद्याम्। न कथंचिन्मरणानुज्ञां कर्तुं शक्नोमीत्यर्थः। तस्मात्त्वमेव 'ईप्सितार्थस्थिरनिश्चयं मनः' इति नीत्या कामं स्वाभिलषितं कुरु। हे वरारोहे, मम परिरम्भणं देहि। मामालिङ्गेत्यर्थः। अथ च माधवौचित्येन कामं मनोरथं कुरु निष्पादय। वरारोहे चिरस्य प्रार्थितं परिरम्भणं देहीत्यपि प्रतीयते। लवङ्गिकया प्रशंसार्थं वरारोहे, इति सखीसंबोधनं युक्तमेवेति॥ ११॥ अथ मालती कामं कुर्विति सख्या अनुमतिं मत्वाह—**मालती**। कथमनुगृहीतास्मीति। सख्येति शेषः। इयमालिङ्गामि। दर्शनं बाष्पोत्पीडनेनाश्रूद्गमेन प्रियसख्याः प्रत्यक्षं न लभ्यते। एवं लवङ्गिकाभ्रमेण माधवमालिङ्ग्यामृतसरसीव निमग्ना निरतिशयं निर्वृतिविशेषमनुभवन्त्याह—सखि, कठोरकमलगर्भपक्ष्मलोऽन्यादृश एव तेऽद्य निर्वापयति मां शरीरस्पर्शः। कठोरकमलगर्भवत्परिणतपङ्कजबीजकोशवत्पक्ष्मलो रोमाञ्चकञ्चुकितः। इदानीं कृतमरणनिश्चया सख्या चानुमतिं कृतां मन्यमाना प्रियतमं प्रतिवक्तव्यं वाचिकं संदिशति—किं च। मौलिविनिवेशिताञ्जलिर्मम वचनेन विज्ञापय तं जनम्। तं जनमित्यनेन तस्य पतित्वं निश्चित्य साक्षान्नामग्रहणानौचित्यं सूचयति। तेन च नाहं कन्यैव संस्थिता मन्मथेनैव माधवाय दत्ता तत्पत्न्येव केवलम्, तादृशेन पत्या सह संसारसौख्यान्यनुभवितुं

मुहा मणोरहेहिं अविरअविअम्भमाणदुव्वारदुक्खावेअवइअरुव्वत्तमाणबन्धणं धारिअं हिअअं । गमिआ अ वारंवारं सविसेसदूसहाआसदूमाविदसहीअणा सरीरसंदावा । कहं वि अदिवायिदा चन्दादपमलअमारुअप्पमुहा अणत्थपरम्पराओ । संपदं उण णिरासह्मि संउत्तेत्ति । तुए वि पिअसहि, सव्वदा सुमरिदव्वह्मि । एसा अ माहवसिरीहत्थणिम्माणमणोहरा बउलमाला मालदीणिव्विसेसं पिअसहीए दट्ठव्वा सव्वदा हिअएण धारणिज्जा अत्ति । (इति स्वकण्ठादुन्मुच्य माधवस्य हृदि बकुलमालां विन्यस्यन्ती सहसापसृत्य साध्वसोत्कम्पं नाटयति।)

**माधवः**—हन्त । (अपवार्य।)

एकीकृतस्त्वचि निषिक्त इवावपीड्य
निर्भुग्नपीनकुचकुड्मलयानया मे ।

---

चनमहोत्सवः । मुधा मनोरथैरविरतविजृम्भमाणदुर्वारदुःखावेगव्यतिकरोद्वर्तमानबन्धनं धारितं हृदयम् । गमिताश्च वारंवारं सविशेषदुःसहायासधूपायितसखीजनाः शरीरसंतापाः । कथमप्यतिवाहिताश्चन्द्रातपमलयमारुतप्रमुखा अनर्थपरम्पराः । सांप्रतं पुनर्निराशास्मि संवृत्तेति । त्वयापि प्रियसखी, सर्वदा स्मर्तव्यास्मि । एषा च माधवश्रीहस्तनिर्माणमनोहरा बकुलमाला मालतीनिर्विशेषं प्रियसख्या द्रष्टव्या सर्वदा हृदयेन धारणीया चेति ।

---

नास्ति मे भाग्यमिति, अत एव शरीरं त्यजामीति व्यज्यते । विज्ञापनाप्रकारमेवाह—यथा न मया मन्दभाग्यया विकसच्छतपत्रलक्ष्मीविलासहारिणो मुखचन्द्रमण्डलस्य ते स्वच्छन्ददर्शनेन संभावितश्चिरं लोचनमहोत्सवः । मुधा मनोरथैरविरतं विजृम्भमाणदुर्वारदुःखावेगव्यतिकरोद्वर्तमानबन्धनं धारितं हृदयम् । गमिताश्च वारंवारं सविशेषदुःसहायासधूपायितसखीजनाः शरीरसंतापाः । कथमप्यतिवाहिताश्चन्द्रातपमलयमारुतप्रमुखा अनर्थपरम्पराः । सांप्रतं पुनर्निराशा संवृत्तास्मीति विज्ञापयेत्यन्वयः । उद्वर्तमानबन्धनमुन्मूलितमूलमतिवाहिता दुःखेन गमिताः । एषा च माधवश्रीहस्तनिर्माणमनोहरा बकुलमाला मालतीनिर्विशेषं प्रियसख्या द्रष्टव्या सर्वदा हृदयेन धारणीया चेति वदन्ती स्वकण्ठादुन्मुच्य माधवहृदि विन्यस्यन्ती स्तनशून्यत्वव्यूढोरस्कत्वादिना पुरुषमधिगम्य पुरुषस्य चान्यस्य तत्रात्यन्तमशङ्कितत्वान्माधवस्यैव कामन्दकीप्रयत्नेन संनिधानसंभवात्तदितरशरीरस्पर्शे तादृशपरमनिर्वृतिसात्त्विकलज्जाशङ्कात्रासादिव्यभिचारिसंवलनोन्मेषाभावात्तदौचित्येन सहसापसृत्य साध्वसेनोत्कम्पं वेपथुमनुभावं च नाटयतीत्यर्थः । साध्वसं त्रासः । तल्लक्षणं च—'त्रासश्चित्तचमत्कार आकस्मिकभयादिभिः' इति । अनेन संभ्रमो नामाङ्गमुक्तम् । यथा—'शङ्कात्रासौ च संभ्रमः' इति ॥ **माधवः । एकीकृत**

कर्पूरहारहरिचन्दनचन्द्रकान्त-
निष्यन्दशैवलमृणालहिमादिवर्गः ॥ १२ ॥

**मालती**—अह्महे, लवङ्गिआए मालदी विप्पलद्धा ।

**माधवः**—अयि स्वचित्तवेदनामात्रवेदिनि परव्यसनानभिज्ञे, इयमुपालभ्यसे ।

उद्दामदेहपरिदाहमहाज्वराणि
संकल्पसंगमविनोदितवेदनानि ।
त्वत्स्नेहसंविदवलम्बितजीवितानि
किं वा मयापि न दिनान्यतिवाहितानि ॥ १३ ॥

**लवङ्गिका**—सहि, उवालम्बणिज्जं उवालद्धासि ।

---

१. अहो, लवङ्गिकया मालती विप्रलब्धा ।
२. सखि, उपालम्भनीयमुपालब्धासि ।

---

**इति** । गाढालिङ्गनवशान्निर्भुग्नपीनकुचकुड्मलयानयावपीड्य गाढमालिङ्ग्य मे त्वचि कर्पूरादिसंतापनिर्वापकशीतलद्रव्यवर्ग एकीकृत एकरसतां प्राप्तो निषिक्त इव । आलिङ्गनं कृतवत्या कर्पूरादिरसनिषेकः कृत इवेत्यालिङ्गनक्रियायां निषेकक्रियाध्यवसायात्प्रतीयमानसंतापनिर्वापणनिमित्तक्रियया स्वभावोत्प्रेक्षालंकारः। एष संचिन्त्यमानार्थप्राप्तिरूपः क्रमः । यथा—'क्रमस्तु चिन्तितावाप्तिः' इति ॥१२॥ **मालती** । अहो, लवङ्गिकया मालती विप्रलब्धा वञ्चिता । स्वाभिलषितसंपादनेऽप्याकारगोपनार्थं वञ्चनमित्युक्तम् । अनेनावहित्थाख्यो व्यभिचारी सूचितः । यथा—'अवहित्था तु लज्जादेर्हर्षाद्याकारगोपनम्' इति ॥ **माधवः** । अयीति संबोधने । स्वमनोव्यथामेव त्वं प्रकटयसि न तु परजनमनोरुजं जानासि । यतो मदालिङ्गनेन वञ्चितमात्मानं मन्यसे । न पुनर्यथा मे तथैवास्यापि समः सुदुःसहः संतापः तन्मदालिङ्गनेनास्य भवतु संतापनिर्वाप इत्यनुकम्पा त्वयि दृश्यते । तस्मात्त्वं पुरत एवोपालभस इत्यर्थः । स्वव्यथामेवाह—**उद्दामेति** । उद्दामः प्रौढो देहपरिदाह एव महाज्वरो येषु तानि । तथा मनोरथमात्रकल्पितेनापि त्वत्समागमेन विनोदितापनोदिता वेदना त्वद्विरहजन्या व्यथा येषु तानि । तथा 'अस्ति मालत्या मयि स्नेहः' इति संवेदनमात्रेणावलम्बितं कथंचित्त्वत्स्नेहः कदाचित्फलिष्यतीत्याशया विधृतं जीवितं येषु तादृशानि दिनानि मयापि त्वयेव न किमतिवाहितानि दुःखेन गमितानि । यादृशी तव विरहव्यथा तादृश्येव ममापि । तत्तु केवलं त्वया विदितमेतन्न विदितमित्यर्थः । एतत्तु परस्परानुरागबीजसमुत्क्षेपादाक्षेपो नामाङ्गम् । यथा—'गर्भबीजसमुत्क्षेपादाक्षेपः परिकीर्तितः' इति ॥१३॥ **लवङ्गिका** । सखि, उपालम्भनीयमु-

**कलहंसः**—[1]अहो सरसरमणिज्जदा संविहाणस्स ।

**मकरन्दः**—महाभागे, एवमेतत् ।

त्वं वत्सलेति कथमप्यवलम्बितात्मा
सत्यं जनोऽयमियतो दिवसाननैषीत् ।
आबद्धकंकणकरप्रणयप्रसाद-
मासाद्य नन्दतु चिराय फलन्तु कामाः ॥ १४ ॥

**लवङ्गिका**—[2]महाणुहाव, हिअए वि अप्पडिहदसअंगाहसाहसो अअं जणो किं दाणिं करग्गहणे विआरेदि ।

**मालती**—[3]हद्धि, कण्णआजणविरुद्धं किं वि उवण्णस्सदि ।

**कामन्दकी**—(प्रविश्य ।) पुत्रि कातरे, किमेतत् ।

(मालती कम्पमाना कामन्दकीमालिङ्गति ।)

**कामन्दकी**—(तस्याश्चुबुकमुन्नमय्य ।) वत्से,

---

१. अहो सरसरमणीयता संविधानस्य ।

२. महानुभाव, हृदयेऽप्यप्रतिहतस्वयंग्राहसाहसोऽयं जनः किमिदानीं करग्रहणे विचारयति ।

३. हा धिक्, कन्यकाजनविरुद्धं किमप्युपन्यस्यति ।

---

पालब्धासि । युक्तमेवानेन त्वदुपालम्भनमित्यर्थः॥**कलहंसः**। अहो सरसरमणीयता संविधानस्य॥**मकरन्दः**।एतन्माधवेनोक्तमेवं सत्यमेव । तदेवाह–**त्वं वत्सलेति**। वत्सला प्रेमवती स्वस्मिन्नित्येतावतैव कथमप्यतिक्लेशेनावलम्बितात्मा विधृतजीवितोऽयं जन इयतो दिवसाननैषीदतिवाहितवानिति सत्यमेव त्वत्स्नेहादन्यो नास्य प्राणधारणे कश्चिद्धेतुः । अतस्त्वयैवास्य जीवितरक्षणे निःशङ्कं प्रवर्तितव्यम्, न कामन्दक्यादिषु भारो निक्षेप्तव्य इति भावः । एतदेवाह—आबद्धकंकणस्य करस्य यः प्रणयः परिग्रहः स एव प्रसादोऽनुग्रहस्तमासाद्य प्राप्यासौ नन्दतु । तथा चिराय चिरेण कामा मे मनोरथाश्चिरकालकाङ्क्षिता युवयोः फलन्त्विति ॥ १४॥**लवङ्गिका**। महानुभाव,हृदयेऽप्यप्रतिहतस्वयंग्राहसाहसोऽयं जनः किमिदानीं करग्रहणे विचारयति। येन माधवेन हृदये स्वयमेव गृह्यमाणेन निवारितवती केवलमयं महान्पुरुषार्थ इत्यङ्गीकृतवती सा करेण करे स्वयं गृह्यमाणेऽपि न विचारयेत्, तस्मान्निःशङ्कं स्वयमेवास्याः करं गृहाणेत्याशयः ॥ **मालती** । हा धिक्, कन्यकाजनविरुद्धं किमप्युपन्यस्यति । किमपीति गुरुजनाननुमतं स्वकरग्रहणं व्यज्यते ॥ **कामन्दकी** । प्रविश्य । वदतीति शेषः । पुत्रीति त्वत्परिणयने मातृत्वादस्त्येव ममाधिकार इति व्यङ्ग्यम् । कातरे कुलकन्यकाजनविरुद्धं कथं कुर्यामिति दुःशङ्कोद्विग्नमानसे कथंचिद्दैवानुग्रहादुपनतेऽवसरे शीघ्रविधेये कृत्य एतद्विलम्बनं किंनिमित्तम् । अवि-

पुरश्चक्षूरागस्तदनु मनसोऽनन्यपरता
तनुग्लानिर्यस्य त्वयि समभवद्यत्र च तव ।
युवा सोऽयं प्रेयानिह सुवदने मुञ्च जडतां
विधातुर्वैदग्ध्यं विलसतु सकामोऽस्तु मदनः ॥ १५ ॥

**लवङ्गिका**—[1]भअवदि, किसणचउद्दसीरअणिमसाणसंचारणिव्वूढविसमववसाअणिट्ठाविदपचण्डपाखण्डदोद्दण्डसाहसो साहसिओ क्खु एसो । अदो पिअसही उक्कम्पिदा ।

**कामन्दकी**—लवङ्गिके, स्थाने खल्वनुरागोपकारयोर्गरीयसोरुपन्यासः ।

**मालती**—हा[2] ताद, हा अम्ब ।

---

१. भगवति, कृष्णचतुर्दशीरजनीस्मशानसंचारनिर्व्यूढविषमव्यवसायनिष्ठापितप्रचण्डपाषण्डदोर्दण्डसाहसः साहसिकः खल्वेषः । अतः प्रियसख्युत्कम्पिता ।

२. हा तात, हा अम्ब ।

---

चार्यैव शीघ्रमस्य पाणिं गृहाणेति भावः ॥ **पुर इति** । यस्य त्वयि विषये यत्र यस्मिन्विषये च तव पूर्वं चक्षुःप्रीतिस्तदनु चित्तासङ्गस्तदनु संकल्पादिक्रमेण तनुग्लानिश्चेत्याद्या मदनावस्थाः प्रादुरासन् । अत्र मनःसङ्गकार्श्यानि वाच्यानि मनसोऽनन्यपरत्वेन तच्चिन्तैकव्याप्टतत्वेन संकल्पजागरकार्श्यतनुग्लान्यरतयो व्यज्यन्ते, स एवायं युवा प्रेयानिति वयसा प्रेम्णा चानुरूपत्वं ध्वन्यते । तस्मादिहास्मिन्सुवदने सर्वदा सुवदने जडतामप्रतिपत्तिं मुञ्च । विधातुर्वैदग्ध्यं भवदुभयनिर्माणनैपुण्यं भवदुभयसमागमेनैव विलसतु सफलं भवतु। मदनश्च सकामो भवतु । जाड्यं विहाय यावदुन्मदाद्यवस्थान्तराणि नोल्लसन्ति तावदेव प्रेयांसं वृणीष्वेति भावः। जाड्यं च व्यभिचारिभावः। यथा—'क्रियास्वपाटवं जाड्यं चिन्तोत्कण्ठाभयादिभिः' इति ॥ १५ ॥ **लवङ्गिका** । भगवति, कृष्णचतुर्दशीरजन्याम् । तस्यामेव साहसकर्मप्रसिद्धेरागमोक्तत्वात् । स्मशानसंचारेण निर्व्यूढो निर्वर्तितो महामांसविक्रयरूपो विषम आर्यजनानुचितो व्यवसायो येन । अनेन मालत्यां माधवस्य प्रकृष्टोऽनुरागबन्ध उक्तः स चासौ निष्ठापितं निराघाटितं प्रचण्डपाषण्डदोर्दण्डसाहसं मालतीवधरूपं कर्म येन स इत्यनेन जीवितत्राणेनोपकारातिशय उक्तः। साहसिकः खल्वेषः । अतः प्रियसख्युत्कम्पिता । अत्र लवङ्गिका तस्यां निशीथिन्यामेकाकी भूत्वात्यन्तजुगुप्सितनृमांसविक्रयसाहसरसिको भीषणपाखण्डवधाद्रौद्रप्रकृतिरविमृश्यकारी चासौ स्वयमेवानया दृष्टः, तदस्मिन्बालाया युक्तैव जडता कम्पमानता चेति माधवमुद्दिश्य नर्मोक्तिव्याजेन निरतिशयप्रेम्णा परमोपकारिणि चास्मिन्नुचितमेवास्मिन्नवसरे जाड्यादिकमस्या इति वैपरीत्येनोपालभत इति बोद्धव्यम्॥ **मालती—हा तातेति** । एवंविधानुचितकारिण्यहं कथं पुनरपि त्वन्मु-

**कामन्दकी**—वत्स माधव ।

**माधवः**—आज्ञापय ।

**कामन्दकी**—इयमशेषसामन्तमस्तकोत्तंसपरागरञ्जितचरणाङ्गुलेरमात्यभूरिवसोरेकापत्यरत्नं मालती भगवता सदृशसंयोगरसिकेन वेधसा मन्मथेन मया च तुभ्यं दीयते । (इति बाष्पं विसृजति ।)

**मकरन्दः**—फलितं हि तर्हि भगवतीपादप्रसादेन ।

**माधवः**—तत्किमित्यतिबाष्पायितमाननं भगवत्याः ।

**कामन्दकी**—(चीराञ्चलेन नेत्रे परिमृज्य ।) वत्स, किमपि कल्याणं वक्तुकामास्मि ।

**माधवः**—तत्किम् ।

**कामन्दकी**—विज्ञापयामि ।

**माधवः**—आज्ञापय ।

**कामन्दकी**—

परिणतिरमणीयाः प्रीतयस्त्वद्विधाना-
महमपि तव मान्या हेतुभिस्तैश्च तैश्च ।

---

खं विलोकयेयमिति शेषः ॥ **कामन्दकी—इयमिति** । अशेषेत्यनेन निरतिशयैश्वर्यसंपन्नस्यापत्यं न दरिद्रस्येति, तस्याप्येकत्वेनातीव प्रेमभाजनं तदपि रत्नमिव रत्नं सौन्दर्याद्यनेकगुणशाल्यपत्यमियं मालतीत्यनेनास्यामनादरस्त्वया न कथंचिदपि कर्तव्य इति सूचयति । सेयं प्रथमं सदृशयोरन्योन्यानुरूपयोर्युवयोः संयोगरसिकेन वेधसा स खलूत्पादयन्नेवेयमस्या अयं चास्या इति निर्णयं भालतले लिखितवान् । तदनन्तरं मन्मथेनाकस्मादेव द्वयोर्मनोघटकेन मया च तदुचितमानुषप्रयत्नविधायिन्या तुभ्यं दीयते ॥ रोदनं च कन्याप्रदानानन्तरं मातृत्वाद्वात्सल्याच्च ॥ बाष्पायितं बाष्पोद्गमनं कृतम् । 'बाष्पोष्मभ्यामुद्गमने' इति णिजन्ताद्भावे क्तः ॥ विज्ञापयामीत्युक्तिः कामन्दक्याः कन्याप्रदानमेव तत्कैङ्कर्यमिति नीत्या विनयद्योतनार्थम् ॥ माधवस्तु गुरुजनौचित्येनाह—आज्ञापयेति ॥ **कामन्दकी—परिणतीति** । त्वद्विधानां महाकुलीनत्वादिगुणशालिनां महानायकानां प्रीतयः स्नेहाः परिणतिरमणीयाः परिपाकेन मनोहराः न तु क्षुद्रजनस्नेहवत्परिणतिविरसाः । अतो न मया किंचिदपि वक्तव्यम् । तथाहमपि तैस्तैर्हेतुभिर्निमित्तैः पितृस्नेहवात्सल्यादिभिर्मान्यानुल्लङ्घ्यवचना । तत्तस्मादिहास्यां सुवदनायाम् । हे तात । वात्सल्यातिशयादपत्येऽपि तातशब्दः प्रयोज्यः । स तादृशः परिचयो गाढस्नेह एव करुणा कृपा तस्याः सकाशान्मा विरंसीर्विरतो मा भूः । अस्यां स्नेहानुबन्धेनैव मयि त्वया कृपा कृते-

तदिह सुवदनायां तात मत्तः परस्मा-
त्परिचयकरुणायाः सर्वथा मा विरंसीः ॥ १६ ॥

(इति पादयोः पतितुमिच्छति ।)

**माधवः**—अहो, वात्सल्यादतिक्रामति प्रसङ्गः ।

**मकरन्दः**—भगवति,

श्लाघ्यान्वयेति नयनोत्सवकारिणीति
निर्व्यूढसौहृदरसेति गुणोज्ज्वलेति ।
एकैकमेव हि वशीकरणं गरीयो
युष्माकमेवमियमित्यथ किं ब्रवीमि ॥ १७ ॥

**कामन्दकी**—वत्स माधव ।

**माधवः**—आज्ञापय ।

**कामन्दकी**—स्वीक्रियतामियम् ।

**माधवः**—स्वीकरोमि ।

**कामन्दकी**—वत्स माधव, वत्से मालति ।

**माधवः**—आज्ञापय ।

**मालती**—आणवेदु[1] भअवदी ।

---

१. आज्ञापयतु भगवती ।

---

त्यर्थः । विरंसीरिति 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । रमिश्च श्यनि पठ्यते मनिरित्यनिज् त्कम्(?) । माङ्योगादडागमप्रतिषेधः । विनाव्यवधानादडागमप्रतिषेधो नास्तीत्यशाब्दिकोक्तं हेयम् । 'मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः । प्रश्रानुकला तु कौन्तेय पिबस्व च हरस्व च ॥' इत्यादौ बहुव्यवधानेऽपि प्रतिषेधदर्शनात् । ॥१६॥इति पादयोः पतितुमिच्छति ॥**माधवः**। वात्सल्यादपत्यप्रेम्णः प्रसङ्गः प्रस्तावोऽतिक्रामत्यौचित्यमुल्लङ्घयते । यत्सकललोकवन्द्या भगवती स्वयं मत्प्रणामं कर्तुमिच्छति । अनुचितकर्मणि प्रवर्तत इति भावः ॥ **मकरन्दः—भगवतीति । श्लाघ्येति** । श्लाघ्यान्वया महाकुलप्रसूतेति हेतोः । तथा नयनोत्सवकारिणीति निरतिशयसौन्दर्यशालिनीति । तथा निर्व्यूढो निर्वाहं गमितः सौहृदरसः सौहार्दसारभूता रतिर्यया सा तादृशीति । तथा गुणैरन्यैः सौशील्यादिभिरपरिगणनीयैरुज्ज्वला निर्मलेति । एतेष्वेकैकमेवान्यनिरपेक्षं गरीयोनतिक्रमणीयं वशीकरणमेतदायत्तीभावसाधनम् । तदुपरि युष्माकं निरुपाधिकहिताचरणप्रवृत्तानां सर्वलोकमान्यानामपीयमेवंविधा दृश्यते । वात्सल्यातिशयाच्छिशोर्माधवस्य प्रणामश्चिकीर्षित इत्युक्तेऽथ किमहं ब्रवीमि । इतः परमस्यामादरातिशयानुबन्धने किं वक्तव्यमित्यर्थः ॥१७॥ अ-

allurement

**कामन्दकी—**

प्रेयो मित्रं बन्धुता वा समग्रा
सर्वे कामाः शेवधिर्जीवितं वा ।
स्त्रीणां भर्ता धर्मदाराश्च पुंसा-
मित्यन्योन्यं वत्सयोर्ज्ञातमस्तु ॥ १८ ॥

**मकरन्दः**—अथ किम् ।

**लवङ्गिका**—जह[1] तुम्हे आणवेत्थ ।

**कामन्दकी**—वत्स मकरन्द, अनेनैव वैवाहिकेन मालतीनेपथ्येनापवारितः प्रवर्तस्व परिणयायात्मनः । (इति पटलकमर्पयति।)

**मकरन्दः**—यदाज्ञापयसि, यावदितश्चित्रयवनिकामन्तर्धाय नेपथ्यं धारयामि । (तथा करोति ।)

**माधवः**—भगवति, सुलभमपि बह्वनर्थकमतिसंकटमेतद्वयस्यस्य ।

**कामन्दकी**—कस्त्वमस्यां चिन्तायाम् ।

**माधवः**—एवं भगवत्येव जानाति ।

---

१. यथा यूयमाज्ञापयथ ।

---

थोभयोः साधारणं धर्म्यमुपदेशमाह—**प्रेय इति**। प्रेयः प्रियतमः। मित्रं सखा। तथा समग्रा सकला बन्धुता बन्धुसमूहः सर्वेऽखिलाः काम्यन्त इति कामा विषयास्तथा। शेवधिर्निधिः। किं बहुना जीवितं वा स्त्रीणां भर्तैव, पुंसां च धर्मदाराः। एवं स्निग्धमित्राणीत्येतद्धर्मरहस्यं लोकशास्त्रसिद्धं वत्सयोर्ज्ञातं मनोगतं सर्वथास्तु। एतावत्सर्वदानुसंधेयमित्यर्थः। वत्सयोरित्यत्र 'पुमान्स्त्रिया' इत्येकशेषः। उभयोर्वात्सल्यस्य तुल्यत्वाद्वत्सशब्दप्रयोगः ॥१८॥ **मकरन्दः**। अथ किम्। एवमेवैतदित्यर्थः॥ **लवङ्गिका**। यथा यूयमाज्ञापयथ॥ **कामन्दकी**। एवमत्र विवाहमङ्गलं निर्वर्त्यातः परं नन्दनवञ्चनार्थं कृतकमालतीवेषं मकरन्दं मदयन्तिकालाभलोभादभ्युपगतस्त्रीभावं सज्जीकुर्वन्त्याह—**वत्सेति**। इत आरभ्य मकरन्दवृत्तान्तः पताकेति पूर्वमेवोक्तम्। मालत्यर्थं राज्ञा प्रेषितेन नेपथ्येन मङ्गलालंकारेण। परिणयाय नन्दनपरिणयाय मदयन्तिकापरिणयाय चेत्यर्थः। चित्रयवनिकां चित्रपटनिर्मितां तिरस्करिणीम्। अन्तर्धानं स्त्रीसंनिधौ वस्त्रादिपरिधाने स्त्रीजनोचितेऽपाटवात्परिधानचलनशङ्कया॥ **माधवः**। सुलभमपि बह्वनर्थकमनेकप्रत्यवायमतिसंकटं सुदुष्करं कर्म नन्दनवञ्चनात्मकं वयस्यस्य। 'शुभमपि' इत्यपि पाठः॥ **कामन्दकी** **कस्त्वमिति**। अस्यां चिन्तायाम्। प्रभूतानर्थकं सुदुष्करं चेदं कर्म, कथमस्य रक्षिसहस्राकुले नन्दनभवने प्रवेशनिर्गमौ, यदि राजा दैवाद्विजानीयात्तदानर्थः, किं

**मकरन्दः**—(प्रविश्य विहसन् ।)

(सर्वे सविस्मयं सकौतुकं पश्यन्ति ।)

**माधवः**—(गाढं मकरन्दं परिष्वज्य ।) भगवति, कृतपुण्य एव नन्दनः । यतः प्रियवयस्यमीदृशं मनसा मुहूर्तमपि कामयिष्यति ।

**कामन्दकी**—वत्सौ मालतीमाधवौ, इतो निर्गत्य वृक्षगहनेन गम्यतामुद्वाहमङ्गलार्थम् । अस्ति तत्र दीर्घिकायाः पश्चादुद्यानवाटः । सुविहितं तत्रैव वैवाहिकद्रव्यजातमवलोकितया भूयश्च ।

गाढोत्कण्ठकठोरकेरलवधूगण्डाच्छपाण्डुच्छदै-
स्ताम्बूलीपटलैः पिनद्धफलितव्यानम्रपूगद्रुमाः ।
कक्कोलीफलजग्धमुग्धविकिरव्याहारिणस्तद्भुवो
भागाः प्रेङ्खितमातुलुङ्गवृतयः प्रेयो विधास्यन्ति वाम् ॥१९॥

अतस्तत्रैव मदयन्तिकामकरन्दयोर्यावदागमनं स्थातव्यम् ।

**माधवः**—(सहर्षम् ।) कल्याणान्तरावतंसा कल्याणसंपदुपरिष्टाद्भवतु ।

**कलहंसः**—दिट्ठिआ[1] इदं वि पिअं णो हविस्सदि ।

---

१. दिष्टया इदमपि प्रियं नो भविष्यति ।

---

वा तव भवेदित्येवंरूपायाम् । कस्त्वं को वा तव भारो मयि वर्तमानायामिति भावः। **गाढोत्कण्ठेति** । गाढया प्रवृद्धयोत्कण्ठया प्रियानवाप्तिजनितेन स्मरदशानिमित्तेनौत्सुक्येन व्यभिचारिणा कठोरः प्रौढो यः केरलवधूनां कपोलस्तद्वदच्छाः पाण्डुवर्णाश्छदाः पर्णानि येषां तैस्ताम्बूलीनां नागवल्लीनां पटलैः समूहैः पिनद्धाः संबद्धाः फलिता अत एव व्यानम्राः फलभारावनताः पूगद्रुमाः क्रमुकवृक्षा येषु तथा । कक्कोलीफलानां जग्धेन भक्षणेन । भावे क्तः । मुग्धा मनोहरा ये विकिराणां पक्षिणां व्याहारा रुतानि तद्वन्तस्तथा । प्रेङ्खिताश्चलिताः फलापादनार्थं मातुलुङ्गवृतयो बीजपूरसमूहा येषु तादृशास्तद्भुवोऽसद्विहारिकाया भुवो भागा अवकाशा वां युवयोः प्रेयः प्रीतिं विधास्यन्तीति । अत्र नागवल्लीलतापूगद्रुमसंश्लेषणं मिथुनान्तरदर्शनमुद्दीपनं चायत्नसिद्धसंभोगसाधनताम्बूललाभश्च पक्षिणां कोलाहलेन नान्यैर्भवद्वचनाकर्णनं बीजपूरकुञ्जसंकटत्वादन्येषामप्रवेशयोग्यत्वमदृश्यत्वेन तेनावस्थानं च भवतीत्यादि व्यज्यते ॥ १९ ॥ मदयन्तिकागमनं यावदिति । तत्र युवयोर्मदयन्तिकामकरन्दयोश्च युगपदेव विवाहो निर्वर्तयिष्यत इत्याशयः ॥ **माधवः** । कल्याणान्तरावतंसा कल्याणान्तरालंकारा कल्याणसंपन्मालतीप्राप्तिलक्षणमङ्गलसमृद्धिः ॥ **कलहंसः** । दिष्ट्या इदमपि प्रियं नो भवि-

**कामन्दकी**—कथं संदेहो भवतः।

**लवङ्गिका**—सुदं[1] पिअसहीए।

**कामन्दकी**—वत्स मकरन्द, भद्रे लवङ्गिके, इतः प्रतिष्ठामहे।

**मालती**—सहि,[2] तुए वि गन्दव्वं।

**लवङ्गिका**—(विहस्य।) संपदं[3] क्खु अह्मे एत्थ ओसरह्म।

(इति निष्क्रान्ताः कामन्दकीलवङ्गिकामकरन्दाः।)

**माधवः**—अयमिदानीमहम्।

आमूलकण्टकितकोमलबाहुनाल-
मार्द्राङ्गुलीदलमनङ्गनिदाघतप्तः।
अस्याः करेण करमाकलयामि कान्त-
मारक्तपङ्कजमिव द्विरदः सरस्याः॥ २०॥

(इति निष्क्रान्ताः सर्वे।)

**इति महाकविश्रीभवभूतिविरचिते मालतीमाधवे षष्ठोऽङ्कः।**

१. श्रुतं प्रियसख्या।
२. सखि, त्वयापि गन्तव्यम्।
३. सांप्रतं खलु वयमत्रापसरामः।

ध्यति। यन्निस्तीर्णविपन्मदयन्तिकासहितो मकरन्दोऽस्माभिर्द्रष्टव्यः॥ **लवङ्गिका**। श्रुतं प्रियसख्या। भगवत्या विहारिकागमनाय मकरन्दागमनप्रतीक्षणाय च यदुक्तं तच्छ्रुतं किम्। तदेतत्कुरुध्वेत्यर्थः॥ **मालती**। सखि, त्वयापि गन्तव्यम्। मां विसृज्येति शेषः॥ **लवङ्गिका**। सांप्रतं खलु वयमेव शिष्टा बाह्याः। त्वं भर्त्रा सह सुखमास्स्वेति भावः॥ **माधवः**। **आमूलेति**। अनङ्ग एव निदाघो घर्मसमयः संतापकारित्वात्। तेन तप्तोऽयमहमिदानीं निदाघतप्तोद्विरद इवामूलं कण्टकितो रोमाञ्चकञ्चुकितः संजातकण्टकश्च कोमलो बाहुनालो नालसदृशो बाहुर्यस्य तम्। तथार्द्राः स्वेदाख्यसात्त्विकभाववशात्सलिलसंबन्धवशाच्चाङ्गुल्यो दलानीव दलसदृशोऽङ्गुल्यो यस्य तम्। अस्या मालत्याः सारस्या इव कान्तं करमारक्तपङ्कजं कोकनदमिव करेण हस्तेन शुण्डादण्डेन चाकलयामि गृह्णामीति। उपमालंकारः॥ २०॥

भवभूतिकवेर्वाचः स्वदन्ते रसरञ्जिताः।
सुमनोभ्यः सुधास्यन्दबन्धमाधुर्यबन्धुराः॥

**इति श्रीमद्भारद्वाजकुलतिलकपर्वतनाथयायजूकनन्दनत्रिपुरारिसूरिविरचितायां मालतीमाधवभावप्रदीपिकायां षष्ठाङ्कविवरणम्॥**

# सप्तमोऽङ्कः ।

( ततः प्रविशति बुद्धरक्षिता । )

**बुद्धरक्षिता**—अम्हहे, सुसिलिट्ठमालदीणेवच्छलच्छीविप्पलद्धणन्दणकरग्गहो अमच्चभूरिवसुमन्दिरे भअवदीए संविहाणेण खेमेण गोवाइदो अज्ज मअरन्दो । अज्ज अह्मे णन्दणावासं उवगदा । अदो भअवदी नन्दणं आपुच्छिअ णिआवसहं गआ । अअं अ णववहूघरप्पवेसविरइदाकालकोमुदीमहूसवप्पमत्तपज्जाउलासेसपरिअणो पओसो अणुऊलइस्सइ अज्ज णो व्ववसिदं । संपदं अ तुवरन्तकामो

---

१. अहो, सुश्लिष्टमालतीनेपथ्यलक्ष्मीविप्रलब्धनन्दनकरग्रहोऽमात्यभूरिवसुमन्दिरे भगवत्याः संविधानेन क्षेमेण गोपायितोऽद्य मकरन्दः । अद्य वयं नन्दनावासमुपगताः । अतो भगवती नन्दनमापृच्छ्य निजावसथं गता । अयं च नववधूगृहप्रवेशविरचिताकालकौमुदीमहोत्सवप्रमत्तपर्याकुलाशेषपरिजनः प्रदोषोऽनुकूलयिष्यत्यद्य नो व्यवसितम् । सांप्रतं च त्वरमाणकामः

---

पार्वतीचुम्बितं शंभोर्जयत्यलिकलोचनम् ।
जिष्णोर्मनसिजाग्नेन लज्जयेव निमीलितम् ॥

कविरिदानीमङ्कान्तरमारभते—**तत इत्यादिना** । कामन्दक्या हि निसृष्टार्थदूतीव्यापारं मालतीमाधवकृतकपरिणयलक्षणफलपर्यवसितं संपाद्य कामन्दकीनियुक्ताया बुद्धरक्षिताया अपि तद्व्यापारे 'नियुक्तैव हि मया तत्र प्रियसखी बुद्धरक्षिता' इति प्राक्सूचितं मदयन्तिकामकरन्दसंघटनेन सफलयितुं कवेरङ्कावतार इति द्रष्टव्यम् ॥ **बुद्धरक्षिता ।** सुश्लिष्टकृतिमत्त्वेनानाशङ्कनीया मालतीनेपथ्यलक्ष्मीस्तया विप्रलब्धेन नन्दनेन कृतः करग्रहो यस्य सः । अमात्यभूरिवसुमन्दिरे भगवतीवचनसंविधानैः 'समागतेयं मालती समभ्यर्च्य नगरदेवताम्' इत्यादिवचनैर्मालतीसमुचिततत्तदुपचारसंपादनादिव्यापारैश्च क्षेमेण केनचिदप्यलक्षितत्वादनुपद्रवेण गोपायितो रक्षितो राज्ञस्तदनुचरेभ्यः परित्रातो मकरन्दः । यथा विज्ञाय तैर्न प्रह्रियते तथा कृत इत्यर्थः । अनेन च कृतकमालतीनन्दनपरिणयनिष्पत्तिः सूचिता । अद्य वयं नन्दनावासमुपगताः । मदयन्तिकासखीत्वेन स्वस्य वरसंबन्धाद्विद्वद्वरवर्गाणां च बहुत्वाद्वयमिति बहुवचनम् । विवाहार्थं वरमनुसृत्य वयं जन्याश्च विवाहं निर्वर्त्य वरगृहमेव प्रत्यागता इत्यर्थः । अतो भगवती नन्दनमापृच्छ्यामन्त्र्य गता निजावसथं स्वावासम् । अयं च नववधूगृहप्रवेशार्थं विरचितो योऽकाल आश्वयुजपौर्णमासीव्यतिरिक्तकाले कौमुद्या अभावात्पौर्णमास्यां कर्तव्यो यो महोत्सवस्तेन प्रमत्तोऽनवहितस्तथा पर्याकुलः कार्यान्तरव्यासङ्गाद्विक्षिप्तचेतस्कोऽशेषपरिजनो यस्मिन्स तादृशः प्रदोषो रजनीमुखमनुकूलयिष्यत्यभिमतसिद्धिसाहा-

कामेदुं सपादपडणं अब्भत्थिअ पुणो बलामोडिअ अभिद्दवन्तो मअरन्देण णिट्ठुरं पडिहदो जामादा । सो अ वेलक्खरोसावेसखलन्तअक्खरो ओरुइदणअणपप्फुरन्तवअणो ण मे संपदं इमाए कौमारवड्ढईए पओअणं ति ससपहं पइण्णं कादूण वासभवणादो णिग्गदो। ता एदेण पसङ्गेण मदअन्तिअं आणीअ मअरन्देण संओजइस्सं । (इति निष्क्रान्ता ।)

इति प्रवेशकः ।

(ततः प्रविशति शय्यागतो मकरन्दो लवङ्गिका च ।)

**मकरन्दः**—लवङ्गिके, अपिनाम बुद्धरक्षितासंक्रान्ता भगवतीनीतिर्विजेष्यते ।

---

कामयितुं सपादपतनमभ्यर्थ्य पुनर्बलात्कारेणाभिद्रवन्मकरन्देन निष्ठुरं प्रतिहतो जामाता । स च वैलक्ष्यरोषावेशस्खलदक्षरोऽवरुदितनयनप्रस्फुरद्वदनो न मे सांप्रतमनया कौमारवर्धक्या प्रयोजनमिति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गतः । तस्मादनेन प्रसङ्गेन मदयन्तिकामानीय मकरन्देन संयोजयिष्यामि ।

---

व्यकानुकूल्येन सिद्धयुन्मुखं करिष्यति । अथ नोऽस्माकं व्यवसितं मदयन्तिकामकरन्दसंघटनविषयदूत्यव्यापारं मालतीवेषधारिणो मकरन्दस्य कृत्रिमनिर्वर्तितमदयन्तिकापरिणयस्य मदयन्तिकां गृहीत्वा निर्गन्तुं कालोऽप्येष एवानुकूलो वर्तते । यतो मदीयाः सर्वेऽप्यप्रमत्ता रक्षिणः सर्वे प्रमत्ताः पर्याकुलाश्च । तन्निर्गमप्रज्ञानतन्निवारणादावसमर्था वर्तन्त इत्यर्थः । अनेन च वर्तमानोऽर्थः सूचितः । सांप्रतं च त्वरमाणकामो नववधूसंभोगोत्कण्ठासमुन्मीलितमन्मथावेगः कामयितुं मां कामयस्वेत्येवमेव बहुशः सपादपतनमभ्यर्थ्य पुनर्बलात्कारेणाभिद्रवन्प्रसह्य स्वयंग्राहसाहसप्रवृत्तः सन्निष्ठुरं परुषं यथा स्यान्मकरन्देन कपटमालत्या प्रतिहतो निराकृतो जामाता वरो नन्दनः । स च वैलक्ष्यरोषावेशस्खलदक्षरो मन्थरवचनः । तथावरुदितनयनं प्रस्फुरच्च वदनं यस्य सः। न मे सांप्रतमनया कौमारवर्धक्या कौमारे कुमारीभावे कन्यात्व एव वर्धकी चलितचारित्रया । माधवैकानुरक्तेयं मालतीति पूर्वमेव नन्दनोऽपि श्रुतवानित्येवमुपालम्भः । प्रयोजनमिति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गतः । तस्मादनेन प्रसङ्गेन भ्रातृकार्यानुकूल्यार्थमनुनयव्याजप्रस्तावेन मदयन्तिकामानीय मकरन्देन सह संयोजयिष्यामि । इति वृत्तं वर्तिष्यमाणं च संसूच्य निष्क्रान्ता बुद्धरक्षिता । अयं च ग्रन्थकाण्डः प्रवेशको वृत्तवर्तिष्यमाणोदितलक्षणयोगात् न चैकपात्रप्रयोगानुपपत्तिः तल्लक्षणेऽनेकपात्रत्वनियमाप्रतीतेः । अस्य विष्कम्भवदेकेनाप्युपपत्तेश्चेति ॥ **ततइत्यादि** । शय्यागत इति वासभवने नववधूवरसंभोगार्थं रचिते तल्पे शयितः प्रार्थनाभङ्गतिरस्कारनिष्कासितनन्दनः । मालतीरूपधारीत्यर्थः ॥ **मकरन्दः** । अपि-

**लवङ्गिका**—[1]को संदेहो महाभाअस्स । किं बहुणा । जह एसो मञ्जीरसद्दो तह जाणामि देण ववदेसेण आणीदा बुद्धरक्खिदाए मदअन्तिएत्ति । ता उत्तरीआववारिदो सुत्तलक्खणो चिट्ठ ।

( मकरन्दस्तथा करोति । )

( ततः प्रविशति मदयन्तिका बुद्धरक्षिता च । )

**मदयन्तिका**—[2]सहि, सच्चं एव्व परिकोविदो मे भादा मालदीए ।

**बुद्धरक्षिता**—[3]अह इं ।

**मदयन्तिका**—[4]अहो अच्चाहिदं । ता एहि, वामसीलं मालदीं णिब्भच्छेह्म ।

(इति परिक्रामतः।)

**बुद्धरक्षिता**—[5]इदं वासभवणं ।

---

१. कः संदेहो महाभागस्य । किं बहुना यथैष मञ्जीरशब्दस्तथा जानामि तेन व्यपदेशेनानीता बुद्धरक्षितया मदयन्तिकेति । तदुत्तरीयापवारितः सुप्तलक्षणस्तिष्ठ ।

२. सखि, सत्यमेव परिकोपितो मम भ्राता मालत्या ।

३. अथ किम् ।

४. अहो अत्याहितम् । तदेहि, वामशीलां मालतीं निर्भर्त्सयावः ।

५. इदं वासभवनम् ।

---

नामेति संभावनायाम् । बुद्धरक्षितासंक्रान्ता भगवत्यैव निवेशिता भगवतीनीतिः कृत्यं मदयन्तिकां प्रति न बुद्धरक्षिताबुद्धिदोषेण प्रतिहता फलतीति संभाव्यते।'न विपर्येष्यति' इति पाठे बुद्धरक्षितायाः स्वप्रज्ञाबलेनाप्रमत्तेन दोषेण वैपरीत्यं न संभाव्यते। अपि तु भगवत्यैव प्रवर्तितत्वात्फलपर्यवसायिनी नीतिर्भविष्यतीत्यर्थः॥ **लवङ्गिका**। कः संदेहो महाभागस्य। संभावनाया उत्कटैककोटिसंदेहरूपत्वादपिनामशब्दसूचिता संभावनैव संदेहशब्देनोक्ता। कथं तर्हि संदेहलेशस्याप्यवकाश इत्यर्थः। किं बहुना।यथैष मञ्जीरशब्दःश्रूयते,तथा तेनैव नूपुरध्वनिश्रवणप्रकारेण हेतुना तर्कयामि तेन व्यपदेशेनालीकभ्रातृभार्यायास्तवानुनयव्याजेनानीता बुद्धरक्षितया मदयन्तिकेति। तदुत्तरीयापवारितः सुप्तलक्षणः सुप्त इव लक्ष्यमाणस्तिष्ठ ॥ **मदयन्तिका**। सखि, सत्यमेव परिकोपितः परिकुपितः कृतो मे भ्राता मालत्या॥ **बुद्धरक्षिता**। अथ किम्। सत्यमेवेत्यर्थः ॥ **मदयन्तिका**। अहो, अत्याहितं महाभीतिः। कुपिता भ्रातुर्मालती समीपमुपनीतैवेत्यर्थः। तदेहि। वामशीलां वक्रस्वभावां मालतीं

(उभे प्रविशतः ।)

**मदयन्तिका**—[1]सहि लवङ्गिए, जाणीअदि पसुत्ता दे पिअसही त्ति ।

**लवङ्गिका**—[2]सहि, मा णं पडिबोधेहि । एसा चिरं दुम्मणाअन्दी दाणिं जेव्व ईस मण्णे पसुत्तेत्ति । अदो सणिअं इध एव्व सअणद्धम्मि उवविस ।

**मदयन्तिका**—(तथा कृत्वा ।) [3]दुम्मणाअदि कहं इअं वामसीला ।

**लवङ्गिका**—[4]कहं णाम णववहूविस्सम्भणोवाअजाणुअं लडहं विअद्धं महुरभासिणं अरोसणं दे भादरं भत्तारं आसादिअ ण दुम्मणाइस्सदि मे पिअसही ।

---

१. सखि लवङ्गिके, ज्ञायते प्रसुप्ता ते प्रियसखीति ।

२. सखि, मैनां प्रतिबोधय । एषा चिरं दुर्मनायमानेदानीमेवेषन्मन्ये प्रसुप्तेति । अतः शनैरिहैव शयनार्ध उपविश ।

३. दुर्मनायते कथमियं वामशीला ।

४. कथं नाम नववधूविस्रम्भणोपायाभिज्ञं लडहं विदग्धं मधुरभाषिणमरोषणं ते भ्रातरं भर्तारमासाद्य न दुर्मनायिष्यते मे प्रियसखी ।

---

निर्भर्त्सयावः ॥ **बुद्धरक्षिता** । इदं वासभवनम् ॥ **मदयन्तिका** । सखि लवङ्गिके ज्ञायते प्रसुप्ता ते प्रियसखीति ॥ **लवङ्गिका** । सखि, मैनां प्रतिबोधय । एषा चिरं दुर्मनायमाना दुःखितमनस्का भवन्ती । 'भृशादिभ्यो भुवि—'इत्यादिना क्यङ् । इदानीमेवेषन्मन्ये प्रसुप्तेति । अतः शनैरिहैव शयनार्ध उपविश ॥ **मदयन्तिका** । दुर्मनायते कथमियं वामशीला । स्वयमेव भर्तुः प्रतिकूलकारित्वेनापराधं कृत्वा कथमात्मनैव दुर्मनस्का भवतीत्यर्थः ॥ **लवङ्गिका** । कथं नाम नववध्वा विस्रम्भणे विस्रम्भजनने य उपाया कामतन्त्रोक्तास्तच्चित्तवृत्त्यनुरोधस्तन्मनोरञ्जनं तदनिवारिताधाङ्गीकृतानां लज्जया केवलं बहिरलीकमेव किंचिन्निषिद्धानामप्यन्तरनुमोदितानामवयवस्पर्शादिसंभोगव्यापाराणां मन्दमन्दमुपक्रमान्नातिप्रसह्य किंचिदाचरणमित्यादयस्तेषामभिज्ञमिति विपरीतलक्षणयोक्तिः । यतोऽसौ ब्रह्मचर्यार्थं शयनादिनियसवाह्ये वैवाहिक एव त्रिरात्रे स्वचित्तवृत्त्यनभिज्ञां किंचिदप्यशिथिलीकृतबाहुभरामत्यन्तापरिचयादहेरिवोद्विजमानां बलादेनां बालां मुखत एव पामरबालिशजनरीत्या निर्दयं निष्पीडयितुमारब्धवान् । अतो न कामतन्त्रवार्तामप्यसौ जानातीत्यर्थः । लडहो विदग्धो मधुरभाषी । लडहः सुन्दरः । विदग्धः सुरतकलानिपुणः । अत्रापि सौन्दर्यगन्धविहीनं सुरतकलावार्तानभिज्ञमतिपरुषभाषिणमिति वैपरीत्येनोक्तिः । अरोषणमकोपनमतिमूर्खमित्यन्यथोक्तिः भ्रातरं ते भर्तारमासाद्य प्रियसखी न

**मदयन्तिका**—पेक्ख[1] बुद्धरक्खिदे विप्पदीवं उवालद्धा ह्म।

**बुद्धरक्षिता**—विप्पदीवं[2] ण वा विप्पदीवं।

**मदयन्तिका**—कहं[3] विअ।

**बुद्धरक्षिता**—[4]जं दाव चलणपतिदो भत्ता ण बहुमण्णिदो। एत्थ लज्जादोसेण एसो जणो ण उवालम्भणिज्जो। जं वि पिअसहि, अहिणववहूविरुद्धरहसोपक्कमक्खलणवेलक्खविच्छड्डिअमहाणुहावत्तणस्स भादुणो दे वाआगअं किं अप्पदिट्ठाणं। तेण जाणीअदि किआवराहा उवालम्भणिज्जा अह्मेत्ति (संस्कृतमाश्रित्य।) किंच।

---

१. पश्य बुद्धरक्षिते, विप्रतीपमुपालब्धाः स्मः।

२. विप्रतीपं न वा विप्रतीपम्।

३. कथमिव।

४. यत्तावच्चरणपतितो भर्ता न बहुमानितः। अत्र लज्जादोषेणैष जनो नोपालम्भनीयः। यद्यपि प्रियसखि, अभिनववधूविरुद्धरभसोपक्रमस्खलनवैलक्ष्यविच्छर्दितमहानुभावत्वस्य भ्रातुस्ते वाचागतं किमप्रतिष्ठानम्। तेन ज्ञायते

---

दुर्मनायते। युक्तमेवैवंविधभर्तृसमागमे क्लेशेनास्या दुर्मनस्कत्वमित्यर्थः॥ **मदयन्तिका**। पश्य बुद्धरक्षिते, विप्रतीपमुपालब्धाः स्मः। अस्माभिरुपालब्धव्ये प्रत्युतास्मानेवोपालभत इत्यर्थः॥ **बुद्धरक्षिता**। विप्रतीपं न वा विप्रतीपम्। आपाततो विप्रतीपमिव प्रतिभासमानमपि तत्त्वनिरूपणेनैव विप्रतीपं वयमेवोपालब्धा इत्यर्थः॥ **मदयन्तिका**। कथमिव तत्कथमिति प्रश्नः॥ **बुद्धरक्षिता**। यत्तावच्चरणपतितो भर्ता न बहुमानितोऽनुल्लङ्घितप्रणामोऽयमति गौरवविषयो भर्तेति न विज्ञातः। अत्र न किंचिदस्या दूषणं प्रतिभाति। किंतु कुलकन्यकाजनोचिता नवपरिणयसमयसुलभा लज्जैव परमार्थतः श्लाघनीयगुणभूतापि कामान्धस्याविवेकिनोऽस्मद्भ्रातुर्दोषत्वेन स्फुरिता। तेन लज्जादोषेणैवैष जनो नोपालम्भनीयः। यद्यप्यभिनववधूविरुद्धं लोकसिद्धनवोढासंभोगक्रमविपरीतं रभसोपक्रमस्खलनं प्रसह्यानुचितप्रक्रमरूपं स्खलनं तेन यद्वैलक्ष्यं तेन विच्छर्दितं महानुभावत्वं यस्येति। विच्छर्दितं विवर्जितम्। प्रकटितमौर्ख्यस्येति यावत्। भ्रातुस्ते किमपि श्रोतुमप्यनर्हं वाचागतमप्रतिष्ठानं न मे त्वया कौमारवर्धक्या प्रयोजनमिति गर्हितवचनचापलम्। तेन वयमेवोपालम्भनीया इति प्रतिभाति। शास्त्रविरुद्धं चैतदित्याह—**किंचेति**। योषिच्छब्दोऽत्र नववधूपरः। यथा कुसुमं म्लायते तथा मृदुरीत्या सुकुमारक्रमेणोपक्रम्यमाणं सौरभमशेषमुद्गिरति, न तु प्रसभमेव निष्पीड्यमानम्। एवं तत्समानधर्माणो नवोढा अपि सुकुमारेणैव संभोगक्रमेणोपक्रम्यमाणा अनुरक्ताः सुखहेतवो भवन्ति। तास्वनधिगतो विश्वासो नवोढाभिप्रायो

'कुसुमसधर्माणो हि योषितः सुकुमारोपक्रमाः । तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः संप्रयोगविद्वेषिण्यो भवन्ति ।' एवं किल कामसुत्तआरा मन्तेन्ति ।

**लवङ्गिका**—घरे घरे पुरिसा कुलकण्णकाओ उव्वहन्दि । ण अ को वि लज्जापसाहणं अणवरद्धमुद्धसहावं कुलकुमारीजणं पहवामि त्ति वाआणलेण पज्जालेदि । एदे क्खु दे आमलणसंभरिज्जन्तदूसहपरघरणिवासवेरग्गकारिणो हिअअसल्लणिक्खेवा महापरिहवा । जाणं किदे इत्थिआजम्मलाहं जुउच्छन्दि बान्धवा ।

**मदयन्तिका**—बुद्धरक्खिदे, अदिदूमिआ पिअसही लवङ्गिआ । अतिमहान्तो को वि मे भादुणा वाअवराहो किदो ।

---

कृतापराधा उपालम्भनीया वयमिति । एवं किल कामसूत्रकारा मन्त्रयन्ते ।

१. गृहे गृहे पुरुषाः कुलकन्यका उद्वहन्ति । न च कोऽपि लज्जाप्रसाधनमनपराधमुग्धस्वभावं कुलकुमारीजनं प्रभवामीति वागनलेन प्रज्वलयति । एते खलु त आमरणसंस्रियमाणदुःसहपरगृहनिवासवैराग्यकारिणो हृदयशल्यनिक्षेपा महापरिभवाः । येषां कृते स्त्रीजन्मलाभं जुगुप्सन्ते बान्धवाः ।

२. बुद्धरक्षिते, अतिम्लाना प्रियसखी लवङ्गिका । अतिमहान्कोऽपि मे भ्रात्रा वागपराधः कृतः ।

---

यैस्ते तथा । यद्वानधिगतो नवोढया परिचयाभावादप्राप्तो विश्वासो विस्रम्भो येषु ते तथोक्ताः। तैरप्येतन्मनोऽवेदिभिरपरिचितैश्च प्रसभं बलादेवात्युद्वेगकारिभिर्व्यापारैरुपक्रम्यमाणाः प्रयोगस्य संप्रयोगस्यैव विद्वेषिण्यो भवन्ति । न केवलं तादृशपुरुषेणानुरज्यन्ते । अपि तु रिपुसमागमवद्विषीदन्तीत्यर्थः । एवं किल कामसूत्रकारा मन्त्रयन्ते । यदाहुः—'रभसेन ह्युपक्रान्ता कन्याभावमविन्दता । भयं चिन्तासमुद्वेगं सद्यो द्वेषं च गच्छति ॥' इति ॥ **लवङ्गिका** । गृहे गृहे पुरुषाः कुलकन्यका उद्वहन्ति । न च कोऽपि लज्जाप्रसाधनमनपराधमुग्धस्वभावं कुलकुमारीजनं प्रभवामीति समर्थोऽहमित्येतावता वागनलेनावाच्यवचनरूपेणानलेन प्रज्वलयति । एते खलु ते हृदयशल्यनिक्षेपा आमरणं संस्रियमाणा विस्मर्तुमशक्यत्वेन मनसि संततं धार्यमाणा अत एव दुःसहाः परगृहनिवासवैराग्यकारिणो महापरिभवाः । येषां कृते स्त्रीजन्मलाभं जुगुप्सन्ते बान्धवाः ॥ **मदयन्तिका** । बुद्धरक्षिते, अतिम्लाना प्रियसखी लवङ्गिका । अतिमहान्कोऽपि मे भ्रात्रा वागपराधः कृतः ॥

**बुद्धरक्षिता**—अह इं[1] । सुदं एव्व अह्मेहिं ण मे संपदं इमाए कोमारवड्ढईए पओअणं ति ससपहं पइण्णं काऊण वासभवणादो णिग्गदो ।

**मदयन्तिका**—(कर्णौ पिधाय ।) अह्महे[2] अदिक्कमो । अहो पमादो । सहि लवङ्गिए, असमत्थह्मि दे मुहं संपदं दट्ठुं । तह वि पहवामि त्ति किं वि मन्तइस्सं ।

**लवङ्गिका**—साहीणो[3] दे अअं जणो ।

**मदयन्तिका**—चिट्ठदु[4] दाव मह भादुणो दुःसीलदा अप्पडिट्ठाणं अ । तुह्मेहिं वि ईदिसो वि एसो संपदं जहचित्तं अणुवट्टणीओ जेण भत्ता एसो त्ति । तुह्मे इमस्स अणहिआअअक्खराहिक्खेवोवालम्भस्स जं मूलं तं ण जाणह ।

---

१. अथ किम् । श्रुतमेवास्माभिर्न मे सांप्रतमनया कौमारवर्धक्या प्रयोजनमिति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गतः ।

२. अहो अतिक्रमः । अहो प्रमादः । सखि लवङ्गिके, असमर्थास्मि ते मुखं सांप्रतं द्रष्टुम् । तथापि प्रभवामीति किंचिन्मन्त्रयिष्ये ।

३. स्वाधीनस्तेऽयं जनः ।

४. तिष्ठतु तावन्मम भ्रातुर्दुःशीलताप्रतिष्ठानं च । युष्माभिरपीदृशोऽप्येष सांप्रतं यथाचित्तमनुवर्तनीयो येन भर्तैष इति । यूयमस्यानभिजाताक्षराधिक्षेपोपालम्भस्य यन्मूलं तन्न जानीथ ।

---

**बुद्धरक्षिता** । अथ किम् । कृत एवेत्यर्थः । तदेवाह—श्रुतमेवास्माभिर्यथा न मे सांप्रतमनया कौमारवर्धक्या प्रयोजनमिति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गतः ॥ **मदयन्तिका** । अहो अतिक्रमो मर्यादोल्लङ्घनम् । अहो प्रमादोऽनवधानता । सखि लवङ्गिके, असमर्थास्मि ते मुखं सांप्रतं द्रष्टुम् । तथापि प्रभवामीति मय्यतिस्निग्धायां त्वयि प्रभुत्वमस्तीति किमपि सखित्वमेवावलम्ब्य तदनुरूपं किंचिन्मन्त्रयिष्ये ॥ **लवङ्गिका** । स्वाधीनस्तेऽयं जनः । तद्विस्रब्धं मन्त्रयस्वेति भावः ॥ **मदयन्तिका** । तिष्ठतु तावन्मम भ्रातुर्दुःशीलताप्रतिष्ठानं च युष्माभिर्मालत्यासखीकोटिभिरपीदृशोऽप्येष सांप्रतं यथाचित्तमनुवर्तनीयः । चित्तशब्देनात्र तत्साधारणो व्यापारः संकल्पाख्यो लक्ष्यते । तेन तदिच्छाप्रतिकूलं नाचरणीयमित्याशयः । येन भर्तैष इति । निर्गुणो दोषवानपि भर्ता भर्तृत्वेन स्त्रीभिरनुवर्तनीयः । न तु तस्य प्रातिकूल्यं कुलवधूनामुचितमिति भावः । न च यूयमस्यानभिजाताक्षराधिक्षेपोपालम्भस्यानभिजातानि कितवजनयोग्यान्यक्षराणि यत्र स तादृशो

**लवङ्गिका**—[1]कहं अह्मे असन्तं जाणामो ।

**मदयन्तिका**—[2]जं दाणिं तस्सिं महाणुहावे माहवे किं वि किल मालदीए वाआमेत्तं आसी सो एसो सव्वलोअस्स अदिभूमिं गओ पवादो । तं क्खु एदं विअम्भइ । ता पिअसहि, जह एसो भत्तुणो उवेक्खाहिणिवेसो णिरवसेसो हिअआदो उद्धरिअदि तह करेहि । अण्णहा महान्तो पमादो त्ति जाणीदं होदु । णिक्कम्पदारुणासु कुलकण्णकासु दूमावेति हिअअं माणुसाणं ईरिसादो दुरहिसंगादो त्ति जाणह । मा भण मदअन्तिआए कहिदं ति ।

**लवङ्गिका**—[3]अइ असंबद्धलोअप्पवादमोहिदे, अवेहि । ण तुए सह मन्तइस्सं ।

---

१. कथं वयमसन्तं जानीमः ।

२. यदिदानीं तस्मिन्महानुभावे माधवे किमपि किल मालत्या वाङ्मात्रमासीत्स एष सर्वलोकस्यातिभूमिं गतः प्रवादः । तत्खल्वेतद्विजृम्भते । तत्प्रियसखि, यथैष भर्तुरुपेक्षाभिनिवेशो निरवशेषो हृदयादुद्ध्रियते तथा कुरु । अन्यथा महान्प्रमाद इति ज्ञातं भवतु । निष्कम्पदारुणासु कुलकन्यकासु दूनयति हृदयं मनुष्याणामीदृशाद्दुरभिषङ्गादिति जानथ । मा भण मदयन्तिकया कथितमिति ।

३. अयि असंबद्धलोकप्रवादमोहिते, अपेहि । न त्वया सह मन्त्रयिष्ये ।

---

ऽधिक्षेपो धर्षणं छिद्रोपालम्भस्य यन्मूलं तन्न जानीथ ॥ **लवङ्गिका** । कथं वयमसन्तं जानीमः । एतदुपालम्भस्य बीजं मालतीगतं किंचिदनुचितमस्ति चेत्कथं वयं न जानीमः । नास्त्येवैतत् । अन्यत्तु कारणमसंभावितमेवेत्याशयः । अन्यदेव तन्मूलमाह—**मदयन्तिका** । यदिदानीं तस्मिन्महानुभावे माधवे किमपि किल मालत्या वाङ्मात्रं माधवानुरक्तेयं मालतीति प्रवादमात्रमासीत्स एव सर्वलोकस्यातिभूमिं गतः परां कोटिमारूढः प्रवादः ।'तारामैत्रमासीत्'इति पाठे तारामैत्रं दर्शनमात्रस्नेहः।तस्मिन्सर्वलोकस्येति पाठः।तत्खल्वेतद्विजृम्भते । उपालम्भमूलत्वेनेतिशेषः। तत्प्रियसखि, यथैष भर्तुरुपेक्षाभिनिवेशो मालत्या भर्तृविषयौदासीन्याग्रहो निरवशेषो हृदयादुद्ध्रियते तथा कुरु । अन्यथा महान्प्रमाद इति ज्ञातं भवतु । निष्कम्पदारुणास्वानुकूल्यं प्रतिपद्य केवलं निश्चेष्टीभूतास्वत एव दारुणासु कुलकन्यकासु विषयभूतासु दूनयति हृदयं मनुष्याणामीदृशाद्दुरभिषङ्गादिति ।दुरभिषङ्गो दुष्टानुरागबन्धः। तन्मा भण मदयन्तिकया कथितमिति मालत्युपालम्भबीजमेतदसन्द्भ्रातुर्मनोगतं भवतीषु स्नेहान्मया गूढमपि कथितम् ,तदेतन्मयोक्तमिति न कचिदपि प्रकटनीयमित्यभिप्रायः ॥ **लवङ्गिका** । अयि असंबद्धलोकप्रवादमोहिते,अपेहि । न त्वया सह

**मदयन्तिका**—[1]सहि, पसीद । अहवा ण तुह्मे फुडं भणिदावो चिट्ठह । किं अ अह्मे सच्चं एव्व माहवेक्कमअजीविदं मालदिं जाणामो । केण वा कठोरकेअईगब्भविब्भमावअवदोव्वल्लणिव्वट्टिदसुन्दरत्तणविसेसं माहवसहत्थणिम्माविदवउलावलीविरइअकण्ठावलम्बणमेत्तसंजीवणं मालदीए माहवस्स अ पहादचन्दमण्डलापाण्डुरपरिक्खामरमणिज्जदंसणं ण विभाविदं सरीरं । किं अ तस्सिं दिअसे कुसुमाउरुज्जाणपेरन्तरच्छामुहसमाअमे सविब्भमुल्लसिअकोऊहल्लुप्फुल्लपरिसरुव्वेल्लमाणसविलासमसिणसिणिद्धसंचरणचारुतारआविअम्भमाणाणङ्गसिङ्गाराआरिअसव्वाअमोपदेसणिम्माविदविअद्धमुद्धमणहरा मए ण णिरूविदा इमाणं दिट्ठिसंभेदा । किं अ मह भादुणो दाणउत्तन्दं सुणिअ तक्खणुव्वत्तगम्भीरुव्वेअवइअरन्धआरिअ-

१. सखि, प्रसीद । अथवा न यूयं स्फुटं भणितास्तिष्ठथ । किं च वयं सत्यमेव माधवैकमयजीवितां मालतीं जानीमः । केन वा कठोरकेतकीगर्भविभ्रमावयवदौर्बल्यनिर्वर्तितसुन्दरत्वविशेषं माधवस्वहस्तनिर्मितबकुलावलीविरचितकण्ठावलम्बनमात्रसंजीवनं मालत्या माधवस्य च प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामरमणीयदर्शनं न विभावितं शरीरम् । किं च तस्मिन्दिवसे कुसुमाकरोद्यानपर्यन्तरथ्यामुखसमागमे सविभ्रमोल्लसितकौतूहलोत्फुल्लपरिसरोद्वेल्लमानसविलासमसृणस्निग्धसंचरणचारुतारकाविजृम्भमाणानङ्गशृङ्गाराचार्यसर्वागमोपदेशनिर्मितवैदग्ध्यमुग्धमनोहरा मया न निरूपिता एतयोर्दृष्टिसंभेदाः । किं च मम भ्रातुर्दानवृत्तान्तं श्रुत्वा तत्क्षणोद्वृत्तगम्भीरोद्वेगव्यतिकरान्धकारितम्लायमानदेहशोभयोरुद्वर्तमानमूलबन्धनमिव न लक्षितं हृदयम् । किं च मयैतदपरं विस्मृतम् ।

मन्त्रयिष्ये ॥ **मदयन्तिका** । सखि, प्रसीद । अथवा न यूयं स्फुटं भणितास्तिष्ठथ । किंच वयं सत्यमेव माधवैकमयजीवितां मालतीं जानीमः । केन वा कठोरकेतकीगर्भविभ्रमावयवदौर्बल्यनिर्वर्तितसुन्दरत्वविशेषं माधवस्वहस्तनिर्मितबकुलावलीविरचितकण्ठावलम्बनमात्रसंजीवनं मालत्या माधवस्य च प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामरमणीयदर्शनं न विभावितं शरीरम् । किं च तस्मिन्दिवसे कुसुमाकरोद्यानपर्यन्तरथ्यामुखसमागमे सविभ्रमोल्लसितकौतूहलोत्फुल्लपरिसरोद्वेल्लमानसविलासमसृणस्निग्धसंचरणचारुतारकाविजृम्भमाणानङ्गशृङ्गाराचार्यसर्वागमोपदेशनिर्मितवैदग्ध्यमुग्धमनोहरा मया न निरूपिता एतयोर्दृष्टिसंभेदाः । किं च मम भ्रातुर्दानवृत्तान्तं श्रुत्वा तत्क्षणोद्वृत्तगम्भीरोद्वेगव्यतिकरान्धकारितम्लायमानदेहशोभयोरुद्वर्तमानमूलबन्धनमिव न लक्षितं हृदयम् । किं च मयैतदपरं विस्मृतम् ॥

मिलाअन्तदेहसोहाणं उक्खण्डिअमाणमूलबन्धणं विअ ण लक्खिअं हिअअं। किं अ मए एदं अवरं विसुमरिदं।

**लवङ्गिका**—[1]किं दाणिं अवरं।

**मदयन्तिका**—[2]जं खु मह जीविदप्पदाइणो महाणुहावस्स चेदणापडिलम्भपिअणिवेदिआए मालदीए भअवदीविअड्ढवअणोवण्णासचोदिदेण हिअअं जीविदं अ माहवेण पारिदोसिअत्तणेण सअंगाहे णिउत्तं। अह लवङ्गिए, तुए खु एव्वं भणिदं पडिच्छिदो क्खु णो पिअसहीए अअं पसादो त्ति।

**लवङ्गिका**—[3]सहि, कदमो उण सो महाणुहावो त्ति विसुमरिदं विअ मए।

**मदयन्तिका**—[4]सहि, सुमर। जेण तस्सिं दिअहे विअडदुट्ठसावदविणिवादगोअरं गदा असरणा सुलग्गसण्णिहिदेण पीअरभु-

१. किमिदानीमपरम्।

२. यत्खलु मम जीवितप्रदायिनो महानुभावस्य चेतनाप्रतिलम्भप्रियनिवेदिकाया मालत्या भगवतीविदग्धवचनोपन्यासचोदितेन हृदयं जीवितं च माधवेन पारितोषिकत्वेन स्वयंग्राहे नियुक्तम्। अथ लवङ्गिके, त्वया खल्वेवं भणितं प्रतीष्टः खलु नः प्रियसख्या अयं प्रसाद इति।

३. सखि, कतमः पुनः स महानुभाव इति विस्मृतमिव मया।

४. सखि, स्मर। येन तस्मिन्दिवसे विकटदुष्टश्वापदविनिपातगोचरं गताशरणा सुलग्नसंनिहितेन पीवरभुजस्तम्भेन संभाविता निष्कारणबान्धवेन सक-

**लवङ्गिका**। किमिदानीमपरम्॥ **मदयन्तिका**। यत्खलु मम जीवितप्रदायिनो महानुभावस्य चेतनाप्रतिलम्भप्रियनिवेदिकाया मालत्या भगवतीविदग्धवचनोपन्यासचोदितेन हृदयं जीवितं च माधवेन पारितोषिकत्वेन स्वयंग्राहे नियुक्तम्। अथ लवङ्गिके, त्वया खल्वेवं भणितं प्रतीष्टः खलु नः प्रियसख्या अयं प्रसाद इति। अत्र महानुभावस्येति मकरन्दस्याभिधानं तस्य भर्तृत्वेन मदयन्तिकया स्वमनसैव निश्चितत्वाद्भर्तुर्नामग्रहणस्य कुलस्त्रीणामनुचितत्वादिति ग्राह्यम्। अथ लवङ्गिकाप्रच्छन्नो मकरन्दः स्वस्यानुरागस्य व्यञ्जकानि स्वप्रियतमावचनानि स्वयमेव शृणोत्विति जानानाप्यजानानेव पृच्छति। **लवङ्गिका**। सखि, कतमः पुनः स महानुभाव इति विस्मृतमिव मया॥ **मदयन्तिका**। सखि, स्मर। येन तस्मिन्दिवसे विकटदुष्टश्वापदविनिपातगोचरं गताशरणा सुलग्नसंनिहितेन पीवरभुजस्तम्भेन संभाविता निष्कारणबान्धवेन सकलभुवनैकसारनिजदेहोपहारसाहसं कृत्वा परि-

अत्थम्भेण संभाविदा णिक्कारणबन्धवेण सअलभुवणेक्कसारणिअदेहो-वहारसाहसं कदुअ पडिरक्खिदह्मि । जेण अ दिढविअडमंसुल्लुत्ता-णपरिणाहिवच्छत्थललञ्छणजज्झरिदजवापीडधारिणा करुणाधणेण मम किदे वि णिमज्जन्तसअलणहणिआअवज्जपञ्जरप्पहारो मारिदो अ सो दुट्टसावदमहारक्खसो त्ति ।

**लवङ्गिका**—[1]हुं, मअरन्दो ।

**मदयन्तिका**—(सानन्दम् ।) [2]सहि, किं भणासि ।

**लवङ्गिका**—[3]णं भणामि मअरन्दो त्ति । (सस्मितं शरीरमस्याः स्पृशन्ती संस्कृतमाश्रित्य ।)

वयं तथा नाम यदात्थ किं वदा-

म्ययं च कस्माद्विकलः कथान्तरे ।

---

लभुवनैकसारनिजदेहोपहारसाहसं कृत्वा परिरक्षितास्मि । येन च दृढ-विकटमांसलोत्तानपरिणाहिवक्षःस्थललाञ्छनजर्जरितजपापीडधारिणा करुणाध-नेन मत्कृतेऽपि निमज्जत्सकलनखनिकायवज्रपञ्जरप्रहारो मारितश्च स दुष्टश्वा-पदमहाराक्षस इति ।

१. हुं, मकरन्दः ।

२. सखि, किं भणसि ।

३. ननु भणामि मकरन्द इति ।

---

रक्षितास्मि । येन च दृढविकटमांसलोत्तानपरिणाहिवक्षःस्थललाञ्छनजर्जरिति-जपापीडधारिणा । रुधिरार्द्रतया वक्षःस्थलनिहितहारलतैव जपाकुसुमवर्णत्वाज्ज-पापीडत्वेनोक्ता । तद्धारिणा करुणाधनेन मत्कृतेऽपि निमज्जत्सकलनखनिका-यवज्रपञ्जरप्रहारो मारितश्च स दुष्टश्वापदमहाराक्षस इति ॥ **लवङ्गिका** । हुं, मकरन्दः । हुमित्यङ्गीकारद्योतकमव्ययं मालतीमदयन्तिकयोः समानाधिकार-विषयानुरागं व्यनक्ति । यथा किल त्वं श्वापदापस्कन्दिता विनिहतशार्दूले प्राण-दायिनि तस्मिन्गाढमनुरक्ता, एवं मालत्यपि स्वलाभनिमित्तमेव जीवितस्पृहानिर-पेक्षं निर्व्यूढमहामांसविक्रयसाहसे कापालिकमारितकल्पात्मप्राणरक्षके माधवे निरुपाधिकशब्दगाढानुरागेति कथं तां त्वमुपालभस इति भावः ॥ **मदयन्तिका** । सानन्दम् सखि, किं भणसि । प्रियतमनामधेयशुश्रूषातिशयादत्यादरेण प्रश्नः ॥ **लवङ्गिका** । ननु भणामि मकरन्द इति । एवं मकरन्दनामग्रहणादेवाविर्भूतरो-माञ्चस्वेदादिसात्विकभावां मदयन्तिकां दृष्ट्वा सस्मितमस्याः शरीरं स्पृशन्ती संस्कृतमाश्रित्य । वदतीति शेषः । **वयमिति** । कुमार्येव सती मालती माधवे-

कदम्बगोलाकृतिमाश्रितः कथं
विशुद्धमुग्धः कुलकन्यकाजनः ॥ १ ॥

**मदयन्तिका**—(सलज्जम् ।) सहि, किं मं उवहससि । णं भणामि । णिव्वावेदि तारिसस्स अप्पणिरवेक्खव्ववसाइणो किअन्तकवलिज्जन्तजीविअबलामोडिअपच्चाणअणगुरुओवआरिणो जणस्स संकहामेत्तस्स णामग्गहणं सुमरणं अ । तह अ तुए वि गाढगुरुणहप्पहारवेअणारम्भविह्मलाविअसरीरसंगलिअसेअसलिलुग्गमो मोहमउलाअन्तणेत्तकन्दोट्टजुअलो भूमिविगलिदासिअट्ठिविट्ठम्भधीरपडिधारिअसरीरभारो पच्चक्खीकिदो एव्व मदअन्तिआमेत्तविच्छड्डिअमहग्घजीविदो महाणुहावो त्ति । (स्वेदादीन्विकारान्नाटयति ।)

---

१. सखि, किं मामुपहससि । ननु भणामि । निर्वापयति तादृशस्यात्मनिरपेक्षव्यवसायिनः कृतान्तकवलीक्रियमाणजीवितबलात्कारप्रत्यानयनगुरूपकारिणो जनस्य संकथामात्रस्य नामग्रहणं स्मरणं च । तथा च त्वयापि गाढगुरुनखप्रहारवेदनारम्भविह्वलितशरीरसंगलितस्वेदसलिलोद्गमो मोहमुकुलीक्रियमाणनेत्रनीलोत्पलयुगलो भूमिविगलितासियष्टिविष्टम्भधैर्यप्रतिधारितशरीरभारः प्रत्यक्षीकृत एव मदयन्तिकामात्रविच्छर्दितमहार्घजीवितो महानुभाव इति ।

---

ऽनुरक्तेति यत्त्वमात्थ तत्तथा नाम तादृश्य एव वयं भवामः । वयमिति कुलशीलादिसूचनया मालत्या सममात्मनोऽभिन्नाया बहुवचननिर्देशः । अत्र किं भणामि त्वामात्मपरदोषानभिज्ञां त्वाम् । एकाकिनीमिति शेषः । अयं त्विति मदयन्तिकां स्पृशन्ती तामेव निर्दिशति । विशुद्धः परपुरुषानुरागकलङ्करहितो मुग्धो मदनव्यापारवार्तानभिज्ञः कुलकन्यकाजनः । साभिप्रायैर्वचनैर्वैपरीत्यं द्योत्यते । कथान्तरे गोष्ठीमध्य एव, न तु तद्दर्शनादौ । विकलः स्वव्यापाराक्षमः सन्कदम्बगोलकस्य नीपतरुसंस्थानस्याकृतिमुद्यन्मुकुलालंकृतमाकारं कथमाश्रितः । रोमाञ्चकञ्चुकं कथं जातमित्यर्थः । त्वमेव तन्नामग्रहणमात्राविर्भूतमन्मथविकारा प्रसिद्धकौमारवार्धकी भूत्वा कथमितरोपालम्भे प्रवर्तस इति भावः ॥ १ ॥ **मदयन्तिका** । सलज्जम् । सखि, किं मामुपहससि । ननु भणामि । निर्वापयति । 'सुखयति' इति पाठः । तादृशस्यात्मनिरपेक्षव्यवसायिनः कृतान्तकवलीक्रियमाणजीवितबलात्कारप्रत्यानयनगुरूपकारिणो जनस्य संकथामात्रस्य नामग्रहणं स्मरणं च । तथा च त्वयापि गाढगुरुनखप्रहारवेदनारम्भविह्वलितशरीरसंगलितस्वेदसलिलोद्गमो मोहमुकुलीक्रियमाणनेत्रनीलोत्पलयुगलो भूमिविगलितासियष्टिविष्टम्भधैर्यप्रतिधारितशरीरभारः प्रत्यक्षीकृत एव मदयन्तिकामात्रविच्छर्दितमहार्घजीवितो महानुभाव इति ॥

**बुद्धरक्षिता**—(शरीरमस्याः स्पृशन्ती ।) [1]अस्सत्थसरीरे, किं वाआ । दंसिदं सरीरेण मअरन्दसमाअमोच्छुक्कं ।

**मदयन्तिका**—(सलज्जम् ।) [2]सहि, अवेहि अवेहि । उब्भिण्णह्मि सहवासिणीए मालदीए ।

**लवङ्गिका**—[3]सहि मदअन्तिए, अह्मे वि जाणीदव्वं जाणामो । ता पसीद । विरम व्ववदेसादो । एहि । विस्सम्भगब्भकहाप्पबन्धसरसं सुहं चिट्ठह्म ।

**बुद्धरक्षिता**—[4]सहि सोहणं लवङ्गिआए भणिदं ।

**मदयन्तिका**—[5]विधेअह्मि संपदं सहीणं ।

---

१. अस्वस्थशरीरे, किं वाचा । दर्शितं शरीरेण मकरन्दसमागमौत्सुक्यम् ।

२. सखि, अपेह्यपेहि । उद्भिन्नास्मि सहवासिन्या मालत्या ।

३. सखि मदयन्तिके, वयमपि ज्ञातव्यं जानीमः । तत्प्रसीद । विरम व्यपदेशात् । एहि । विस्रम्भगर्भकथाप्रबन्धसरसं सुखं तिष्ठामः ।

४. सखि, शोभनं लवङ्गिकया भणितम् ।

५. विधेयास्मि सांप्रतं सखीनाम् ।

---

**बुद्धरक्षिता** । अस्वस्थशरीरे, किं वाचा । दर्शितं शरीरेण मकरन्दसमागमौत्सुक्यम् । स्वेदादिभिर्व्यभिचारिभिरिति शेषः ॥ **मदयन्तिका** । सलज्जम् । कन्यकाजनानुचितस्वमनोवृत्तिव्यक्तीभावोऽत्र लज्जाहेतुः । सखि, अपेह्यपेहीति चावहित्थाख्यव्यभिचारिव्यञ्जकं वचनम् । यथाह—'अवहित्था तु लज्जादेर्हर्षाद्याकारगोपनम्' इति । उद्भिन्नास्मि सहवासिन्या मालत्या । बाल्यात्प्रभृति सहपांसुक्रीडादिभिर्विश्वासस्थानभूतया मालत्यैव स्वयं निरुपाधिकजीवितदायिनि महानुभावे कुमारीत्वेऽपि प्रवृत्तप्रकृष्टानुरागयाहमप्युद्भिन्नास्मि तादृशोपकारिनायकसमागमं प्रति दर्शितस्वप्रसरास्मि । तां दृष्ट्वाहमपि तथैव प्रवृत्ता, न तु स्वातन्त्र्येणेति भावः ॥ **लवङ्गिका** । सखि मदयन्तिके, वयमपि ज्ञातव्यं जानीमः । किमतः परं तदाच्छादनेनेति भावः । तत्प्रसीद प्रसन्नान्तःकरणा भव । न पुनरस्मत्तः शङ्कितव्यमिति भावः । विरम व्यपदेशात् । कपटवचनैराकृतिगोपनं न शक्यमिति भावः । एहि । विस्रम्भगर्भकथाप्रबन्धसरसं सुखं तिष्ठामः । अस्मासु विस्रब्धा भूत्वा निःशङ्कं स्वहृदयं निवेदय । तत्सिद्ध्युपायमुपदेक्ष्याम इति भावः ॥ **बुद्धरक्षिता** । सखि, शोभनं लवङ्गिकया भणितम् । विदितस्वाभिप्राये जने न वञ्चनं युक्तम् । किंतु तन्निवेदनेन तदुपायोऽन्वेष्टव्य इति भावः ॥ **मदयन्तिका** । विधेयास्मि सांप्रतं

**लवङ्गिका**—जइ एव्वं ता कहेहि कहं णु दे कालो गच्छदि त्ति ।

**मदयन्तिका**—णिसामेहि पिअसहि, मम बुद्धरक्खिदापक्खवादप्पच्चएण पुढमं एव्व तस्सिं जणे अविरलकोऊहलुक्कण्ठामणहरं हिअअं आसी । तदो विहिणिओइअचिरणिउत्तदंसणा भविअ दुव्वारदारुणाआसदुक्खसंदावडज्झन्तचित्तविहडन्तजीविदासा दूरविअम्भिआपुव्वसव्वङ्गप्पज्जलणमअणहुदवहुद्दामदाहदूसहाआसदुम्मणाअन्तपरिअणा यच्चासाविमुक्खमेत्तसुलहमित्तुणिव्वाणपडिऊलबुद्धरक्खिदावअणविवड्ढिआवेअवइअरविसंठुला इमं जीवलोअपरिवत्तं अणुहोमि । संकप्पचिन्ताए सिविणन्तरेसु अ मणोरहुम्मादमोहिदा पेक्खामि तं जणं । तह

१. यद्येवं तत्कथय कथं नु ते कालो गच्छतीति ।

२. निशामय प्रियसखि, मम बुद्धरक्षितापक्षपातप्रत्ययेन प्रथममेव तस्मिञ्जनेऽविरलकौतूहलोत्कण्ठामनोहरं हृदयमासीत् । ततो विधिनियोजितचिरनिर्वृत्तदर्शना भूत्वा दुर्वारदारुणायासदुःखसंतापदह्यमानचित्तविघटमानजीविताशा दूरविजृम्भितापूर्वसर्वाङ्गप्रज्वलनमदनहुतवहोद्दामदाहदुःसहायासदुर्मनायमानपरिजना प्रत्याशाविमोक्षमात्रसुलभमृत्युनिर्वाणप्रतिकूलबुद्धरक्षितावचनविवर्द्धितावेगव्यतिकरविसंस्थुलेमं जीवलोकपरिवर्तमनुभवामि । संकल्पचिन्तायां स्वप्नान्तरेषु च मनोरथोन्मादमोहिता पश्यामि तं जनम् । तथा च प्रियसखि, मुहूर्तसुदृढविस्मयविसंस्थुलोद्वेल्लविस्तारिप्रान्तनालरक्तनेत्रपुण्डरीकताण्डवोद्भट-

सखीनाम् ॥ **लवङ्गिका** । यद्येवमस्मद्विधेयासि तत्कथय कथं नु ते कालो गच्छतीति । तादृशकाष्ठाप्राप्तानुरागविषयं दयितमलभमाना कथं दिवसानतिवाहयसीति भावः ॥ **मदयन्तिका** । निशामय शृणु प्रियसखि, मम बुद्धरक्षितापक्षपातप्रत्ययेन प्रथममेव तस्मिञ्जनेऽविरलकौतूहलोत्कण्ठामनोहरं हृदयमासीत् । नास्थाने बुद्धरक्षितापक्षपातं करोतीति तत्स्नेहादेव संभावितसकलनायकगणगरीयानिति प्रत्ययो विश्वासोऽस्त्येवेति भावः । ततो विधिनियोजितचिरनिर्वृत्तदर्शना भूत्वा दुर्वारदारुणायासदुःखसंतापदह्यमानचित्तविघटमानजीविताशा दूरविजृम्भितापूर्वसर्वाङ्गप्रज्वलनमदनहुतवहोद्दामदाहदुःसहायासदुर्मनायमानपरिजना प्रत्याशाविमोक्षमात्रसुलभमृत्युनिर्वाणप्रतिकूलबुद्धरक्षितावचनविवर्धितावेगव्यतिकरविसंस्थुलेमं जीवलोकपरिवर्तमनुभवामि । मकरन्दप्रत्याशानिवृत्तमात्रेण सुलभो मृत्युरेव निर्वाणं निर्वृतिस्तत्प्रतिकूलं बुद्धरक्षितावचनं संनिहितमकरन्दप्राप्तिप्रतिपादकं तेन संवर्धितो य आवेग उद्वेगस्तेन विह्वलेत्यर्थः । संकल्पचिन्तायां स्वप्नान्तरेषु च मनोर-

अ पिअसहि, मुहुत्तं उदूढविह्मअविसंठुलुव्वेल्लवित्थारिपेरन्तणालरत्तणेत्तपुण्डरीअताण्डवउब्भटपरूढमेरेअमदघुम्मन्तसीलं णिव्वण्णेदि। किं अ कवलिआरविन्दकेसरकसाअकण्ठकलहंसघोसघग्घरक्खलिअगम्भीरभारईभरिअकण्णविवरं पिए मदअन्तिए त्ति मं वाहरइ। अह पहावन्तो विअ उत्तरीअञ्चलवलम्बणपराहवेण ससंभमुत्तरङ्गधमधमाअन्तहिअअं समुत्तासेइ। सहसा विसज्जिअओसरिअतक्खणकठोरकमलदण्डाअन्तबाहुबन्धणाववारिअपओहरुग्गमं विहडन्तविह्मलमेहलावलअसंधाणिज्जन्तपीवरोरुप्पडिसिद्धविप्पडीवगमणं पडिऊलवादि-

---

प्ररूढमैरेयमदघूर्णनशीलं निर्वर्णयति। किं च कवलितारविन्दकेसरकषायकण्ठकलहंसघोषघर्घरस्खलितगम्भीरभारतीभरितकर्णविवरं प्रिये मदयन्तिके इति मां व्याहरति। अथ प्रभवन्निवोत्तरीयाञ्चलावलम्बनपराभवेन ससंभ्रमोत्तरङ्गधमधमायमानहृदयां समुत्रासयति। सहसा विसर्जितापसृततत्क्षणकठोरकमलदण्डायमानबाहुबन्धनापवारितपयोधरोद्गमं विघटमानविह्वलमेखलावलयसंधार्यमाणपीवरोरुप्रतिषिद्धविप्रतीपगमनां प्रतिकूलवादिनीमपि सर्वादरप्रयत्ननिर्वर्तितमुहूर्तकोपोपरागदुःखपरुषीकृतहृदयां स्निग्धपुनरुक्तपर्यस्तलो-

---

थोन्मादमोहिता पश्यामि तं जनम्। तथा च प्रियसखि, मुहूर्तमुदूढविस्मयविसंस्थुलोद्वेल्लविस्तारिप्रान्तनालरक्तनेत्रपुण्डरीकताण्डवोद्भटप्ररूढमैरेयमदघूर्णनशीलं यथा स्यात्तथा निर्वर्णयति साभिलाषं मामेव पश्यति। संकल्पाद्युपनतोऽसाविति शेषः। निर्वापयति मां सुखयतीति वा। मैरेयो मद्यविशेषः। विस्तारिणः प्रान्तस्य नेत्रविभागस्य दीर्घीभूयमाना मालाकारेण प्रसरणान्नालत्वनिरूपणं स्वभावत एव नेत्रपुण्डरीकस्य मधुमदघूर्णमानत्वमिव यथा स्यादित्युक्तम्। किं च कवलितारविन्दकेसरकषायकण्ठकलहंसघोषघर्घरस्खलितगम्भीरभारतीभरितकर्णविवरं प्रिये मदयन्तिके इति मां व्याहरति। स्वप्नादाविति यावत्। अथ प्रभवन्निव स्वामीवोत्तरीयाञ्चलावलम्बनपराभवेन ससंभ्रमोत्तरङ्गधमधमायमानहृदयां समुत्रासयति। मामिति शेषः। संभ्रम आवेगः। 'आदरातिशयाच्चेतस्यावेगः संभ्रमो मतः' इति लक्षणात्। धमधमायमानमुत्कम्पमानं कुमारीभावसुलभशालीनत्वेन स्ववचनमनङ्गीकृत्यान्यतो व्रजन्तीं मामुत्तरीयाञ्चले गृहीत्वा किं वान्यत्र व्रजसीति शिक्षक इव त्रासयतीत्यर्थः। सहसा विसर्जितापसृततत्क्षणकठोरकमलदण्डायमानबाहुबन्धनापवारितपयोधरोद्गमम्। आलिङ्गनानन्तरं तत्प्रथमालिङ्गनजनितत्रासवैलक्ष्यशङ्काविभ्रमाभिरामनायिकाङ्गदर्शनकुतूहलेन सहसा विसर्जितमनन्तरं चापसृतं यदुद्भिन्नरोमाञ्चतया कोमलकमलनालसदृशाभ्यां बाहुभ्यां बन्धनमालिङ्गनं तेनापवारितः पयोधरोद्गमो यथा स्यादेवमित्यर्थः। विघटमानविह्वलमेखलावलयसंधार्यमाणपीव-

णीं वि सव्वादरपअत्तणिव्वत्तिदमुहुत्तकोवोवराअदुक्खपरुसीकिद-हिअअं सिणिद्धपुणरुत्तपल्हत्थलोअणविहाविदासेसचित्तसारं उव-हसिअ दुउणबाहुदण्डावेट्टणणिच्चेट्ठणिअमिअं पिअसहि, प्परूढस-द्दूलकठोरकररुहप्पहारविअडपत्तावलीपसाहणुत्ताणवच्छत्थलणिट्ठुरणि-वेसणणीसअं कदुअ सावेअविहूअमत्थआवविद्धकवरीणिहिदकरपरि-ग्गहपुञ्जीकिदुण्णमिअणिच्छलमुहावअवसच्छन्दविलसिदविअड्ढवअ-णकमलो वामगण्डमूलचिरविणिहिदप्पप्फुरन्तपुञ्जिआहरसमुग्गममण-हरसहअसारस्सदमणहरुक्कस्सिदसरीरसोहं उल्लसिदसद्धसाणन्दविस-मसंभममणहरसंवलणमन्धरभमन्तचेअणं किं वि किं वि दुव्विणअसा-

---

चनविभाविताशेषचित्तसारामुपहस्य द्विगुणबाहुदण्डावेष्टननिश्चेष्टनियमितां प्रियसखि, प्ररूढशार्दूलकठोरकररुहप्रहारविकटपत्रावलीप्रसाधनोत्तानवक्षःस्थलनिष्ठुरनिवेशननिःसहां कृत्वा सावेगविधूतमस्तकापविद्धकवरीनिहितकरपरिग्रहपुञ्जीकृतोन्नमितनिश्चलमुखावयवस्वच्छन्दविलसितविदग्धवदनकमलो वामगण्डमूलचिरविनिहितप्रस्फुरत्पुञ्जिताधरसमुद्गममनोहरसहजसारस्वतमनोहरोत्कर्षितशरीरशोभामुल्लसितसाध्वसानन्दविषमसंभ्रममनोहरसंवलनमन्थरभ्रमच्चेतनां

---

रोरुप्रतिषिध्यमानविप्रतीपगमनाम् ।गाढालिङ्गनसौख्यातिशयतत्क्षणप्रवृद्धान्नितम्बा द्विघटमानं विश्लिष्यद्विह्वलं विस्रस्तं च यन्मेखलावलयं तेन संधार्यमाणाभ्यां पीवरोरुभ्यामेव प्रतिषिध्यमानप्रतिकूलगमनामित्यर्थः । तथा प्रतिकूलवादिनीमपि सर्वादरप्रयत्ननिर्वर्तितमुहूर्तकोपोपरागदुःखपरुषीकृतहृदयाम् । मामित्यर्थः । तथा स्निग्धपुनरुक्तपर्यस्तलोचनविभाविताशेषचित्तसारां प्रेमार्द्रविलोचनेनैव मिथ्यैव कुपितेयं न तु वस्तुतोऽस्याः कोपः । प्रत्युत सर्वमेतन्मच्चेष्टितमनुमतमेवेति निर्णीताकूतसर्वस्वार्थामुपहस्य त्वदीयं कोपमहं जानाम्येव, त्वयि प्रतिकूलगमनायामपि मेखलैव मत्सखी त्वामन्यत्र गन्तुं न प्रयच्छतीत्यादिनर्मवचनैः परिहास्येत्यर्थः । द्विगुणबाहुदण्डावेष्टननिश्चेष्टनियमितां प्रियसखि, प्ररूढशार्दूलकठोरकररुहप्रहारविकटपत्रावलीप्रसाधनमुत्तानं च यद्वक्षःस्थलं तत्र यन्निष्ठुरनिवेशनं तेन निःसहां कृत्वा सावेगविधूतमस्तकापविद्धकबरीनिहितकरपरिग्रहपुञ्जीकृतोन्नमितनिश्चलमुखावयवस्वच्छन्दविलसितविदग्धवदनकमलः । शार्दूलनखप्रहारा एव विकटपत्रावली सैव प्रसाधनं यस्येति पूर्वोपकारस्मरणम् । सावेगं साटोपं यद्विधूननं तेनापविद्धबन्धा विस्रस्तबन्धना या कबरी तस्यां निहितेन करेण यः परिग्रहस्तेन पुञ्जीकृतैः । कचैरिति यावत् । उन्नमिता निश्चलाः स्पष्टं विभाव्यमाना ये मन्मुखावयवास्तेषु स्वच्छन्दविलसितं स्वेच्छया विलसनं कुर्वद्विदग्धं वदनकमलं यस्य स इत्यर्थः । वामगण्डमूलचिरविनिहितप्रस्फुरत्पुञ्जिताधरसमुद्गममनोहरसहजसारस्वतमनोहरोत्कर्षितश-

हसाणुरूववसाओ मं अब्भत्थेइ । एव्वं णाम पिअसहि, समक्खं सव्वं अणुभविअ तदो झत्ति पडिबुद्धा सुण्णारण्णसंणिभं पुणो वि मन्दभाइणी विभावेमि जीवलोअं ति ।

**लवङ्गिका**—सहि[1] मदअन्तिए, फुडं आचक्खेहि । अवि तस्सिं अवसरे सिणेहविब्भमुज्जिअहासविअसन्तबुद्धरक्खिदालोअणणिरूविदं आसणमऊरअं परिअणादो गोवणिज्जं होइ वा किं ण वेत्ति ।

**मदयन्तिका**—अइ[2] असंबद्धपरिहाससीले, अवेहि ।

**बुद्धरक्षिता**—सहि[3] मदअन्तिए, मालदीपिअसही एव्व इअं ईरिसाइं जाणाइ ।

---

किमपि किमपि दुर्विनयसाहसानुरूपव्यवसायो मामभ्यर्थयते । एवं नाम प्रियसखि, समक्षं सर्वमनुभूय ततो झटिति प्रतिबुद्धा शून्यारण्यसंनिभं पुनरपि मन्दभागिनी विभावयामि जीवलोकमिति ।

१. सखि मदयन्तिके, स्फुटमाख्याहि । अपि तस्मिन्नवसरे स्नेहविभ्रमोर्जितहासविकसद्बुद्धरक्षितालोचननिरूपितमासनमयूरकं परिजनाद्गोपनीयं भवति वा किं न वेति ।

२. अयि असंबद्धपरिहासशीले अपेहि ।

३. सखि मदयन्तिके, मालतीप्रियसख्येवेयमीदृशानि जानाति ।

---

रीरशोभामुल्लसितसाध्वसानन्दविषमसंभ्रममनोहरसंवलनमन्थरभ्रमच्चेतनां किमपि किमपि दुर्विनयसाहसानुरूपव्यवसायो मामभ्यर्थयते । एवं नाम प्रियसखि, समक्षं प्रत्यक्षं सर्वमनुभूय ततो झटिति प्रतिबुद्धा शून्यारण्यसंनिभं पुनरपि मन्दभाग्या विभावयामि जीवलोकमिति ॥ **लवङ्गिका** । सखि मदयन्तिके, स्फुटमाख्याहि । अपि तस्मिन्नवसरे स्नेहविभ्रमोर्जितहासविकसद्बुद्धरक्षितालोचननिरूपितमासनमयूरकं परिजनाद्गोपनीयं भवति वा किं न वेति । आसनार्थं निर्मितं वस्तु तूलपूरितमिति तन्मयूराकारमासनं मयूरकम् । त्वदीयमासनं मयूरकं स्वप्नसमागमनिमित्तचरमधातुक्षरणार्द्रीकृतं सद्विदग्धबुद्धरक्षितया सस्नेहं सपरिहासं च स्वाप्निकोऽपि ते प्रियसंभोगः पारमार्थिक एव ते जात इति दृष्ट्वैव सूच्यमानं परिजनात्परिहासशङ्कया गोपनीयं च भवति वा न वेत्यर्थः । मालत्यपेक्षया मदयन्तिकाया निकृष्टत्वद्योतनाय चेटीजनोचितजुगुप्सितनर्मवचनप्रवृत्तिरिति ग्राह्यम् । **मदयन्तिका** । अयि असंबद्धपरिहासशीले, अपेहि ॥ **बुद्धरक्षिता** । सखि मदयन्तिके, मालत्याः प्रियसख्येवेयमीदृशानि जानाति । ईदृशानि मन्त्रयितुं न खलु मादृशी त्वत्सखीति भावः । मालत्यामेवं दृष्टवतीति कृत्वा तत्सखीत्वेनैवमेषा वदतीति मदयन्तिकायां स्नेहाति-

**मदयन्तिका**—मा[1] क्खु एव्वं मालदिं उवहस ।

**बुद्धरक्षिता**—सहि[2] मदअन्तिए, पुच्छिस्सं दाणिं किं वि । जइ ण मे विस्सासभङ्गं करेसि ।

**मदयन्तिका**—किं[3] पुणो वि पणअभङ्गेण किआवराहो अअं जणो जेण एव्वं मन्तेसि । पिअसहि, तुवं लवङ्गिआ अ संपदं मे हिअअं ।

**बुद्धरक्षिता**—जइ[4] दे कहं वि मअरन्दो पुणो वि दंसणपहं ओदरइ तदो किं तुए कादव्वं ।

**मदयन्तिका**—एक्केक्काव[5]अवनिसग्गलग्गणिच्चले चिरं लोअणे णिव्वावइस्सं ।

**बुद्धरक्षिता**—अह[6] सो मम्महबलक्कारिओ जइ कंदप्पजणणिं तुमं रुक्कणिं विअ पुरुसोत्तमो सअंगाहसाहसेण सहधम्मआरिणिं करेइ तदो कीरिसी पडिवत्ती ।

---

१. मा खल्वेवं मालतीमुपहस ।

२. सखि मदयन्तिके, पृच्छामीदानीं किमपि । यदि न मे विश्वासभङ्गं करोषि ।

३. किं पुनरपि प्रणयभङ्गेन कृतापराधोऽयं जनो येनैवं मन्त्रयसे । प्रियसखि, त्वं लवङ्गिका च सांप्रतं मे हृदयम् ।

४. यदि ते कथमपि मकरन्दः पुनरपि दर्शनपथमवतरति तदा किं त्वया कर्तव्यम् ।

५. एकैकावयवनिसर्गलग्ननिश्चले चिरं लोचने निर्वापयिष्ये ।

६. अथ स मन्मथबलात्कारितो यदि कंदर्पजननीं त्वां रुक्मिणीमिव पुरुषोत्तमः स्वयंग्राहसाहसेन सहधर्मचारिणीं करोति तदा कीदृशी प्रतिपत्तिः ।

---

शयो बुद्धरक्षिताया दर्शितः॥ **मदयन्तिका**। मा खल्वेवं मालतीमुपहस ॥ **बुद्धरक्षिता**। सखि मदयन्तिके, पृच्छामीदानीं किमपि। यदि मे विश्वासभङ्गं न करोषि॥ **मदयन्तिका**। किं पुनरपि प्रणयभङ्गेन कृतापराधोऽयं जनो येनैवं मन्त्रयसे। प्रियसखि, त्वं लवङ्गिका च सांप्रतं मे हृदयम् ॥ **बुद्धरक्षिता**। यदि ते कथमपि मकरन्दः पुनरपि दर्शनपथमवतरति तदा किं त्वया कर्तव्यम् ॥ **मदयन्तिका**। एकैकावयवनिसर्गलग्ननिश्चले चिरं लोचने निर्वापयिष्ये ॥ **बुद्धरक्षिता**। अथ स मन्मथबलात्कारितो यदि कंदर्पजननीं त्वां रुक्मिणीमिव पुरुषोत्तमः स्वयंग्रा-

**मदयन्तिका**—(निःश्वस्य।) किं[1] एत्तिअं आसासिदह्मि।

**बुद्धरक्षिता**—सहि[2], कहेहि।

**लवङ्गिका**—सहि[3], कहिदं एव्व हिअआवेअसूअएहिं दीह-णीसासेहिं।

**मदयन्तिका**—सहि[4], का हं इमस्स देण एव्व अत्ताणं पणीक-दुअ मिच्चुकवलणादो आकड्ढिअस्स तस्स एव्व परईअस्स किच्चकिं-करस्स अप्पणो सरीरस्स।

**लवङ्गिका**—सरिसं[5] खु महाणुभावदाए।

**बुद्धरक्षिता**—सुमरेसि[6] एदं वअणं।

**मदयन्तिका**—कहं[7] दुदिअआमविच्छेदपडहो ताडिअदि। ता जाव णन्दणं णिब्भच्छिअ सपादपडणं वा अब्भत्थिअ मालदीए उ-वरि अणुऊलइस्सं। (इत्युत्थातुमिच्छति।)

---

१. कस्मादेतावदाश्वासितास्मि।

२. सखि कथय।

३. सखि, कथितमेव हृदयावेगसूचकैर्दीर्घनिःश्वासैः।

४. सखि, काहमेतस्य तेनैवात्मानं पणीकृत्य मृत्युकवलादाकृष्टस्य तस्यैव परकीयस्य कृत्यकिंकरस्यात्मनः शरीरस्य।

५. सदृशं खलु महानुभावतायाः।

६. स्मरिष्यस्येतद्वचनम्।

७. कथं द्वितीययामविच्छेदपटहस्ताड्यते। तद्यावन्नन्दनं निर्भर्त्स्य सपाद-पतनं वाभ्यर्थ्य मालत्या उपर्यनुकूलयिष्यामि।

---

हसाहसेन सहधर्मचारिणीं करोति तदा कीदृशी प्रतिपत्तिः किं प्रतिपत्तव्यम्। मन्मथबलात्कारः संजातो यस्मिंस्तादृशः। कंदर्पजननीं प्रद्युम्नमातरं मन्मथविकारहेतुं च। पुरुषोत्तमो हरिः पुरुषश्रेष्ठश्च॥ **मदयन्तिका**। कस्मादेतावदाश्वासितास्मि। मनोरथमात्रमिदं न संभाव्यत इति भावः॥ **बुद्धरक्षिता**। सखि, कथय। व्यक्तीकृत्येति शेषः॥ **लवङ्गिका**। सखि, कथितमेव हृदयावेगसूचकैर्दीर्घनिःश्वासैः। इष्टमेवैतद्यदि सिद्ध्येदिति कथितमेवेत्यर्थः। तस्मान्मकरन्दानयनोपायश्चिन्त्यतामिति भावः॥ **मदयन्तिका**। सखि, काहमेतस्य तेनैवात्मानं पणीकृत्य मृत्युकवलादाकृष्टस्य तस्यैव परकीयस्य कृत्यकिंकरस्यात्मनः शरीरस्य॥ **लवङ्गिका**। सदृशं खलु महानुभावतायाः। त्वदुक्तमिति शेषः॥ **बुद्धरक्षिता**। स्मरिष्यस्येतद्वचनम्॥ **मदयन्तिका**। कथं द्वितीययामविच्छेदपटहस्ताड्यते। तद्यावन्नन्दनं

( मकरन्दो मुखमुद्धाट्य तां हस्ते गृह्णाति ।)

**मदयन्तिका**—सहि मालदि, पडिबुद्धासि । (विलोक्य सहर्षं ससाध्वसं च ।) अह्महे, अण्णं एदं एव्वं वट्टइ ।

**मकरन्दः**—

रम्भोरु संहर भयं क्षमते विकार-
मुत्कम्पिनः स्तनतटस्य न मध्यभागः ।
इत्थं त्वयेव कथितप्रणयप्रसादः
संकल्पनिर्वृतिषु संस्तुत एष दासः ॥ २ ॥

**बुद्धरक्षिता**—(मदयन्तिकामुखमुन्नमय्य संस्कृतमाश्रित्य ।)

प्रेयान्मनोरथसहस्रवृतः स एष
सुप्तप्रमत्तजनमेतदमात्यवेश्म ।
प्रौढं तमः कुरु कृतज्ञतयैव भद्र-
मुत्क्षिप्तमूकमणिनूपुरमेहि यामः ॥ ३ ॥

---

१. सखि मालति, प्रतिबुद्धासि । अहो, इदमन्यदेव वर्तते ।

---

निर्भर्त्स्य सपादपतनं वाभ्यर्थ्य मालत्या उपर्यनुकूलयिष्यामि ॥ **मदयन्तिका** । सखि मालति, प्रतिबुद्धासि । प्रियतमदर्शनं हर्षहेतुः, कुलकन्यकाजनानुचितव्यापारासक्तिश्च साध्वसहेतुः । अहो इत्याश्चर्यम् । इदमन्यदेव वर्तते । प्रस्तुतमालतीनन्दनसंघटनादन्यदेव मकरन्दमदयन्तिकासंघटनसंधानं वर्तत इत्यर्थः । अथ मकरन्दो लज्जावैलक्ष्यशङ्कानिरासेनोन्मुखीकर्तुं प्रियतमां चाटूक्त्या प्रसादयति —**रम्भोर्विति** । हे रम्भोरु कदलीस्तम्भवत्पीवरोरु, अकाण्डे भयं कोऽसावपरिचित इति मत्साध्वसं त्यज । उत्कम्पिनः साध्वसजनितोत्कम्पतरलस्य स्तनयुगलस्य विकारं विक्षोभमतिकनीयान्मध्यभागो न सहते । यतोऽपरिचिताद्धि भीतिर्भवति । एष इति स्वात्मानं निर्दिशति । अयं जनस्तु नासंस्तुतः किंत्वित्थं पूर्वं त्वदुक्तेन प्रकारेण त्वयैव कथितप्रणय एव प्रसादो यस्य स तादृशः संकल्पसमागमेषु परिचितो दास एव । तत्र कथं ते साध्वसवैलक्ष्यमित्यर्थः ॥ २ ॥ अथ बुद्धरक्षिता कुमारीजनसुलभलज्जावशादितिकर्तव्यतामूढां मदयन्तिकां प्रतिबोधयन्ती तस्या मुखमुन्नमय्यायमेव त्रपां शिथिलीकृत्य मकरन्दवरणसमय इत्यत्र हेतूनुपन्यस्यति—**प्रेयानिति**। यः पूर्वं त्वयैव मनोरथसहस्रैर्वृतः स एष प्रेयान्निरतिशयप्रेमास्पदं जनः संनिहितो वर्तते । एतच्चामात्यगृहं सुप्तानवहितरक्षितृजनम् ।तेनात्र कश्चित्पश्येदिति शङ्कापि नास्ति । प्रौढं तमः । तेन नगरपालकेभ्योऽपि शङ्का निरस्ता । तस्मात्कृतज्ञतयैव भद्रं मकरन्दपाणिग्रहणमङ्गलं कुरु । अनन्तरमूर्ध्वमुत्क्षिप्तमणिनूपुरं यथा

**मदयन्तिका**—सहि[1] बुद्धरक्खिदे, कहिं पुणो दाणिं अह्मेहिं गन्दव्वं ।

**बुद्धरक्षिता**—जहि[2] एव्व मालदी गआ ।

**मदयन्तिका**—किं[3] णिव्वुत्तसाहसा मालदी ।

**बुद्धरक्षिता**—अह[4] इं । अण्णं अ तुमं भणासि । ('का हं इमस्स' इत्यादि पठति ।)

(मदयन्तिकाश्रूणि पातयति ।)

**बुद्धरक्षिता**—महाभाअ[5], दिण्णो खु सअं अप्पा पिअसहीए ।

**मकरन्दः**—

अद्योर्जितं विजितमेव मया किमन्य-
दद्योत्सवः फलवतो मम यौवनस्य ।
यन्मे प्रसादसुमुखेन समुद्यतेयं
देवेन बान्धवधुरा मकरध्वजेन ॥ ४ ॥

---

१. सखि, बुद्धरक्षिते, क्व पुनरिदानीमस्माभिर्गन्तव्यम् ।
२. यत्रैव मालती गता ।
३. किं निर्वृत्तसाहसा मालती ।
४. अथ किम् । अन्यच्च त्वं भणसि ।
५. महाभाग, दत्तः खलु स्वयमात्मा प्रियसख्या ।

---

स्यादेवं यामः । एहि । नूपुरध्वनिरन्यैर्यथा न श्रूयते, तथोर्ध्वमुत्क्षिप्य कैश्चिदप्यलक्षिता यत्र मालतीमाधवौ तत्रैव यामस्त्वरितं मा लज्जस्वेत्यर्थः ॥ ३ ॥ **मदयन्तिका** । सखि बुद्धरक्षिते, क्व पुनरिदानीमस्माभिर्गन्तव्यम् ॥ **बुद्धरक्षिता** । यत्रैव मालती गता ॥ **मदयन्तिका** । किं निर्वृत्तसाहसा मालती । साहसं स्वयमेवात्मप्रदानम् ॥ **बुद्धरक्षिता** । अथ किम् । निर्वृत्तसाहसैवेत्यर्थः । अन्यच्च त्वं भणसि । 'काहमेतस्य' इत्यादि पठति । त्वया यदुक्तं तदनुरूपं विधेहीत्यर्थः॥मदयन्तिका गुरुजनविधीयमानसंप्रदान इव स्वयमश्रूणि पातयति ॥ बुद्धरक्षिता आनन्दाश्रुविमोचनेनैव तस्याः स्वात्मप्रदानमधिगम्याह—महाभाग, दत्तः खलु स्वयमात्मा प्रियसख्या । आनन्दाश्रुपूर्वकमिति भावः ॥ **मकरन्दः—अद्येति** । अद्य प्रियतमालाभान्मयोर्जितं बलं यथा स्यादेवं विजितमेव सर्वोत्तरत्वं संपादितमेव । किमन्यदितः परमाशास्यमवशिष्टम् । न किंचिदित्यर्थः । तथा फलवतो दयिताप्राप्त्यैव सफलस्य मे नवयौवनस्याद्योत्सवो मङ्गलदिनम् । यन्मे प्रसादसुखेन मकरध्वजेन माधवाभिलषितं संपाद्य मदभिलषितमपि संपादयता बान्धवधुरा

तदनेन पक्षद्वारेण साधयामः ।

(निभृतं परिक्रामन्ति ।)

**मकरन्दः**—अहो निशीथनिःसंचाररमणीयता राजमार्गस्य । संप्रति हि ।

प्रासादानामुपरि वलभीतुङ्गवातायनेषु
प्राप्तामोदः परिणतसुरागन्धसंस्कारगर्भः ।
माल्यामोदी मुहुरुपचितस्फीतकर्पूरवासो
वातो यूनामभिमतवधूसंनिधानं व्यनक्ति ॥ ५ ॥

(इति निष्क्रान्ताः सर्वे ।)

**इति महाकविश्रीभवभूतिविरचिते मालतीमाधवे सप्तमोऽङ्कः ।**

...

---

बन्धुकुलमुद्यतोचितपदं प्रापिता ॥ ४ ॥ पक्षद्वारेण पार्श्वद्वारेण साधयामो गच्छामः ॥ समीहितं निशीथे निःसंचारेण राजमार्गस्य रमणीयतास्मत्प्रयाणानुगुण्यं वर्तते ॥ **प्रासादानामिति** । सौधानामुपरिभागेषु वलभीजालगवाक्षमार्गेषु प्रवेश्य प्राप्तामोदः । 'भ्रान्त्यावृत्तः' इति पाठे गवाक्षमार्गेण हर्म्यतलेषु परिभ्रम्य पुनरावृत्तः । अत एव परिणतमद्यगन्धजनितवासनानुविद्धः । माल्यामोदी पुनः पुनरनुषक्तस्फुरद्धनसारगन्धी वातो यूनामभिलषितं युवतीसंनिधानं व्यनक्तीति मद्यपानमाल्यादिभिः सुरतादिभोगो व्यज्यते ॥ ५ ॥

मद्याख्यामन्थमथिताद्भवभूतिवचोम्बुधेः ।
रसामृतमभिव्यक्तं स्वादयन्तु बुधाश्चिरम् ॥

**इति श्रीमद्भारद्वाजकुलतिलकपर्वतनाथयायजूकनन्दनत्रिपुरारिसूरिविरचितायां मालतीमाधवभावप्रदीपिकायां सप्तमाङ्कविवरणम् ॥**

# अष्टमोऽङ्कः।

( ततः प्रविशत्यवलोकिता । )

**अवलोकिता**—वंन्दिदा मए णन्दणावसथपडिणिउत्ता भअवदी। ता जाव मालदीमाहवसआसं गच्छह्मि । (परिक्रम्य।) एदे दे परिणिउत्तिदगिह्मदिअहावसाणमज्जाणा दीहिआतीरसिलातलं अलंकरेदि । ता उपसप्पामि । (इति निष्क्रान्ता ।)

**प्रवेशकः ।**

(ततः प्रविशतो मालतीमाधवौ उपविष्टावलोकिता च ।)

**माधवः**—(सानन्दम् ।) वर्धते हि मन्मथप्रौढसुहृदो निशीथस्य यौवनश्रीः । तथा हि ।

दलयति परिशुष्यत्प्रौढतालीविपाण्डु-
स्तिमिरनिकरमुद्यन्नैन्दवः प्राक्प्रकाशः ।
वियति पवनवेगादुन्मुखः केतकीनां
प्रचलित इव सान्द्रः स्फारस्फारं परागः ॥ १ ॥

---

१. वन्दिता मया नन्दनावसथप्रतिनिवृत्ता भगवती । तद्यावन्मालतीमाधवसकाशं गच्छामि । एतौ तौ परिनिर्वर्तितग्रीष्मदिवसावसानमज्जनौ दीर्घिकातीरशिलातलमलंकुरुतः । तदुपसर्पामि ।

---

**विबुधरत्नावली ।**

अथ मालतीमाधवयोः कामन्दक्यावसथस्थितयोः कृत्यवेशसंपादनानुगुणव्यापारार्थमवलोकिताप्रवेशः। **अवलोकिता**। वन्दिता मया नन्दनावसथप्रतिनिवृत्ता भगवती।तद्यावन्मालतीमाधवयोः सकाशं गच्छामि । परिक्रम्य।पश्यतीति शेषः। एतौ तौ परिनिर्वर्तितग्रीष्मदिवसावसानमज्जनौ दीर्घिकातीरशिलातलमलंकुरुतः। तदुपसर्पामि॥ **माधवः**। निशीथस्य वक्ष्यमाणचन्द्रोदयत्वेन मन्मथप्रौढसुहृदः। मन्मथसुहृत्ता च मन्मथसाध्यानुकूलकरणात् । तत्र समये । 'सानन्दसाध्वसाः सुरतव्यवसायिन्यो भवन्ति' इति वात्स्यायनः । तथा हीति कृत्वा तस्या एव निशीथयौवनश्रिय उत्कर्षनिमित्तं व्यनक्ति—**दलयतीति** । उद्गच्छन्नैन्दवः प्रकाशस्तद्वच्छुष्यत्तालीपत्रपाण्डुवर्णस्तिमिरस्तोमं भिनत्ति। मरुद्वेगोद्भिदकेतकीपराग इव स्फारस्फारसुन्मुखीभूय प्रचलित इव प्रकाशोपमा ॥ १ ॥ कुलकुमारीत्वेन तथा प्रत्यवसितचा-

---

१. अष्टम-नवम-दशमाङ्कानां त्रिपुरारिकृता व्याख्या नोपलब्धेस्ततः परं नान्यदेवविरचिता टीका मुद्रिता.

(स्वगतम् ।) तत्कथं वामशीलां मालतीमुपावर्तये । भवत्वेवं तावत् । (प्रकाशम् ।) प्रिये मालति, प्रत्यग्रसायंतनस्नानविशेषशीतलां भवतीं निदाघसंतापशान्तये किंचिद्विज्ञापयामि । तत्किमित्यन्यथैव मां संभावयसि ।

निश्च्योतन्ते सुतनु कबरीबिन्दवो यावदेते
यावन्मध्यः स्तनमुकुलयोरार्द्रभावं जहाति ।
यावत्सान्द्रप्रतनुपुलकोद्भेदवत्यङ्गयष्टि-
स्तावद्गाढं वितर सकृदप्यङ्कपालीं प्रसीद ॥ २ ॥

अयि मालति निरनुक्रोशे,

---

रित्रत्वेन च तदभिप्रायानुकूलं गम्यमित्याचरन्तीं वामशीलामिव वामशीलामुपावर्तये स्वाभिमतसिद्धिप्रगुणचित्तां करोमि । भवत्वित्युपायस्मरणे । एवं तावत्कामसूत्रोक्तेन कन्याविस्रम्भणोपायेनोपावर्तनार्थं यतिष्य इत्यभिप्रायेण मतिं व्यवस्थाप्य प्रकाशमाह—**प्रिय इति**। अत्र निदाघसंतापशान्तय इत्युक्त्या संतापप्रतीकारधिया न रागितयैव त्वदङ्गसङ्गप्रार्थनार्थं विज्ञापयामीति प्रेमगर्भं विनयप्रदर्शनम् । **निश्च्योतन्त इति**। सुतन्विति संबोधनेनालिङ्गनात्यन्तोपयुक्तस्य नायिकाशरीरस्यातिरमणीयकप्रदर्शनं किमितीदृश्यां दशायां दर्शनार्हं मां न संभावयसि । मया त्वं यस्मिन्नवसरे स्मशानभुवि संभावितासि तत्सदृश एवायं समय इत्याशयः । निश्च्योतन्त इत्यात्मनेपदं चिन्त्यम् । अथ स्नानविमुक्तबन्धकबरीसङ्गिनो जलबिन्दवो यावदेव पतन्ति, यावद्वा स्तनद्वन्द्वान्तर्भागः स्नानजलार्द्रो वर्तते, यावच्च स्नानशैत्यात्सान्द्रपुलकत्वं गता तावदेवाश्लेषं देहि, प्रसन्ना भव । एतेन मालत्येवं जानातु यत्किल मदङ्गवर्तिमज्जनजनितशैत्यमेवास्य स्पर्शसंतापशान्तये सत्यमभीष्टम्, न पुनः कामन्दकीलवङ्गिकाद्यभिप्रायानपेक्षमेव परिणयविधानमनादृत्य किंचिच्चिकीर्षुरिति विमृश्य मालती मह्यं कापालिकवधोपकारबुद्ध्या वितरत्विति माधवस्याशयः । वस्तुतस्तु जलमज्जनजन्यां तात्कालिकीं कान्तिं शोभामिति स तत्र कान्तिगतालंकारत्वेन भरतमुनिसंमतामवलोक्यातिरागादेवाश्लेषप्रार्थनायां प्रवृत्तः। 'रूपयौवनलावण्यादुपभोगोपबृंहितैः । अलंकरणमङ्गानां शोभेति परिकीर्तिता । कान्तिरित्युच्यते सापि शोभैवापूर्णमन्मथा ॥' तथा । 'उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा धृत्वा चान्येन वासो विलुलितकबरीभारमंसे वहन्त्याः । भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः शय्यामालिङ्ग्य नीतं वपुरतिविचलद्बाहु लक्ष्म्याः पुनातु ॥' इति ॥२॥ अथ कामसूत्रविन्माधवस्तद्वचस्यपि 'अनुत्तरां चोपलक्ष्यात्'(?) इत्यादिकां द्वितीयभूमिकामधिरोपयन्नाह—**अयीति**। निरनुक्रोशे इति रोषोद्भावनेन मालत्या विभीषिका दर्शिता। यथाह वात्स्यायनः—'एवं चित्तानुगो बालामुपायेन प्रसादयेत्। तथा चेत्सानुरागा च विस्रब्धा चापि जायते ॥ नात्यन्तमानुलोम्येन न चातिप्रातिकूल्यतः । सिद्धिं गच्छति कन्यासु तस्मान्मध्येन साध-

जीवयन्निव समूढसाध्वस-
स्वेदबिन्दुरधिकण्ठमर्प्यताम् ।
बाहुरैन्दवमयूखचुम्बित-
स्यन्दिचन्द्रमणिहारविभ्रमः ॥ ३ ॥

अथवा दूरे तावदेतत् । कथमालापसंविभागस्याप्यभाजनमयं जनो भवत्याः ।

दग्धं चिराय मलयानिलचन्द्रपादै-
र्निर्वापितं तु परिरभ्य वपुर्न नाम ।
आमत्तकोकिलरुतव्यथिता तु हृद्या-
मद्य श्रुतिः पिबतु किंनरकण्ठि वाच्यम् ॥ ४ ॥

**अवलोकिता**—अई अणिव्वहणसीले, जं दाणिं मुहूत्तमेत्तन्दरिअमाहवा दुम्मणाअन्ती मह पुरदो भणासि । चिराअदि अज्जउत्तो । अवि णाम किअच्चिरेण पेक्खिस्सं, जेण पुणो विवड्ढिआसेससज्झसा

१. अयि अनिर्वहणशीले, यदिदानीं मुहूर्तमात्रान्तरितमाधवा दुर्मनायमाना मम पुरतो भणसि । चिरायत आर्यपुत्रः । अपि नाम कियच्चिरेण प्रेक्षि-

येत् ॥ आत्मनः प्रीतिजननं योषितां मानवर्धनम् । कन्याविस्रम्भणं वेत्ति यश्च तासां प्रियो भवेत् ॥ अतिलज्जान्वितेत्येवं यस्तु कन्यामुपेक्षते । सोऽनभिप्रायवेदीति पशुवत्परिभूयते ॥' इत्यादि । **जीवयन्निति** । मां गतजीवितप्रायं जीवयन्निव धृतसाध्वसस्वेदरूपसात्त्विकभावो बाहुरधिकण्ठं कण्ठे मदीये स्वयमेवार्प्यताम् । यथा प्रार्थित एव भवदुपरि प्रकोष्ठो मया कापालिकापसरणायार्जितस्तथेत्याशयः । ऐन्दवमयूखचुम्बनेन यः स्रवणशीलश्चन्द्रकान्तमणिहारस्तद्विलासस्तत्सदृशः । सोऽपि संतापशान्त्यै कण्ठे समर्प्यते । अत्र चाङ्कपाली देहि तथाधिकण्ठं बाहुरर्प्यतामिति च प्रार्थनाद्वयेन कन्यानुद्वेगकरमुपक्रमं कामसूत्रोक्तं स्मारयति । 'पूर्वकायेन चोपक्रमो विषह्यत्वात्' ॥३॥ अथवा कण्ठबाह्वर्पणानुरूपं दूरे तावदत्यन्तदुर्लभत्वात् । मन्दपुण्यः कथं केन हेतुनालापसंविभागस्यानुरागव्यञ्जकवाक्यामृतस्याप्यभाजनमस्थानम् । **दग्धमिति** ।'मम वपुस्तावच्चिरं मलयानिलादिभिः स्मरोद्दीपनविभावैस्त्वत्प्राप्त्यर्थमेव यतमानस्य दग्धमिव । दग्धं यदस्ति तत्परिरभ्य न निर्वापितं न निर्वृत्तिं नीतमेव । तदेव तावन्महदनौचित्यं तदनुचितं मया न गृहीतं तर्हि श्रुतिर्मदीया मदान्धकोकिलकुहूकारेणात्यन्तमदनोद्दीपनेन व्यथिता संजातदुःखा । हे किंनरकण्ठि, ते वाचं हृद्यां हृदयहारिणीं पिबतु । तुशब्दावत्र क्रमेण पुनरर्थौ । नामशब्द इवार्थः । किंनरमधुरकण्ठत्वेन कोकिलध्वनिस्त्वद्वचनादहृद्य इति चाटुकारित्वम् ॥४॥ **अवलोकिता** । अयि अनिर्वहणशीले, यदिदानीं मुहूर्तमात्रान्तरितमाधवा ।

विसुमरिअणिमेसविब्भं ओलोअन्ती एव्वं भणिस्सं । दुउणिआवेट्ठणपरिरम्भणेण संभावइस्सं ति । स एव्व अअं परिणामो ।

(मालती सासूयमिव तां पश्यति ।)

**माधवः**—(अपवार्य।) अहो भगवत्याः प्रथमान्तेवासिन्याः सर्वतोमुखं वैदग्ध्यमक्षय्यसुभाषितरत्नसंचारसंस्करणम् । (प्रकाशम् ।) प्रिये, सत्यमवलोकिता वदति ।

(मालती मूर्धानं चालयति ।)

**माधवः**—शापितासि मम लवङ्गिकावलोकितयोश्च जीवितेन यदि मे न कथयसि ।

---

ष्ये, येन पुनर्विवर्धिताशेषसाध्वसा विस्मृतनिमेषविभ्रमवलोकयन्त्येवं भणिष्यामि । द्विगुणितावेष्टनपरिरम्भेण संभावयिष्य इति । स एवायं परिणामः ।

---

मुहूर्तमात्रान्तरितश्वासौ माधवश्चेति विग्रहः। दुर्मनायमाना मम पुरतो भणसि।चिरायत आर्यपुत्रः । अपि नाम कियता चिरेण प्रेक्षिष्ये। येन पुनर्विवर्धिताशेषसाध्वसा विस्मृतनिमेषविघ्नं यथा स्यादेवं नयननिमीलनमेव विभ्रमवलोकयन्त्येवं भणिष्यामि द्विगुणितावेष्टनपरिरम्भेण संभावयिष्य इति । मदग्रतः प्रागेवमङ्गीकृतस्य स एवायमाश्लेषावसरस्य परिणामोऽयमधुना संलापितेऽपि वैदग्ध्यमित्याशयः ॥ मालती सासूयमिव पश्यतीत्याशयः । न तु सासूयमेव । असूया च कोपो विज्ञेयः।कोपाविष्करणं मद्रहस्यमीदृशमनया व्यक्तीकृतमिति हेतोः । वस्तुतस्तु पूर्वानुरागदर्शितमनोरथोऽनयावसरे प्रकटीकृत इति सानन्दमेव पश्यतीत्याशयः ॥ **माधवः**। प्रथमान्तेवासिन्या इत्युक्त्या कामन्दक्या तादृग्दूत्याचार्यकमपि किमस्यै सम्यगुपदिष्टं यतः प्रस्तावे मद्विधेयानुगुणमस्या रहस्योद्भेदनमिति कृतवतीत्याशयः । अक्षय्योऽशोष्यो नवनवस्फूर्तिशोभनभाषितान्येव रत्नानि तेषां संचारोऽन्यत्र मुख्यवृत्तेरन्यत्रापि कार्यानुकूलत्वेन निवेशनम् । संस्करणमग्राम्यतापादनम् । प्रकाशम् । पृच्छतीति शेषः । यदवलोकितयोक्तं तत्सत्यमुतोत्प्रायं कथयतीति प्रश्नस्यायमभिप्रायः । यदि तावत्पृष्टा नोत्तरं दास्यति तदानुमतिरस्या इत्याकूतोपलब्धिर्भविष्यति । उत्तरप्रदाने चास्या वचनश्रवणलाभो भवितेति वात्स्यायनोक्तेरालापयोजनेऽन्तर्भावः प्रश्नस्येत्याशयः । तदाह—'सखीं चानुकूलामुभयोरपि विस्रब्धामन्तरा कृत्वा कथायोजनम् । तस्मिन्नधोमुखी विहसेत् । तां चातिवादिनीमधिक्षिपेद्विवदेच्च । परिहासार्थमिदमनयोक्तमिति चानुक्तमपि ब्रूयात् । तत्र तामपनुद्य प्रतिवचनार्थमसंपूर्णवाक्यार्थं तूष्णीमासीत् । निर्बध्यमाना तु नाहमेवं ब्रवीमीत्यव्यक्ताक्षरमनवसितार्थं वचनं ब्रूयात् । नायकं च विहसन्ती कटाक्षैः प्रेक्षेत'इत्यादयोऽपीत्यत्रानवसितार्थमसंपूर्णवाक्यार्थम्। मालती न मयैवमुक्तमिति प्रतिपादनार्थं प्रातिकूल्येन शिरश्चालयति । 'निर्बध्यमाना तु शिरःकम्पेन प्रतिवचनं ददाति' इति वात्स्यायनः ॥ **माधवः**। लवङ्गि-

**मालती**—[1]णाहं किं वि जाणामि । (इत्यर्धोक्ते लज्जां नाटयति ।)

**माधवः**—अहो अनवसितार्थरम्यवचसश्चारुता । (सहसा निरूप्य ।) अवलोकिते, किमेतत् ।

वाष्पाम्भसा मृगदृशो विमलः कपोलः
प्रक्षाल्यते सपदि राजत एष यस्मिन् ।
गण्डूषपेयमिव कान्त्यमृतं पिपासु-
रिन्दुर्निवेशितमयूखमृणालदण्डः ॥ ५ ॥

**अवलोकिता**—[2]सहि, किं दाणिं उच्चलिअबाहुप्पीडं रोदिअदि ।

**मालती**—[3]सहि, केच्चिरं लवङ्गिआए असण्णिहाणदुक्खं अनुहविस्सं । पउत्तिलाहो वि से दुल्लहो ।

**माधवः**—अवलोकिते, किं नामैतत् ।

---

१. नाहं किमपि जानामि ।

२. सखि, किमिदानीमुच्चलितबाष्पोत्पीडं रुद्यते ।

३. सखि, कियच्चिरं लवङ्गिकाया असंनिधानदुःखमनुभविष्यामि । प्रवृत्तिलाभोऽपि तस्या दुर्लभः ।

---

कावलोकितयोर्जीवितेन शापितासीत्युक्त्या लवङ्गिकावलोकिते तवात्यन्तहितप्रवृत्ते अनतिक्रमणीयवचने चेत्याशयः ॥ **मालती** । नाहं किपपि जानामीत्युक्त्या चात्मनः कुमारीभावप्रतिपादनार्थं लज्जामिव लज्जां दर्शयति । यथा गुरुजनाननपेक्ष्य साहसानुष्ठानेन सहजलज्जाया असंभवात् ॥ **माधवः** । अनवसितार्थत्वेन रम्यं यद्वचस्तस्य चारुता । निरूप्य । वदतीति शेषः । एतेनानवसितार्थत्वं गम्यते । 'तेन च निर्बध्यमाना नाहमेवं ब्रवीमीत्यनवसितार्थं वचनं ब्रूयात्' इति वात्स्यायनोक्तं स्मारयति । अथ मालत्येककरार्पितकपोलमश्रु पातयतीति गम्यते । तेनाश्रुपातनिमित्तं माधवोऽवलोकितां पृच्छति । अवलोकिते, किमेतदनौपयिकमश्रुपातनमिति । त्वमस्या रहस्यवेदिनीति भावः । **बाष्पेति** । अस्या मृगाक्ष्याः स्वभावत एव मलशून्यं किमिति प्रक्षाल्यते । सपदि । आवयोर्वचनान्तरमित्यर्थः । यत्र कपोले स्वभावनिर्मलत्वेनाश्रुजलपूतत्वेन चेन्दुः प्रतिफलितमयूखत्वेन राजते । अस्या मुखामृतसरस्यमृतं पातुमिच्छन्विक्षिप्तरश्मिबिसकाण्ड इवैककरसंक्रान्तत्वेनैककपोलस्याश्रुणा प्रक्षालनं युज्यते ॥ ५ ॥ **अवलोकिता** । सखि, किमिदानीमुच्चलितबाष्पोत्पीडं यथा स्यादेवं रुद्यते ॥ **मालती** । सखि, कियच्चिरं लवङ्गिकाया असंनिधानदुःखमनुभविष्यामि । प्रवृत्तिलाभोऽपि तस्या दुर्लभः । इति

**अवलोकिता**—तुह[१] एव्व वअणोवण्णासेण एसा लवङ्गिअं सुमरिअ ताए पउत्तिलाहणिमित्तं उत्तम्मिअदि ।

**माधवः**—नन्विदानीमेव हि मया कलहंसः प्रेषितः । गच्छ त्वं प्रच्छन्नमुपगम्य नन्दनावसथं प्रवृत्तिमुपलभस्वेति । (साशंसम् ।) अवलोकिते, अपि नाम बुद्धरक्षिताप्रयत्नः फलोदर्क एव मदयन्तिकां प्रति स्यात् ।

**अवलोकिता**—महाभाअ[२], पुढमं एव्व सद्दूलणहरालंकिदस्स मअरन्दस्स मोहविच्छेअं णिवेदअन्तिए भअवदीए णिउत्तेण भवदा मालदीए समं जीविदेण हिअअं पसादीकिदं । को वि संपदं मदअन्तिआलाहो वड्ढावेदि । तस्स किं दाणिं पारितोसिअं हविस्सदि ।

**माधवः**—अनुयोक्तव्यमेवानुयुक्तोऽस्मि । (हृदयमवलोक्य ।) इयमस्ति मालतीप्रथमदर्शनाभिषङ्गसाक्षिणी कामकाननालंकारस्य लक्ष्मीवतः केसरतरोः प्रसवमाला ।

---

१. तवैव वचनोपन्यासेनैषा लवङ्गिकां स्मृत्वा तस्याः प्रवृत्तिलाभनिमित्तमुत्ताम्यति ।

२. महाभाग, प्रथममेव शार्दूलनखरालंकृतस्य मकरन्दस्य मोहविच्छेदं निवेदयन्त्या भगवत्या नियुक्तेन भवता मालत्या समं जीवितेन हृदयं प्रसादीकृतम् । कोऽपि सांप्रतं मदयन्तिकालाभो वर्धयिष्यति । तस्य किमिदानीं पारितोषिकं भविष्यति ।

---

रुध्यत इति शेषः ॥ **अवलोकिता** । तवैव वचनोपन्यासेनैषा लवङ्गिकां स्मृत्वा तस्याः प्रवृत्तिलाभनिमित्तमुत्ताम्यति ॥ **माधवः** । अपि नामेति संभावनायाम् । मदयन्तिकां प्रति दूतीव्यापार उदर्कस्तेनैवोत्तरफले लब्धे पुनः फलपदोपादानं प्रस्तुतफलप्रतिपादनार्थम् ॥ **अवलोकिता** । महाभाग, प्रथममेव शार्दूलनखरालंकृतस्य मकरन्दस्य मोहविच्छेदं निवेदयन्त्या भगवत्या नियुक्तेन भवता मालत्या समं जीवितेन हृदयं प्रसादीकृतम् । कोऽपि सांप्रतं मदयन्तिकालाभो वर्धयिष्यति । तस्य किमिदानीं पारितोषिकं भविष्यति ॥ **माधवः** । प्रष्टव्यमेव पृष्टोऽसि । त्वया विमुक्तं कर्म तावन्नोपादेयं वस्तु वेति । पृच्छिधातोर्द्विकर्मकत्वादिति शेषः । अथ माधवो हृदयजीवितयोः प्रागेव पारितोषिकत्वेन दत्तत्वात्तयोरप्यधिका मद्वक्षसि केसरस्रगवशिष्यते । पारितोषिकार्थं हृदयमालोक्येयमस्तीति शेषः । मालत्या या मत्प्रथमदर्शनेऽभिषङ्गस्य साक्षिणी तदधोभागावस्थितस्य मम प्रेयसीदर्शनफलपर्यन्तं गतमिति शकुनत्वेन बहुमन्यमाना । कामकाननालंकारकारिणो लक्ष्मीवत इति

प्रेम्णा मद्ग्रथितेति वा प्रियसखीहस्तोपनीतेति वा
विस्तारिस्तनकुम्भकुड्मलभरोत्सङ्गेन संभाविता ।
संप्राप्तेऽप्यथ पाणिपीडनविधौ मां प्रत्यपेताशया
या मय्येव लवङ्गिकेत्यवगते सर्वस्वदायः कृता ॥ ६ ॥

**अवलोकिता**—[1]सहि मालदि, वल्लहा क्खु दे इअं वउलमाला । एसा दाणिं परस्स हत्थं गमिस्सदि ।

**मालती**—[2]पिअं पिअसही उवदिसदि । अवलोइदे, उभअं वि तुमं एव्व उवदिस ।

**अवलोकिता**—[3]कहं पदसद्दो विअ ।

**माधवः**—(नेपथ्याभिमुखमवलोक्य ।) अये, कलहंसः संप्राप्तः ।

**मालती**—[4]दिट्ठिआ वड्ढसि मदअन्तिआलाहेण ।

---

१. सखि मालति, वल्लभा खलु त इयं बकुलमाला । एषेदानीं परस्य हस्तं गमिष्यति ।

२. प्रियं प्रियसख्युपदिशति । अवलोकिते, उभयमपि त्वमेवोपदिश ।

३. कथं पदशब्द इव ।

४. दिष्ट्या वर्धसे मदयन्तिकालाभेन ।

---

विशेषणद्वयम् । तस्यैव केसरतरोः । कुसुमग्रथितेति यावत् । स्वोत्कण्ठातिशयद्योतनं तथा प्रेम्णेति श्लोकेन व्यनक्ति—**प्रेम्णेति** । या प्रसवमालास्याः प्रियसखीहस्त उपनीता । या च विस्तारी परिणाही यः स्तनकुम्भकुड्मलभरस्तस्योत्सङ्गस्तेनोत्सङ्गारोपणेन संभाविता स्वाभिप्रेतार्थसाधकत्वेनैव गौरवं नीता । अत्र कुम्भशब्देन स्थूलत्वम् । कुड्मलशब्देन कलिकापर्यायेण वर्धिष्णुता च स्तनस्य सूचिता । अथानन्तरं नन्दनेन सह पाणिग्रहे संप्राप्तकल्पे मां प्रति निराशतया या कुसुमस्रग्लवङ्गिकेयमित्यवगते मयि सर्वस्वदायः सर्वस्वदानं कृता।एतेन पूर्वमनुरागस्त्वेवद्गासीत् ,इदानीं मदभीष्टार्थसंपादनेन समयोऽतिवाहित इत्याशयः॥६॥**अवलोकिता**। सखि मालति, वल्लभा खलु त इयं बकुलमाला । एषेदानीं परस्य त्वदन्यस्य प्रियनिवेदकस्य हस्तं गमिष्यति । तदद्य त्वमेव प्रियनिवेदिका भवेत्याशयः ॥ **मालती** । मालत्यास्तु प्रियतमकण्ठात्स्वकण्ठं गतां भूयश्च स्वकण्ठात्प्रियतमकण्ठं गतां विलोक्यापूर्वानुरागेष्टसंपादकस्येयं तथा तद्वारैषावयोरन्तःकरणसंबन्धदार्ढ्यार्थे स्नेहसूत्रस्थानीयेयमिति संचिन्त्यावेशात्प्रियं प्रियसख्युपदिशतीति द्विरुक्तिः । अवलोकिते, उभयमपि त्वमेवोपदिश । येन परहस्तं व्रजति किं ब्रवीमीत्याशयः॥ **अवलोकिता**। कथं पदशब्द इव । श्रूयत इति शेषः ॥ **माधवः** । अयेशब्द आश्चर्ये ॥ **मालती** । दिष्ट्यानन्देन

**माधवः**—(सहर्षं परिष्वज्य ।) प्रियं नः । (इति बकुलमालां कण्ठे ददाति ।)

**अवलोकिता**—णिव्वूढो भअवदीए संभावणाभारो बुद्धरक्खिदाए ।[1]

**मालती**—(सहर्षम् ।) अह्मेहिं वि पिअसही लवङ्गिआ दीसइ ।[2] (इत्युत्तिष्ठति ।)

(ततः प्रविशति संभ्रान्तः कलहंसो बुद्धरक्षिता लवङ्गिका मदयन्तिका च ।)

**सर्वाः**—परित्ताअदु[3] महाभाओ । अद्धमग्गे क्खु णअररक्खिपुरिसाभिओओ मअरन्दस्स जादो । तदो तक्कालमिलिदेण कलहंसएण समं अह्मे अणुप्पेसिदाओ ।

**कलहंसः**—जहं[4] इदोमुहागदेहिं अह्मेहिं कलअलो सुदो, तह तक्केमि अण्णं वि पारक्किअं बलं उवागदं ति ।

**मालत्यवलोकिते**—हंद्धि[5] । समं एव्व हरिसुव्वेअसंभेदो उवणदो ।

१. निर्व्यूढो भगवत्याः संभावनाभारो बुद्धरक्षितया ।

२. अस्माभिरपि प्रियसखी लवङ्गिका दृश्यते ।

३. परित्रायतां महाभागः । अर्धमार्गे खलु नगररक्षिपुरुषाभियोगो मकरन्दस्य जातः । ततस्तत्कालमिलितेन कलहंसकेन समं वयमनुप्रेषिताः ।

४. यथेतोमुखागतैरस्माभिः कलकलः श्रुतः, तथा तर्कयाम्यन्यदपि पारक्यं बलमुपागतमिति ।

५. हा धिक् । सममेव हर्षोद्वेगसंभेद उपनतः ।

वर्धसे मदयन्तिकालाभेन॥ **माधवः**।परिष्वज्य। प्रथमं मदयन्तिकाभिलाषतः प्रसङ्गादेवालिङ्गनं विधाय पश्चादेवानुरागपाशमिव प्रियं नः संवृत्तं यन्मदयन्तिकालाभो जात इत्युक्त्वा केसरस्रजं प्रेमसूत्रपाशमिव मालत्याः कण्ठे ददाति ॥ **अवलोकिता** । निर्व्यूढो निर्वाहं नीतो भगवत्याः संभावनाभारो बुद्धरक्षितया । संभावनाभारो मदयन्तिकामकरन्दयोर्दूत्यव्यापारः ॥ **मालती** । अस्माभिरपि प्रियसखि लवङ्गिका दृश्यते । अपि संभावनायाम् । इदमपि संभाव्यत इति शेषः ॥ **सर्वाः** । परित्रायतां महाभागः । अर्धमार्गे खलु नगररक्षिपुरुषाभियोगो मकरन्दस्य जातः । अभियोगः प्रतिरोधः । ततस्तत्कालमिलितेन मकरन्दसंबाधाद्विनिर्गतेन वृत्तावेदनाय कलहंसकेन समं वयमनुप्रेषिताः॥**कलहंसः**।यथेतोमुखागतैरस्माभिरायोधनकलकलः श्रुतः,तथा तर्कयाम्यन्यदपि पारक्यं बलमुपागतमिति। पारक्यं परकीयसैन्यमिति देशी । 'पार' इति लोके ॥ **मालत्यवलोकिते** । सममेव हर्षोद्वेगसंभेद

**माधवः**—सखि मदयन्तिके, स्वागतम्। अनुगृहीतमस्मद्गृहं भवत्या। ननु स्वस्था भवन्तु भवत्यः। एकाकिनोऽपि बहुभिरभियोग इति यत्किंचिदेतद्वयस्यस्य।

हरेरतुलविक्रमप्रणयलालसः साहसे (विधेये)
स एव भवति क्वणत्कररुहप्रचण्डः सखा।
स्फुटत्करटकोटरस्खलितदानसिक्तानन-
द्विपेश्वरशिरःस्थिरास्थिदलनैकवीरः करः॥ ७॥

तदहमपि विक्रान्तिपूतं विलसतः प्रियसुहृदः प्रत्यनन्तरीभवामि। (विकटं परिक्रम्य कलहंसकेन सह निष्क्रान्तः।)

**अवलोकितादयः**—[1]अवि णाम अप्पडिहदा पडिणिव्वट्टिस्सन्दि महाणुहावा।

**मालती**—[2]सहिओ बुद्धरक्खिदावलोइदाओ, तुरिअं गदुअ भअवदीए उत्तन्दं णिवेदेहो। तुमं वि सहि लवङ्गिए, तुरिअं

१. अपि नामाप्रतिहतौ प्रतिनिवर्तिष्येते महानुभावौ।

२. सख्यौ बुद्धरक्षितावलोकिते, त्वरितं गत्वा भगवत्या इमं वृत्तान्तं नि-

उपनत उपागतः॥ **माधवः**। अस्मद्गृहमनुगृहीतं भवत्येत्युक्त्या मकरन्दे स्वात्मनिर्विशेषत्वं मकरन्दस्वीकारेणास्मद्भवनमेव त्वयालंकृतमित्याशयः। एकाकिनोऽपि वीरस्य बहुभिरभियोगः। तथाविधशार्दूलव्यतिकरप्रत्यक्षीकृतपौरुषस्य मत्सहचरतया मत्समानपराक्रमस्य मकरन्दस्य न किंचिदेतद्भवति संत्रासनिमित्तं चित्ते न भवितव्यम्। स्वस्था भवन्त्वित्यर्थः। **हरेरिति**। सिंहस्यैकाकिनः साहसे विधेये स एव स्वकीयः करः सखा भवति। कीदृशः। अतुलेऽसाधारणे विक्रमे यः प्रणयः प्रीतिस्तत्र लालसा वाञ्छा यस्य स तथाविधः। तथा क्वणन्तः शब्दायमाना गजास्थिग्रन्थ्यादिषु ये कररुहास्तैः प्रचण्डः। तथा नखोत्पीडेन स्फुटन्विकसन्करटो गण्डस्तस्य कोटराद्गर्तात्स्खलितं यद्दानं तेन सिक्तमाननं यस्य द्विपेन्द्रस्य शिरसि स्थिरं दृढं यदस्थि तद्दलन एकवीरः श्रेष्ठवीरोऽसहायवीरो वा। एतेन मकरन्दस्यारिसैन्यदलने शस्त्रापेक्षापि नास्तीति मदयन्तिकावित्रासनिरासार्थमुक्तिक्रमः॥ ७॥ तदहमपि विक्रान्त्या विक्रमेण पवित्रं यथा स्यादेवं विलसत इव विलसतोऽवज्ञयैव तैः सह युध्यतः प्रत्यनन्तरीभवामि द्वितीयो भवामि॥ **अवलोकितादयः**। वदन्तीति शेषः। अपि नामाप्रतिहतौ प्रतिनिवर्तिष्येते महानुभावौ माधवमकरन्दौ॥ **मालती**। सख्यौ बुद्धरक्षितावलोकिते, त्वरितं गत्वा भगवत्या इमं वृत्तान्तं नि-

विण्णावेहि अज्जउत्तं । जइ दाव तुह्माणं अह्मे अणुकम्पणीआओ तदो अप्पमत्तं परिक्कमेद्धत्ति ।

(मालतीमदयन्तिकावर्जं सर्वास्तथेति निष्क्रान्ताः ।)

**मालती**—हद्धि । ण जाणीअदि कहं इयदी वेला अतिक्कमेम । होदु । पिअसहीए लवङ्गिआए पडिणिउत्तिमग्गं ओलोअन्ती चिट्ठिस्सम् । (परिक्रामति । साशङ्कम् ।) फुरिदं मे वामं अवामणअणेन । (उपविशति ।)

(ततः प्रविशति कपालकुण्डला ।)

**कपालकुण्डला**—आः पापे, तिष्ठ ।

**मालती**—(सत्रासम् ।) हा अज्जउत्त । (इति वाक्स्तम्भं नाटयति ।)

**कपालकुण्डला**—(सक्रोधहासम् ।) नन्वाक्रन्द, आक्रन्द ।

त्वद्वल्लभः क्व नु तपस्विजनस्य हन्ता
कन्याविटः पतिरसौ परिरक्षतु त्वाम् ।

---

वेदयतम् । त्वमपि सखि लवङ्गिके, त्वरितं विज्ञापयार्यपुत्रम् । यदि तावद्युष्माकं वयमनुकम्पनीयास्ततोऽप्रमत्तं परिक्रामतेति ।

१. हा धिक् । न ज्ञायते कथमियती वेलातिक्रम्यताम् । भवतु । प्रियसख्या लवङ्गिकायाः प्रतिनिवृत्तिमार्गमवलोकयन्ती स्थास्यामि । स्फुरितं मे वाममवामनयनेन ।

२. हा, आर्यपुत्र ।

---

वेदयतम् । त्वमपि सखि लवङ्गिके, त्वरितं विज्ञापयार्यपुत्रम् । यदि तावद्युष्माकं वयमनुकम्पनीयास्ततोऽप्रमत्तं यथा स्यादेवं परिक्रामतेति ॥ **मालती** । हा धिक् । न ज्ञायते कथमियती वेलातिक्रम्यताम् । केन प्रकारेणातिवाह्यतामित्यर्थः। भवतु । प्रियसख्या लवङ्गिकायाः प्रतिनिवृत्तिमार्गं व्यावर्तनमार्गमवलोकयन्ती स्थास्यामि । सखीप्रत्यावृत्तवर्त्मावलोकनमेव समयातिवाहनोपाय इत्याशयः । स्फुरितं मे वाममननुकूलं यथा स्यादेवमवामनयनेन दक्षिणचक्षुषा।स्त्रीणां दक्षिणाक्षिस्फुरणस्यानिमित्तत्वात् । एतच्चानिमित्तं संनिहितमालतीविपत्सूचकमित्याशयः । अथ समस्तपरिजनरहिताया मालत्या हरणार्थे बद्धवैरायाः कपालकुण्डलायाः प्रवेशः॥ आः पापे इति कपालकुण्डलाया वचो निशम्य सत्रासं मालती रोदिति । **मालती** । हा आर्यपुत्रेति । वाक्स्तम्भो गद्गदाख्यः सात्विकभावरूपः । स चाकस्मिकमहाभयनिमित्तः । तल्लक्षणं च—'मदप्रमादव्रीडादेर्वाक्स्तम्भो गद्गदं विदुः' इति । आदिशब्दाद्भयादयोऽपि गद्गदनिमित्तानि भवन्ति ॥ **कपालकुण्डला** । **त्वद्वल्लभ इति** । पातीति पतिः । कन्याविटः कन्यादूषकः । तपस्विजनस्यैव हन्ता, न वीरजनस्य । श्येनस्य मांसादपक्षिविशेषस्य पतनेन चकितानना व्याक्षिप्तानना वर्तिका

श्येनावपातचकितानववर्तिकेव
किं नेक्षसे ननु मया कवलीकृतासि ॥ ८ ॥

यावच्छ्रीपर्वतमुपनीय प्रतिपर्व तिलश एनां निकृत्य दुःखमारिणीं करोमि। (इति मालतीमादाय निष्क्रान्ता।)

**मदयन्तिका**—[1]अहं वि मालदीं एव्व अणुवट्टिस्सं। (परिक्रम्य।) सहि मालदि।

**लवङ्गिका**—(प्रविश्य।) [2]सहि मदअन्तिए, लवङ्गिआ क्खु अहं।

**मदयन्तिका**—[3]अइ, संभाविदो तुए महाणुहाओ।

**लवङ्गिका**—[4]णहि णहि सो क्खु उज्जाणवाडणिग्गमादो एव्व कलअलं सुणिअ साक्खेवाववद्धविअडणिओरुदण्डणिट्ठुरं पधाविअ पराणीअं पविट्ठो। तदो पडिणिउत्तह्मि मन्दभाइणी। सुणोमि अ घरे घरे गुणाणुराअणिब्भरस्स पोरलोअस्स हा माहव महाभाअ हा म-

१. अहमपि मालतीमेवानुवर्तिष्ये। सखि मालति।

२. सखि मदयन्तिके, लवङ्गिका खल्वहम्।

३. अयि, संभावितस्त्वया महानुभावः।

४. नहि नहि। स खलूद्यानवाटनिर्गमादेव कलकलं श्रुत्वा साक्षेपापविद्ध-विकटनिजोरुदण्डनिष्ठुरं प्रधाव्य परानीकं प्रविष्टः। ततः प्रतिनिवृत्तास्मि मन्दभागिनी। शृणोमि च गृहे गृहे गुणानुरागनिर्भरस्य पौरलोकस्य हा माधव महाभाग हा मकरन्द साहसिकेति परिदेवनानि। महाराजः किल

पक्षिविशेषयुवतिरिव त्वं मया कवलीकृतासीत्यात्मानं नेक्षसे। यदि शक्तिस्तदा तर्हि परिरक्षतु ॥८॥ यावदित्यवधारणे। श्रीपर्वतं नीत्वैव। पर्व पर्व प्रति प्रतिपर्व। प्रतिसंधीत्यर्थः। तिलं तिलं तिलशः। तिलमात्रान्मांसखण्डान्कृत्वा चित्रवधेनैनां दुःखमारिणीं करोमि। इति बन्धुवर्गैरविज्ञातां मालतीमादाय कपालकुण्डला निष्क्रान्ता ॥ **मदयन्तिका**। अहमपि मालतीमेवानुवर्तिष्ये। अथ मालतीभ्रमेण मदयन्तिका लवङ्गिकामाकारयति। सखि मालतीति ॥ प्रविश्य। **लवङ्गिका**। वदतीति शेषः। सखि मदयन्तिके, लवङ्गिका खल्वहम्। न मालतीति भावः ॥ **मदयन्तिका**। अयीति सुकुमारसंबोधने। संभावितो दृष्टस्त्वया महानुभावः। माधव इत्यर्थः ॥ **लवङ्गिका**। नहि नहि। स खलूद्यानवाटनिर्गमादेव कलकलं श्रुत्वा साक्षेपापविद्धविकटनिजोरुदण्डनिष्ठुरं प्रधाव्य परानीकं प्रविष्टः। साक्षेपं सकोपवचनम्। अपविद्धस्ताडितो निजोरुदण्डो येन स तादृक्। वाटो वृतिः। प्राकार इति यावत्। मार्गो वा। ततः प्रतिनिवृत्तास्मि मन्दभागिनी। शृणोमि च गृहे

अरन्द साहसिअ त्ति परिदेवणाओ। महाराओ किल मन्तिधीआणं विप्पलम्भउत्तन्दं सुणिअ संजाअमच्छरावेओ तक्खणविसज्जिआणेअ-पोढपदाइणिवहो चन्दादवसोहिदसोहसिहरट्ठिदो पेक्खदित्ति मन्तिअदि।

**मदयन्तिका**—[1]हा, हदह्मि मन्दभाइणी।

**लवङ्गिका**—[2]सहि मालदी उण कहिं।

**मदयन्तिका**—[3]सहि सा क्खु पुढमं एव्व दे मग्गं ओलोइदुं पसरिदा। पच्चा अहं तं ण पेक्खामि। सा णाम उज्जाणगहणं पविट्ठा हवे।

**लवङ्गिका**—[4]सहि, तुरिअं अण्णेसह्म। अदिकातरा मे पिअसही उववणट्ठिदा इमस्सिं अवसरे न धारेदि अत्ताणं।

**लवङ्गिकामदयन्तिके**—(त्वरितं परिक्रामन्त्यौ।) [5]सहि मालदि, णं भणामि सहि मालदि त्ति। (इतस्ततः परिक्रामतः।)

---

मन्त्रिदुहित्रोर्विप्रलम्भवृत्तान्तं श्रुत्वा संजातमत्सरावेगस्तत्क्षणविसर्जितानेकप्रौढपदातिनिवहश्चन्द्रातपशोभितसौधशिखरस्थितः प्रेक्षत इति मन्त्र्यते।

१. हा, हतास्मि मन्दभागिनी।

२. सखि, मालती पुनः क्व।

३. सखि, सा खलु प्रथममेव ते मार्गमवलोकयितुं प्रसृता। पश्चादहं तां न पश्यामि। सा नामोद्यानगहनं प्रविष्टा भवेत्।

४. सखि, त्वरितमन्विष्यावः। अतिकातरा मे प्रियसख्युपवनस्थितास्मिन्नवसरे न धारयत्यात्मानम्।

५. सखि मालति, ननु भणामि सखि मालतीति।

---

गृहे गुणानुरागनिर्भरस्य पौरलोकस्य हा माधव महाभाग हा मकरन्द साहसिकेति परिदेवनानि। महाराजः किल मन्त्रिदुहित्रोर्विप्रलम्भवृत्तान्तं श्रुत्वा संजातमत्सरावेगस्तत्क्षणविसर्जितानेकप्रौढपदातिनिवहश्चन्द्रातपशोभितसौधशिखरस्थितः प्रेक्षत इति मन्त्र्यते॥**मदयन्तिका**। हा, हतास्मि मन्दभागिनी॥ **लवङ्गिका**। सखि, मालती पुनः क्व वर्तते॥ **मदयन्तिका**। सखि, सा खलु प्रथममेव ते मार्गमवलोकयितुं प्रसृता। पश्चादहं तां न पश्यामि। सा नामोद्यानगहनं प्रविष्टा भवेत्। नामेति संभावनायाम्॥ **लवङ्गिका**। सखि, त्वरितमन्विष्यावः। अतिकातरा मे प्रियसख्युपवनस्थितास्मिन्नवसरे न धारयत्यात्मानम्। **लवङ्गिका-**

**कलहंसः**—(हृष्टः प्रविश्य ।)[1] दिट्ठिआ कुसलेण ह्मि णिग्गदो संघट्टमग्गादो । हिमाणहे । पेक्खामि विअ णिम्मलणिरन्तरव्वुत्ततरवारिधारापडिफलिदचन्दकिरणुज्जुलन्तपिञ्जरिअभीसणदंसणं मदलीलाकलिदकामवालविअडभुअदण्डावविद्धहलहेलावित्थारिदुद्धक्खुभिदकलिन्दतणआसोत्तस्संणिहं विसङ्खलुप्पदिदणिद्दआणन्दमअरन्दक्खोभविअलपडिरोधपडिणिउत्तणुद्धअसमत्थगअणङ्गणावआसविअसन्दकोलाहलं पारक्कसमूहं दाणिं वि पेक्खामि विअ । सुमरामि अ भीसणभुअवज्जखचितपञ्जरपज्जत्थसमरविमुहसुभटहत्थावलुत्तविविहाउहोवरुद्धअसेसरिपुसेण्णविअडापसारवइरिक्कमग्गसंचारणिव्वत्तिदविसमसाहसं णाहं माहवम् । अहो गुणाणुराओ णरेन्दस्स, जं दाणिं सो-

---

१. दिष्ट्या कुशलेनास्मि निर्गतः संघट्टमार्गात् । हिमाणहे । पश्यामीव निर्मलनिरन्तरोद्वृत्ततरवारिधाराप्रतिफलितचन्द्रकिरणोज्ज्वलत्पिञ्जरितभीषणदर्शनं मदलीलाकलितकामपालविकटभुजदण्डापविद्धहलहेलाविस्तारितोर्ध्वक्षुभितकलिन्दतनयास्रोतःसंनिभं विशृङ्खलोत्पतितनिर्दयानन्दमकरन्दक्षोभविकलप्रतिरोधप्रतिनिवर्तनोद्धतसमस्तगगनाङ्गणावकाशविकसत्कोलाहलं पारक्यसमूहमिदानीमपि पश्यामीव । स्मरामि च भीषणभुजवज्रखचितपञ्जरपर्यस्तसमरविमुखसुभटहस्तावलुप्तविविधायुधोपरुद्धाशेषरिपुसैन्यविकटापसारव्यतिरिक्तमार्गसंचारनिर्वर्तितविषमसाहसं नाथं माधवम् । अहो गुणानुरागो नरेन्द्रस्य, यदिदानीं सौधशिखरावतीर्णप्रतिहारविनयोपन्यासप्रशमितविरोधः

---

मदयन्तिके । सखि मालति, ननु भणामि सखि मालतीति ॥ **कलहंसः** । दिष्ट्या कुशलेनास्मि निर्गतः संघट्टमार्गात् । सुहर्षे हिमाणहे । 'हिमाणहे भयहर्षे' इति देशी । पश्यामीव निर्मलनिरन्तरोद्वृत्ततरवारिधाराप्रतिफलितचन्द्रकिरणोज्ज्वलत्पिञ्जरितभीषणदर्शनं मदलीलाकलितकामपालविकटभुजदण्डापविद्धहलहेलाविस्तारितोर्ध्वक्षुभितकलिन्दतनयास्रोतःसंनिभं विशृङ्खलोत्पतितनिर्दयानन्दमकरन्दक्षोभविकलप्रतिरोधप्रतिनिवर्तनोद्धतसमस्तगगनाङ्गणावकाशविकसत्कोलाहलं पारक्यसमूहमिदानीमपि पश्यामीव । प्रतिनिवर्तनं पलायनम् । स्मरामि च भीषणभुजवज्रखचितपञ्जरतया पर्यस्ताः प्रसृताः समरविमुखा ये सुभटास्तेषां हस्तेभ्योऽवलुप्तान्याच्छेदितानि विविधान्यायुधानि तैरुपरुद्धं पातितमशेषं यद्रिपुसैन्यं तेन दत्तो यो विकटापसारः पलायनं तेन व्यतिरिक्तः शून्यो यो मार्गस्तत्र संचारेण निर्वर्तितविषमसाहसं स्मरामि च माधवमिति संबन्धः । अहो गुणानुरागो नरेन्द्रस्य, यदिदानीं सौधशिखरावतीर्णप्रतिहारविनयोपन्यासप्रशमितविरोधः सौम्यैकरसोपनी-

धसिहरावदिण्णपडिहारविणओवण्णासपसमिअविरोहो सोम्मेक्करसोवणीदमाहवमअरन्दमुहचन्दे ओलोइअ वारंवारं पसारिदसिणिद्धलोअणो कलहंसआदो अहिजणं सुणिअ णिव्वत्तिअमहग्घगुरुबहुमाणो फुरन्तमच्छरेस्सावेलक्खमसीमलिणिअमुहे भूरिवसुणन्दणे महुरोवण्णासेहिं किं दाणिं तुह्माणं भुवणाभोअभूसणेहिं महाणुहावेहिं णवजोव्वणगुणाभिरामेहिं जामाउएहिं परितोसेत्ति पडिबोधिअ गओ अब्भन्दरं राआ। इमे वि माहवमअरन्दा आअच्छन्दि इति अहं वि एदं भअवदीए उत्तन्दं णिवेदेमि। (इति निष्क्रान्तः।)

(ततः प्रविशतो माधवमकरन्दौ।)

**माधवः**—अहो प्रेयसः सर्वपुरुषातिशायि निर्व्याजमूर्जितं तेजः। तथा हि।

दोर्निष्पेषविशीर्णसंचयगलत्कङ्कालमुन्मथ्नतः
प्राग्वीराननुपात्य तत्प्रहरणान्याच्छिद्य विक्रामतः।

---

सौम्यैकरसोपनीतमाधवमकरन्दमुखचन्द्राववलोक्य वारंवारं प्रसारितस्निग्धलोचनः कलहंसकादभिजनं श्रुत्वा निर्वर्तितमहार्घगुरुबहुमानः स्फुरन्मत्सरेर्ष्यावैलक्ष्यमषीमलिनितमुखौ भूरिवसुनन्दनौ मधुरोपन्यासैः किमिदानीं युवयोर्भुवनाभोगभूषणाभ्यां महानुभावाभ्यां नवयौवनगुणाभिरामाभ्यां जामातृभ्यां परितोष इति प्रतिबोध्य गतोऽभ्यन्तरं राजा। एतावपि माधवमकरन्दावागच्छत इत्यहमप्येतं भगवत्यै वृत्तान्तं निवेदयामि।

---

तौ यौ संकटान्निष्क्रान्तौ माधवमकरन्दौ तयोर्मुखचन्द्राववलोक्य वारंवारं प्रसारितस्निग्धलोचनः कलहंसकादभिजनं श्रुत्वा निर्वर्तितमहार्घगुरुबहुमानः स्फुरन्मत्सरेर्ष्यावैलक्ष्यमषीमलिनितमुखौ भूरिवसुनन्दनौ मधुरोपन्यासैः किमिदानीं युवयोर्भुवनाभोगभूषणाभ्यां महानुभावाभ्यां नवयौवनगुणाभिरामाभ्यां जामातृभ्यां परितोष इति प्रतिबोध्य ततो गतोऽभ्यन्तरं राजा। अत्र मत्सरः क्रोधः, उद्वेग ईर्ष्या एतौ द्वौ मषीस्थानीयौ। आभ्यां मलिनितं मुखं नन्दनस्य। वैलक्ष्यं मषीस्थानीयं भूरिवसोरिति विवेकः। एतावपि माधवमकरन्दावागच्छत इत्यहमप्येतं भगवत्यै वृत्तान्तं निवेदयामि॥ **माधवः**। प्रेयसो मकरन्दस्य। निर्व्याजं स्वाभाविकमूर्जितं बलवत्तेजः॥ **दोर्निष्पेषेति**। तथा ह्यस्य प्रेयसो मित्रस्य प्राक्प्रथमं वीरानुन्मथ्नतः। कथमुन्मथ्नत इत्यपेक्षायां दोर्भ्यामेव यो निष्पेषः संचूर्णनं तेन शीर्णं संच्छिन्नत्वेन दलत्कङ्कालं यथा स्यादिति क्रियाविशेषणम्। अपरान्यत्र च तेषां प्रहरणान्याच्छिद्य विक्रामतो विक्रमं कुर्वतः। एवंभूतस्य प्रेयसो यः संख्योदधिः संग्रामसमुद्रस्तस्य पन्थाः पुरोदेशो, द्वेधा पार्ष्णिद्वये, स्तम्भिता निश्चेष्टा या पदातिपङ्क्तिस्तया

उद्वेल्लद्धनरुण्डखण्डनिकराकीर्णस्य संख्योदधे-
    र्द्वेधास्तम्भितपत्तिपङ्क्तिविकटः पन्थाः पुरस्तादभूत् ॥ ९ ॥

वयस्य, नन्वनुशयस्थानमेतत् । पश्य ।

अद्यैवेन्दुमयूखखण्डनिचितं पीतं निशीथोत्सवे
    यैर्लीलापरिरम्भदायिदयितागण्डूषशेषं मधु ।
संप्रत्येव भवद्भुजार्गलगुरुव्यापारभग्नास्थिभि-
    र्गात्रैस्ते कथयन्त्यसारभिदुरान्प्रायेण संसारिणः ॥ १० ॥

स्मर्तव्यं तु नरपतेरस्य सौजन्यम् । यदपराद्धयोरप्यनपराद्धयोरिव नौ कृतोपसदनं चेष्टितवान् । तदेहि, मालतीसमक्षमधुना मदयन्तिकाहरणवृत्तान्तं विस्तरतः कथ्यमानमनुभवामः । (पुरोऽवलोक्य ।) कथं शून्या इवामी प्रदेशाः ।

**मकरन्दः**—नूनं शङ्के आवयोः समरसंकटोद्वेगेन व्याकुलत्वादितस्ततो भ्रमन्त्यस्ता अत्रैवात्मानं विनोदयन्ति ।

**माधवः**—

कथयति त्वयि सस्मितमालती-
    वलितलोलकटाक्षपराहतम् ।
वदनपङ्कजमुल्लसितत्रपं
    स्तिमितदृष्टि सखी नमयिष्यति ॥ ११ ॥

अयमसावुद्यानवाटः ।

---

विकटो विपुलः पुरस्तादभूत् । उद्वेल्लन्त ऊर्ध्वं ललन्तो ये रुण्डखण्डनिकरास्तैः शीर्णस्य व्याप्तस्येति संख्योदधेर्विशेषणम् ॥९॥ वयस्य, अहो एतज्जगत्समरकर्म वानुशयस्थानं पश्चात्तापस्थानम् । **अद्येति** । यैः सुभटैश्चन्द्रिकोपभोगसमये निशीथे लीलालिङ्गनदायिप्रेयसीपानावशिष्टं तथा प्रतिफलितेन्दुकरकरम्बितमिन्दुप्रभाखण्डरुचिरं मधु पीतं संप्रत्येव ते गात्रैर्भवदीयव्यापारभग्नास्थिभिः संसारिणः पुरुषानसारांस्तुच्छांस्तथा भिदुरान्विकलान्कथयन्ति ॥१०॥ तन्मालत्यग्रतो मदयन्तिकायाः कृते कलहंसकेन विस्तरतो वर्ण्यमानमावयोर्व्यापारमतर्कितोपस्थितमनुभवामः । पुरोऽवलोक्य । कथं शून्या इव मालत्या विरहिता इवामी प्रदेशाः । दृश्यन्त इति शेषः॥ **मकरन्दः** । नूनं शङ्के आवयोः समरसंकटोद्वेगेनाकुलत्वादुद्विग्नत्वादितस्ततो भ्रमन्त्यस्ता मालत्यादयोऽत्रैवोद्यानगम्भीरस्थान आत्मानं विनोदयन्ति ॥ **माधवः**। **कथयतीति** । वयस्य मकरन्द, त्वयि कथयति सत्यावयोः समरसंकटवृत्तान्तं मालत्याः सखी मदयन्तिका मन्निमित्तमनयोः पुरुषप्रकाण्डयोः शरीरसंदेहादयो जायन्त इत्यत्यन्त

( प्रवेशं नाटयतः । )

**लवङ्गिकामदयन्तिके**—सहि मालदि । (सहसा विलोक्य सहर्षम् ।) दिट्ठिआ पुणो वि अ दे महाणुहावा दिस्सन्दि ।

**माधवमकरन्दौ**—भवत्यौ, क सा मालती ।

**उभे**—कुदो मालती । पदसद्देन अह्मे विप्पलद्धाओ मन्दभाइणीओ ।

**माधवः**—भवत्यौ, कथंकथमपि सहस्रधैव ध्वंसते मे हृदयम् । ततः स्फुटमभिधीयताम् ।

मम हि कुवलयाक्षीं प्रत्यनिष्टैकबुद्धे-
रविरतमनुबद्धोत्कम्प एवान्तरात्मा ।
स्फुरति च खलु चक्षुर्वाममेतच्च कष्टं
वचनमपि भवत्योः सर्वथा हा हतोऽस्मि ॥ १२ ॥

---

१. सखि मालति, दिष्ट्या पुनरपि च तौ महानुभावौ दृश्येते ।

२. कुतो मालती । पदशब्देनावां विप्रलब्धे मन्दभागिन्यौ ।

---

श्रान्ततयोल्लसितव्रीडं तथा स्तिमितदृष्टि निश्चलनयनं स्वकं मुखं कर्तव्याभावान्नमयिष्यति । पुनः कीदृशम् । सस्मिता या मालती तस्याश्चलन्तो ये कटाक्षास्तैः पराहतमिव पराहतम् । पराहतिर्जुगुप्सा यथा स्यादेवं कटाक्षैरवलोकित ईदृशनिमित्तमत्याहितनिमित्तमिति मालत्याः सस्मितत्वे कटाक्षैराहनने च हेतुः ॥११॥ अथ माधवमकरन्दयोः पदशब्दं श्रुत्वा मालतीमधिगतां ज्ञात्वा तद्विरहव्याकुले लवङ्गिकामदयन्तिके । वदत इति शेषः । सखि मालति । अनन्तरं माधवमकरन्दावागतौ विलोक्य सहर्षं वदतः। दिष्ट्या पुनरपि च तौ महानुभावौ दृश्येते । अथ लवङ्गिकामदयन्तिकयोः सखि मालतीति वचः श्रुत्वा संप्रत्युत्पन्नदुर्निमित्तशङ्कितौ माधवमकरन्दौ पृच्छतः क सा मालतीति ॥ **उभे** । कुतः कुत्र सा मालतीति । कुत इति सप्तम्यर्थे तसिः । एतेन त्वत्र मालती नास्त्येवेत्यर्थः । पदशब्देन भवतोरावां मन्दभागिन्यौ विप्रलब्धे । भवत्पदशब्दं मालतीपदशब्दमाकलय्य सखि मालतीत्युक्तमित्यर्थः ॥ **माधवः**। भवत्याविति संबुद्धौ । कथं कथमपि केनकेनापि प्रकारेण वक्तुमप्यशक्यं सहस्रधैव ध्वंसते हृदयम् । तत इदमभिधीयताम् । **मम हीति** । मम त्वेषोऽन्तरात्मा मम चेतो हि स्फुटं कुवलयाक्षीं मालतीं प्रति 'प्रेम पश्यति भयान्यपदेऽपि' इत्यनिष्टैकचिन्तनशीलं तैरनुबद्धोत्कम्प एव । यतः अत्र स एव तावदवश्यमनुभविष्यसि कपालकुण्डलाकोपस्य विजृम्भितमिति वचनस्मरणादपि स तथोत्कम्प इत्याशयः । तथा वामाक्षिस्पन्दनं कष्टहेतुत्वात्कष्टम् , तथैवेदृक्सख्योर्वचनं कष्टम् ।

**मदयन्तिका**—[1]तह क्खु इदो विणिग्गदे महाणुहावे बुद्धरक्खिदं अवलोइदं अ भअवदीसआसं विसज्जिअ अप्पमादणिमित्तं विण्णवेहि अज्जउत्तं त्ति लवङ्गिआ अणुप्पेसिदा । तदो उत्तम्ममाणा अ एदाए मग्गं ओलोइदुं अग्गदो पसरिदा मालदी । पच्चादो अहं । तदो ण पेक्खामि । तदो अह्मेहिं मग्गिदा एत्थ विडवन्दराइं जाव तुह्मे दिट्ठत्ति ।

**माधवः**—हा प्रिये मालति,

किमपि किमपि शङ्के मङ्गलेभ्यो यदन्य-
द्विरमतु परिहासश्चण्डि पर्युत्सुकोऽस्मि ।
कलयसि कलितोऽहं वल्लभे देहि वाचं
भ्रमति हृदयमन्तर्विह्वलं निर्दयासि ॥ १३ ॥

**उभे**—[2]हा पिअसहि, कहिं गआसि ।

**मकरन्दः**—वयस्य, किमित्यविज्ञाय वैक्लव्यमवलम्ब्यते ।

**माधवः**—सखे, त्वमपि किं न जानासि मत्स्नेहदुःखितायास्तस्याः कातर्यचेष्टितानि ।

---

१. तथा खल्वितो विनिर्गते महानुभावे बुद्धरक्षितामवलोकितां च भगवतीसकाशं विसृज्याप्रमादनिमित्तं विज्ञापयार्यपुत्रमिति लवङ्गिकानुप्रेषिता । तत उत्ताम्यमाना चैतस्या मार्गमवलोकयितुमग्रतः प्रसृता मालती । पश्चादहम् । ततो न पश्यामि । ततोऽस्माभिर्मार्गितान्यत्र विटपान्तराणि यावद्युवां दृष्टाविति ।

२. हा प्रियसखि, कुत्र गतासि ।

---

तद्भुतकदैवेन हतोऽस्मि ॥ १२ ॥ **मदयन्तिका**। तथा खल्वितो विनिर्गते महानुभावे त्वयि सति बुद्धरक्षितामवलोकितां च भगवतीसकाशं विसृज्याप्रमादनिमित्तं विज्ञापयार्यपुत्रमिति लवङ्गिकानुप्रेषिता । तत उत्ताम्यमाना चैतस्या मार्गमवलोकयितुमग्रतः प्रसृता मालती । पश्चादहं प्रसृतेत्यर्थः । न ततः पश्यामि । ततोऽस्माभिरत्र विचिता यावद्युवां दृष्टाविति ॥ **माधवः । किमपीति** । हे चण्डि अतिकोपने, अयं परिहासः स्वात्मप्रच्छादनरूपो विरमतु । परिहासं परित्यज । ततः किमपि किमपीति यद्वक्तुमपि न शक्यते मङ्गलेभ्यो यदन्यदमङ्गलं तदहं त्वयि शङ्के । अतस्त्वद्दर्शनार्थं पर्युत्सुकोऽस्मि । अथवा कलयसि ज्ञातुमिच्छसि मामनुरागवानयं विरागो वेति रूपेण, तर्हि कलितोऽहं त्वयैव महामांसविक्रयप्रक्रमादिषु । तदिदानीं वल्लभे, वाचं प्रयच्छ । यतो मदीयं हृदयं विह्वलं विकलमन्तरेवावस्थितिं न लभते । त्वं चैवं निर्दयासि ॥ १३ ॥ **मकरन्दः** । अविज्ञायानिश्चित्य । तद्विपदमित्याशयः ॥ **माधवः** । अन्यस्तावदुदासीनो न जानाति । त्वमपि किं मालतीति न जाना-

**मकरन्दः**—अस्त्येतत् । किं तु भगवतीपादमूलगमनमप्या-शङ्क्यते । तदेहि । तत्र तावद्गच्छावः ।

**उभे**—एँदं वि संभाविअदि ।

**माधवः**—एवमस्तु नाम । (इति परिक्रामति ।)

**मकरन्दः**—(स्वगतम् ।)

याता भवेद्भगवतीभवनं सखी सा
जीवन्त्यथैष्यति न वेत्यभिशङ्कितोऽस्मि ।
प्रायेण बान्धवसुहृत्प्रियसंगमादि
सौदामिनीस्फुरणचञ्चलमेव सौख्यम् ॥ १४ ॥

( इति निष्क्रान्ताः सर्वे । )

**इति महाकविश्रीभवभूतिविरचिते मालतीमाधवेऽष्टमोऽङ्कः ।**

---

१. एतदपि संभाव्यते ।

---

सि । मम प्राप्तौ मत्स्नेहेन दुःखितया कातरया तया यच्चेष्टितमिति चौरिकाविवाहप्रस्तावे मालत्याः स्वशरीरपरित्यागाध्यवसायं स्मारयति ॥ **उभे** । एतदपि संभाव्यते । यद्भगवतीपादसेवां कर्तुं गता भविष्यत्येवम् ॥ **माधवः** । एवं नामास्तु । नामशब्दः संभावनायाम् ॥ **मकरन्दः** । **यातेति** । सा नोऽस्माकं सर्वेषां माधवप्रेमविषयतया तस्या एव गुणविशेषैश्च निःसीमस्नेहविषयत्वात्सखीव सखी मालती याता गता । तद्भगवतीभवनं नगराध्यक्षपुरुषावरोधव्यतिकरसंभ्रमादिभिः सत्यमेव जीवन्ती प्राणान्धारयन्ती पुनरप्येष्यति न वेत्याशङ्कितोऽस्मि । अघोरघण्टव्याघ्रवधराजविरुद्धव्यापाराश्च मालतीजीवितसंदेहाशङ्काभिज्ञानानि । अथ मालतीविपदमनया निश्चित्य वैषयिकसुखस्यास्थिरत्वं श्लोकस्योत्तरार्धेन व्यवस्थापयति—प्रायेणेति । बान्धवादिसंगमसौख्यं सौदामिनीस्फुरणवच्चञ्चलम् । भवतीति शेषः । बान्धवादिसङ्ग आदिर्यस्य सौख्यस्य तत्तादृक् । अथ च प्रथमाङ्कमुखसंधिसूचितायाः सौदामिन्याः स्फुरणं स्फूर्तिर्व्यापारविशेषो वा तन्मात्रनिदानं मालतीविपत्प्रतिकरणं माधवदुःखप्रहाणं च मनसि कृत्वा प्रकरणकृदग्रिमाङ्के सौदामिनीप्रवेशसूचनाय च सौदामिनीपदमङ्कान्तश्लोके निवेशितवान् ॥ १४ ॥

शबरस्वामिप्रीत्या प्रकरणरत्नाकरेऽत्र भवभूतेः ।
सारोद्धारे मन्दरमकृत कृती व्याकृतिं नान्यः ॥

**इति श्रीनान्यदेवस्य कृतौ विबुधरत्नावल्यां मालतीमाधवटीकायामष्टमाङ्कविवरणम् ॥**

# नवमोऽङ्कः ।

( ततः प्रविशति सौदामिनी । )

**सौदामिनी**—एषास्मि सौदामिनी भगवतः श्रीपर्वतादुपेत्य पद्मावतीं तत्र मालतीविरहिणो माधवस्य संस्तुतप्रदेशदर्शनासहिष्णोः संस्त्यायं परित्यज्य सह सुहृद्वर्गेण बृहद्द्रोणीशैलकान्तारप्रदेशमुपश्रुत्याधुना तदन्तिकं प्रयामि । भोः, तथाहमुत्पतिता यथा सकल एव गिरिनगरग्रामसरिदरण्यव्यतिकरश्चक्षुषा परिषिच्यते । (पश्चाद्विलोक्य ।) साधु साधु ।

पद्मावती विमलवारिविशालसिन्धु-
पारासरित्परिकरच्छलतो बिभर्ति ।

---

श्रीपर्वते कपालकुण्डलापहृतां मालतीमाच्छिद्य निष्प्रत्यूहे देशे निधाय मालतीविनाशशङ्किनो माधवस्यावश्यंभाविविनाशमाशङ्क्य जीवत्येव समागमिष्यतीति माधवप्रतीतिहेतोः मालतीकण्ठाद्बकुलावलीमादाय सौदामिनी सत्वरमुत्पतिता । अस्मिन्नवसरे नवमाङ्कारम्भः । **तत इति** । सौदामिनी स्वात्मगतमेव स्वविधेयं विचारयति—**एषास्मीति**। एषाहं सैव सौदामिनी नान्या । या भगवत्याः कामन्दक्या योगाभ्यासाद्युपदेशेनानुगृह्यैतावत्पदं प्रापिता । तदवश्यं मया कामन्दक्या प्राणेनापि रक्षणीययोर्मालतीमाधवयोर्विपत्प्रतीकारः प्राणव्ययेनापि विधेय इत्येषास्मीति पदस्याशयः । भगवतः पूज्याच्छ्रीपर्वतादुपेत्य गत्वा पद्मावतीम् । तत्र पद्मावत्यां मालतीविप्रयुक्तस्य माधवस्य बृहद्द्रोण्योपलक्षितो यः शैलस्तस्य कान्तारं दुर्गमार्गस्तत्र प्रदेशस्तत्र प्रवेशमुपश्रुत्याधुना तदन्तिकमनुप्रयामि । भवतु तस्य कान्तारप्रवेशः किमेतावता स्यादित्याशयः । किंभूतस्य माधवस्य—मालत्या सह क्रीडाद्यधिकरणत्वेन संस्तुतः परिचितो देशस्तस्येदानीं मालतीं विना तदवलोकनासहिष्णोः कथं कान्तारप्रवेशः किंविधो वेत्यपेक्षाद्वये सह सुहृद्वर्गेण संस्त्यायं गृहं परित्यज्येति पदद्वयं योज्यम् । अत्र भगवच्छब्दोक्तपूज्यत्वं च श्रीपर्वतस्यानेकमन्त्रसाधनक्षेत्रत्वेन । **तथाहमिति** । तथा तेन वेगातिशयेन तथोच्चदेशगमनमाश्रित्य वोत्पतितेनात्मनः शरीरलघुतोत्कर्षसहितं योगपरिपालनलिङ्गभूतं तथा शीघ्रगामितां चाश्चर्यहेतुत्वेनात्मगतमेव चिन्तयति । लघिमा लघुर्भवति येन सूर्यकरानवलम्ब्य तद्बिम्बं प्रविशतीत्युच्चैर्गगनारोहणं च माधवस्य गिरिद्रोण्या श्रीपर्वतस्यापि स्पष्टदर्शनार्थम् । व्यतिकरो विशेषः समूहो वा । चक्षू रश्मिमण्डलेन परिषिच्यतेऽभिव्याप्य गृह्यते । साधु साधु । पद्मावतीं शीघ्रं प्राप्तास्मि । भद्रमासन्नमिति साधुपदाभ्यासहेतुः । **पद्मावतीति** । पद्मावती नगरी अन्तरिक्षं गगनमिव बिभर्ति । कस्मादित्यपेक्षायां विमलवारिभिर्विशाला विपुला या सिन्धुर्नाम नदीवि-

उत्तुङ्गसौधसुरमन्दिरगोपुराट्ट-
संघट्टपाटितविमुक्तमिवान्तरिक्षम् ॥ १ ॥

अपि च ।

सैषा विभाति लवणा वलितोर्मिपङ्क्ति-
रभ्रागमे जनपदप्रमदाय यस्याः ।
गोगर्भिणीप्रियनवोलपमालभारि-
सेव्योपकण्ठविपिनावलयो विभान्ति ॥ २ ॥

(अन्यतो विलोक्य ।) स एष भगवत्याः सिन्धोर्दारितरसातलस्तटप्रपातः ।

यत्रत्य एष तुमुलध्वनिरम्बुगर्भ-
गम्भीरनूतनघनस्तनितप्रचण्डः ।
पर्यन्तभूधरनिकुञ्जविजृम्भणेन
हेरम्बकण्ठरसितप्रतिमानमेति ॥ ३ ॥

एताश्चन्दनाश्वकर्णसरलपाटलाप्रायतरुगहनाः परिणतमालूरसुरभयोऽरण्यगिरिभूमयः स्मारयन्ति तरुणकदम्बजम्बूवनाववद्धान्धकारगुरु-

---

शेषः । कीदृशमन्तरिक्षम् । उत्तुङ्गा ये सौधास्तेषां संघट्टनेन पूर्वं पाटितं पश्चाद्विमुक्तमिवेत्यर्थः । अन्तरिक्षं चात्र यन्नीलाकारेणोर्ध्वदेशे प्रतिभाति तज्ज्ञेयम् । अन्यथा विभुत्वेनान्तरिक्षस्य पतनादिवार्तानुपपत्तेः ॥ १ ॥ **सेति** । सेयं लवणा नाम नदी । जनपदशब्देन जनपदलोका गृह्यन्ते । तेषां प्रमदाय गोगर्भिणीनां प्रियास्तथा नवतृणराजिधारिण्यो धारणशीला यास्ता एव वनालयो विभान्तीत्यन्वयः। अत्र मालाशब्दस्य 'इष्टकेषीकामालानां चिततूलभारिषु' इति ह्रस्वरूपम् । गोगर्भिणीति रूपं च 'चतुष्पादो गर्भिण्या' इति सूत्रेण जातिसमासे गोगर्भिणी, अजागर्भिणीति च । अचतुष्पादेऽपि तु मानुषीगर्भिणीति, अजातावपि कालाक्षिगर्भिणीति रूपं स्यात् ॥ २ ॥ स एष पूर्वपरिचितः । भगवतीपदेन पूज्यत्वाभिधायकेन तीर्थत्वं सिन्ध्वभिधानायाः सरितः सूचयति । उच्चैर्देशादधः शिखरेषु प्रपतनं प्रपातः । उच्चैःपतनाद्दारितभूतलः । **यत्रत्येति** । यत्र जातोऽयं संकुलो विभाव्यानेकभङ्गिध्वनिरभिनवघनध्वानवत्प्रचण्डः । अयं च समीपगिरिप्रतिफलितेषु सत्सु गणपतिगलगर्जितसाम्यं गतः । अत्र च नूतनघनध्वनिसाम्येन मनोहरे प्रकृते ध्वनौ प्रचण्डत्वाभिधानं कदाचिदयं मालतीविरहिणो माधवस्य श्रुतिपथमवतरन्नवाम्भोदध्वनिवत्प्रतिभातीति शङ्कामुत्पादयन्ननिष्टकारि स्यादिति हेतोः ॥ ३ ॥ **एता इति** । एताश्चारण्यभूमयश्चन्दनादिप्रचुरवृक्षवनाद्युत्प्रेक्षणाद्दक्षिणारण्यगिरीन्द्रान्स्मारयन्ति तत्सादृश्येनेत्यर्थः । कीदृशोऽरण्यभूमयः पक्वबिल्वफलसुगन्धाः । किंभूतान्भूधरानित्यपेक्षायां तरुणकदम्बादिवनैरवबद्धो दृढीकृतो योऽन्धकारस्तेन गुरवो ये नि-

गिरिनिकुञ्जगुञ्जद्गम्भीरगद्गदोद्गारघोरघोषणगोदावरीमुखरितविशालमेखलाभुवो दक्षिणारण्यभूधरान् । अयं च मधुमतीसिन्धुसंभेदपावनो भगवान्भवानीपतिरपौरुषेयप्रतिष्ठः सुवर्णबिन्दुरित्याख्यायते । (प्रणम्य ।)

जयदेव भुवनभावन जय भगवन्नखिलवरद निगमनिधे ।
जय रुचिरचन्द्रशेखर जय मदनान्तक जयादिगुरो ॥ ४ ॥

(गमनमभिनीय ।)

अयमभिनवमेघश्यामलोत्तुङ्गसानु-
र्मदमुखरमयूरीमुक्तसंसक्तकेकः ।
शकुनिशबलनीडानोकहस्निग्धवर्ष्मा
वितरति बृहदश्मा पर्वतः प्रीतिमक्ष्णोः ॥ ५ ॥

दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि । the growling of a bear, spluttering noise!
शिशिरकटुकषायः स्त्यायते सल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥ ६ ॥

(ऊर्ध्वमवलोक्य ।) अये, कथं मध्याह्नः । तथा हि संप्रति

---

कुञ्जा लतादिपिहिताः कंदरविशेषास्तेषु गुञ्जन्ती शब्दायमाना गद्गदध्वनिप्रधानप्रवाहनिःसरणा या गोदावरी तया मुखरितविपुलमेखलाभुव इत्यन्वयः। **अयमिति।** मधुमती नदीविशेषः संभेदः संगमस्तस्य पावनः पवित्रतोत्पादकः । अपौरुषेयप्रतिष्ठः पुरुषप्रयत्नाजन्यस्थापनः श्रुतिप्रतिपाद्यमाहात्म्यो वा स्वर्णबिन्दुरिति नाम तस्य भगवतः । **जयेति** । भुवनभावन चतुर्दशभुवनोत्पादक, (creator) अखिलवरद समस्तानतकामप्रद, निगमनिधे समस्तवाङ्मयनिधे । आदिगुरुत्वं च सर्गादौ ब्रह्मणोऽप्युपदेशकत्वात् ॥ ४ ॥ **अयमिति** । अयं पर्वतो नेत्रयोः सुखं दृश्यमानो जनयतीत्यन्वयः । तस्य विशेषणानि । नवजलदैः श्यामीकृतोच्चसानुः । अत एव हृष्टमयूरीमुक्ताविच्छिन्नकेकः । तथा शकुनिभिः पक्षिभिः शबलाः कर्बुरा ये नीडानोकहास्तैः स्निग्धं वपुरस्य स तादृक् । शकुनयश्च बलाकाः केकिनश्च ग्राह्याः । तेषामेव तदानीं नीडारम्भः । तैरेव श्वेतश्यामैः कर्बुरता नीडानां स्यात् ॥ ५ ॥ **दधतीति** । अत्र ये तरुणाश्च भल्लूकास्तेषामम्बूकृतानि सनिष्ठीवनानि भुक्तानि कुहरभाक्त्वेन प्रतिशब्दगुणोत्कृष्टानि कर्तॄणि स्त्यानं स्त्यानत्वं दधति बिभ्रति । यथा सल्लकीनां वृक्षविशेषाणामिभैः पूर्वं दलिताः पश्चाद्विकीर्णा विक्षिप्ता ये ग्रन्थयस्तेषां यो निष्यन्दो द्रवः क्षरणं तद्गन्धः स्त्यायते सर्वतः संहतो भवति । प्रसरतीत्यर्थः॥६॥

काश्मर्याः कृतमालमुद्गततलं कोयष्टिकष्टीकते
तीराश्मन्तकशिम्बिचुम्बितमुखा धावन्त्यपःपूर्णिकाः ।
दात्यूहैस्तिनिशस्य कोटरवति स्कन्धे निलीय स्थितं
वीरुन्नीडकपोतकूजितमनुक्रन्दन्त्यधः कुकुभाः ॥ ७ ॥

तद्भवतु । माधवमकरन्दावन्विष्य यथाप्रस्तुतं साधयामि । (इति निष्क्रान्ता ।)

शुद्धविष्कम्भः ।

( ततः प्रविशति माधवो मकरन्दश्च ।)

**मकरन्दः**—(सकरुणं निःश्वस्य ।)

न यत्र प्रत्याशामनुपतति नो वा रहयति
प्रतिक्षिप्तं चेतः प्रविशति च मोहान्धतमसम् ।
अकिंचित्कुर्वाणाः पशव इव तस्यां वयमहो
विधातुर्वामत्वाद्विपदि परिवर्तामह इमे ॥ ८ ॥

**माधवः**—हा प्रिये, मालति, क्वासि । कथमविज्ञाततत्त्वमद्भुततमं झटिति पर्यवसितासि । नन्वकरुणे, प्रसीद । संभावय माम् ।

---

**काश्मर्या इति** । काश्मर्याः मधुपर्णीतरोस्तस्मिन्काले निष्पत्रात् । उद्गतदलं तरुणनवपत्रम् । कृतमालच्छायम् । कोयष्टिकः पक्षिविशेषः । तस्य वने संभवात् । टीकते धावति । सरित्तीरे येऽश्मन्तकाख्या अतसीपर्यायास्तच्छिम्बिचुम्बितमुखास्तदग्रस्पृष्टमात्रमुखाः । न तु पिपासया ते खादितवन्त इति चुम्बितपदस्याशयः । पूर्णिका अशोकापरनामानः पक्षिविशेषाः । जलं गच्छन्ति । दात्यूहैस्तिनिशस्य स्यन्दनापरनाम्नो मूले स्कन्धे जातिस्वभावान्निलीय स्थितम् । तथा लतास्थितकुलायवर्तिपारावतकूजितमनुकृत्याधोदेशे कुकुभाः कूजन्ति । कुकुभो ग्रामचटकाकृतिः पक्षिविशेषः । यदाह—'शरच्चन्द्रिकाकारसितपुच्छो नीलगलः स्याद्ग्रामचटकाकृतिः । कुकुभः कुकुटारावः स्थलजो रक्तवर्णकः ॥' इति ॥ ७ ॥ इति शुद्धविष्कम्भः । **मकरन्दः** । सकरुणं निःश्वस्यात्मगतमेव । **न यत्रेति** । इमे वयं सर्वे बुद्धिपौरुषोत्साहयुक्ता अपि तस्यां विपदि वर्तामहे तिष्ठामः । यत्र विपदि मनः कर्तृ । तामपि तत्प्राप्तिहेतुं कामन्दक्याश्वासनरूपां प्रत्याशां नानुपतति नावलम्बते । तदाश्वासनस्याविषयत्वेनैवाभावात् । न वा प्रतिक्षिप्तं निराशं तत्प्राप्तिप्रत्याशां रहयति त्याजयति । बहुशोऽघोरघण्टादिव्यतिकरेपि पुनःपुनस्तल्लाभदर्शनात् । मोहान्धकारमेव केवलं प्रविशति । मोहश्चात्राकर्तव्यतापरिच्छेदः । अकिंचित्कुर्वाणा विपत्प्रतीकारानुरूपं किमपि कर्माकुर्वन्त आहारमात्रव्यापाराः पशव इव । अत्र च प्रतिकूलदैवविलसितमेव हेतुर्नास्माकं पुरुषकारवैगुण्यमित्याशयः ॥ ८ ॥ **माधवः** । अविज्ञाततत्त्वमविलक्षितविनाशकारणं

प्रियमाधवे किमसि मय्यवत्सला
ननु सोऽहमेव यमनन्दयत्पुरा ।
स्वयमागृहीतकमनीयकंकण-
स्तव मूर्तिमानिव महोत्सवः करः ॥ ९ ॥

वयस्य मकरन्द, दुर्लभः खलु जगति तावतः स्नेहस्य संभवः ।

सरसकुसुमक्षामैरङ्गैरनङ्गमहाज्वर-
श्चिरमविरतोन्माथी सोढः प्रतिक्षणदारुणः ।
तृणमिव ततः प्राणान्मोक्तुं मनो विधृतं तया
किमपरमतो निर्व्यूढं यत्करार्पणसाहसम् ॥ १० ॥

अपि च ।

मयि विगलितप्रत्याशत्वाद्विवाहविधेः पुरा
विकलकरणैर्मर्मच्छेदव्यथाविधुरैरिव ।
स्मरसि रुदितैः स्नेहाकूतं तथाप्यतनोदसा-
वहमपि यथाभूवं पीडातरङ्गितमानसः ॥ ११ ॥

---

यथा स्यादेवं पर्यवसितासि विनाशं गतासि । अत एवाद्भुतम् । **प्रियेति** । प्रियो माधवो यस्या इति प्रियमाधवा स्वभावतो भूत्वा किमस्य निमित्तवत्सला । न चाहमन्यः किंतु स एव माधवो यस्त्वदर्थे कृतमहामांसविक्रयप्रस्तावोचितता-दृशव्यापार इत्यात्मानुरागं मालत्यास्तादृग्विपत्प्रतीकारकर्तृत्वं चात्मनो मनसि कृत्वाह—यमनन्दयदिति । मां तव करो मूर्तिमान्महोत्सव इवानन्दयत् । कीदृक्कर इत्यपेक्षायामागृहीतकमनीयकंकण इति । कथमनन्दयदित्यपेक्षायाम् । स्वयमिति । यतस्त्वद्दर्शनजडीभूतस्य मम कण्ठे लवङ्गिकाधिया स्वकरेण बकुलावलीसमर्पण-तया निजदेहदानादपीति योज्यम् ॥ ९ ॥ **वयस्येति** । दुर्लभ इति यावत्स्नेहो मयि तया मदनोद्यानप्रस्तावनादारभ्य दर्शितस्तावतः स्नेहस्य जगत्यन्यत्र मालतीं विहायासंभवः । अन्यत्र नायक ईदृगनुरागो न दर्शित इत्यर्थः । तमेव स्नेहोत्कर्ष-माह—**सरसेति** । मध्वार्द्रनवमल्लिकादिकुसुमवत्क्षामैः सुकुमारैश्चिरमनवरतमुन्म-थनशीलस्तावत्सोढः। क्षामपदस्य सुकुमारार्थतायामभिभवासहिष्णुतायामुभयत्रापि ममैवेति बीजं प्रतिक्षणदारुणमृत्योर्विशेषेण निमित्तमिति ज्वरविशेषणम् । ततस्तदन-न्तरं च मदप्राप्तिशङ्कायां तृणप्रायान्प्राणान्ममत्वात्तानेव त्यक्तुं चित्तं विधृतं व्यव-स्थापितम् । आस्तां सर्वमेतद्यत्तया कुलकुमार्या गुरुजनमनादृत्य करार्पणसाहसमनु-रागेण पाणिग्रहणसाहसं निर्व्यूढं निर्वाहं नीतमतः परं किं ब्रूम इत्याशयः ॥१०॥ अपि चेति कृत्वा मालतीगुणान्तरकीर्तनेन चतुर्थस्मरावस्थालिङ्गैरुन्मादाख्य-सप्तमावस्थाया भूमिकां रचयन्नाह—**मयीति** । स्मरसि यथा त्वं नन्दनविवाह-

(सावेगम्।) अहो नु खलु भोः,

दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसा-
त्प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम्॥ १२॥

**मकरन्दः**—निरवग्रहो दहति दैवमिव दारुणो विवस्वान्। इयं च ते शरीरावस्था। तदस्य पद्मसरसः परिसरे मुहूर्तमास्यताम्। अत्र हि

उन्नालबालकमलाकरमाकरन्द-
निष्यन्दसंवलितमांसलगन्धबन्धुः।
त्वां प्राणयिष्यति पुनः परिवर्तमान-
कल्लोलशीकरतुषारजडः समीरः॥ १३॥

---

प्रस्तावात्पूर्वं मत्प्राप्तौ विगलितप्रत्याशत्वाद्विकलारुणैस्तथा मर्मच्छेदे या व्यथा तया विधुरैरिवोद्वेगदायिभी रुदितैस्तथापि तस्यामपि दशायां मयि स्नेहाकूतं स्नेहप्रधानमाशयमतनोद्विस्तारितवती। असावहमपि यथाभूवं यादृगासं पीडातरङ्गितचेतास्तथा त्वमेव स्मरसीत्यन्वयः॥ ११॥ सावेगं ससंभ्रमम्। अहोशब्द आश्चर्ये। नु वितर्के। भोः संबुद्धौ। **दलतीति**। कर्मकर्तरि। स्वयमेव विधाय मदीयं हृदयं दारणप्रयत्नमतिक्रम्यापि गाढोत्कण्ठं यतो विदीर्णं किमिति नोपलभ्यत इत्यत्र द्विधेत्युत्तरम्। अन्तरेव हि दलने यादृशी व्यथा स्यात्तादृशी व्यथा हृदि वर्तत इति मकरन्दे प्रकाशयति। यथा कायः शरीरं हृदयेतरद्विकलो विह्वलो मोहं वैचित्त्यं वहति। यदि मोहः कथमेवं जानासीत्यत्रोत्तरम्। चेतनां मालतीवियोगवेदनाज्ञानं तु न मुञ्चत्येवेत्याशयः। तथान्तर्दाहः स्मरपवनसंधुक्षितशोकानलरूपस्तनूं दहति। तर्हि 'दह भस्मीकरणे' इति धात्वर्थात्किमिति भस्मरूपता न दृश्यत इत्यत्र भस्मसान्न करोतीत्युत्तरम्। देहदाहे यादृशी रूक्षा तादृशी वर्तत इति व्यनक्ति। तथा विधिरननुकूलमाचरन्मर्मच्छेदनशीलः प्रहरतीव। तर्हि कथं जीवसीति चेदत्र न कृन्ततीत्युत्तरम्। चिरमयमनुभवतु यातनामिति जीविताकृन्तने हेतुः॥१२॥ **मकरन्दः**। निरवग्रहो निरङ्कुशो निर्मोहो वा। निरवग्रहमिति क्रियाविशेषणं वा। दैवं प्राक्तनमसत्कर्मेव रविरपि प्रचण्डकरो मध्याह्ने त्वां दहति। इयमीदृशी दुरतिक्रमदशान्तरावतरणलिङ्गभूता। पद्मसरः पद्मप्रधानं सरः। **उन्नालेति**। अत्र सरसि त्वामीदृग्दशापन्नं पवनः प्राणयिष्यति। मरुद्विशेषणान्याह—उन्नालेति। उद्गतनालानि यानि बालकमलानि प्रत्यग्रविकचानि। तेषामाकर उत्पत्तिस्थानं तत्र यो माकरन्दो निष्यन्दः स्रुतिः। क्षरणमिति यावत्। तेन संव-

( परिक्रम्योपविशतः । )

**मकरन्दः**—(स्वगतम् ।) भवतु । एवं तावदाक्षिपामि । (प्रकाशम् ।) वयस्य माधव,

एतस्मिन्मदकलमल्लिकाक्षपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
बाष्पाम्भःपरिपतनोद्गमान्तराले
दृश्यन्तामविरहितश्रियो विभागाः ॥ १४ ॥

(माधवः सोद्वेगमुत्तिष्ठति ।)

**मकरन्दः**—कथं निष्प्रतिपत्तिशून्यमुत्थायान्यतः प्रवृत्तः । (निःश्वस्योत्थाय ।) सखे, प्रसीद । पश्य ।

वानीरप्रसवैर्निकुञ्जसरितामासक्तवासं पयः
पर्यन्तेषु च यूथिकासुमनसामुज्जृम्भितं जालकैः ।
उन्मीलत्कुटजप्रहासिषु गिरेरालम्ब्य सानूनितः
प्राग्भागेषु शिखण्डिताण्डवविधौ मेघैर्वितानायते ॥ १५ ॥

अपि च ।

---

लितो मिश्रीभूतो यो मांसलः पुष्टो गन्धस्तद्बन्धुस्तत्सहचरः । तथा पुरः परिवर्तमाना ये कल्लोलास्तेषां शीकरा एव तुषारास्तैर्जडो मन्दगतिः ॥ १३ ॥ अथ मकरन्दो मित्रस्य दुरन्ताधिदर्शनेन भ्रान्तचित्ततया विरहिविपक्षतामुद्दीपनभावनां विस्मृत्य माधवस्यान्यचित्तताकरणाय तानेवोपन्यस्यति । आक्षिपाम्यन्यमनस्कं करोमि । **एतस्मिन्निति** । एतस्मिन्सरसि भूप्रदेशा दृश्यन्ताम् । प्रदेशानां विशेषणान्याह—सहर्षमन्द्रध्वाना ये मल्लिकाक्षा हंसविशेषास्तेषां पक्षव्याधूताः पूर्वं पश्चात्स्फुरन्त उरवो दण्डा येषां पुण्डरीकाणां तानि येषु भूभागेषु ते तादृशाः । बाष्पाम्भःपूरितलोचनत्वात्कथं दृश्यन्तामित्यत आह—एकस्य बाष्पाम्भसः परिपतनमन्यस्योद्गमनमित्यनयोरन्तराले ॥ १४ ॥ माधवस्य मकरन्दोक्तविनोदनोपदेश एवोद्वेगनिमित्तम् । **मकरन्दः** । निष्प्रतिपत्त्या मम तावद्वाक्यार्थानवबोधेन शून्यं शून्यहृदयता यथा स्यादेवमुत्थाय मकरन्दोपदिष्टात्मविनोदनहेतून्विपरीतानाशङ्क्यावलोकयितुमसमर्थः । उत्थायान्यतोस्मात्स्थानात्स्थानान्तरं गन्तुं प्रवृत्त इत्यर्थः । अथ मकरन्दो मित्रस्य दुःसहं दशान्तरमापतत्प्रतिकर्तुमसमर्थो निःश्वस्य वदति—प्रसीद चित्तस्याभिलाषितां मुञ्च । अथवा प्रसन्नो भव । **वानीरेति** । वयस्य निकुञ्जसहितानां नदीनां वेतसकुसुमैर्हेतुभूतैः प्राप्तसौरभं पयः पश्य । अत्र मनो विनोदयेत्याशयः । पर्यन्तेषु नदीनां तटेषु । यूथिकाकुसुमानां जालकैर्मुकुलैरुज्जृम्भितं विकसितं तदपि पश्येत्याशयः । इतश्च सानूनालम्ब्य शृङ्गाण्याधारीकृत्य मेघैर्मयूरोद्धतनृत्तनिमित्तं वितानायते पटमयनृत्तमण्डपतयावार्यते । केषु देशेष्वित्यत

जृम्भाजर्जरडिम्बिडम्बरघनश्रीमत्कदम्बद्रुमाः
शैलाभोगभुवो भवन्ति ककुभः कादम्बिनीश्यामलाः ।
उद्यत्कन्दलकान्तकेतकभृतः कच्छाः सरित्स्रोतसा-
माविर्गन्धशिलीन्ध्रलोध्रकुसुमस्मेरा वनानां ततिः ॥ १६ ॥

**माधवः**—सखे, पश्यामि । किं तु दुरालोकरमणीयाः संप्रत्यरण्यगिरितटभूमयः । तत्किमेतत् । (सास्रम् ।) अथवा किमन्यत् ।

उत्फुल्लार्जुनसर्जवासितवहत्पौरस्त्यझञ्झामरु-
त्प्रेङ्खोलस्खलितेन्द्रनीलशकलस्निग्धाम्बुदश्रेणयः ।
धारासिक्तवसुंधरासुरभयः प्राप्तास्त एवाधुना
घर्माम्भोविगमागमव्यतिकरश्रीवाहिनो वासराः ॥ १७ ॥

हा प्रिये मालति,

---

आह । प्राग्भागेषु गिरिभागेषु । विकसत्कुटजकुसुमैः प्रकृष्टो हासस्तद्वत्सु ॥ १५ ॥ **जृम्भेति** । जृम्भा विकासस्तेन जर्जरः शिथिलसंहतिर्यो डिम्बडम्बरः कलिकासमूहस्तेन घनश्रीयुक्तकदम्बद्रुमाः शैलपरिसरभुवो भवन्ति । एतान्मनोविनोदनार्थं पश्येत्याशयः । अत्र शैलभुवोऽनुवाद्याः कदम्बद्रुमा विधेयाः । एवं दिशो मेघमालाश्यामा भवन्ति । तत्रत्यककुभो मनोविनोदनत्वेनावलोकय । तथानुवाद्यविधेयभावौ च तथा सरित्प्रवाहाणां कच्छा येऽनूपप्रायदेशा उद्यत्कन्दलाश्च ते कान्तकेतकभृतश्चेति संप्रतिपन्नास्तेष्वपि मनो विनोद्यतामित्याशयः । तथा वनानां ततिराविर्भूतगन्धानि यानि शिलीन्ध्रलोध्रयोः कुसुमानि तैः स्मेरेव स्मेरा । ते मनोविनोदननिमित्तमित्याशयः । अनेन प्रबन्धेन विरहिवर्गात्यन्तानिष्टहेतुरासन्नो वर्षर्तुः सूच्यते । शिलीन्ध्राः पुंनागविशेषाः । रम्भेत्यन्ये । 'शिलीन्ध्रः कन्दलीपुष्पे करत्रिपुटकाख्ययोः' इति विश्वः । त्रिपुटकेति विकिचलविशेषः ॥ १६ ॥ **माधवः** । भगवद्वचनगौरवेण पश्यामि । दुरालोकत्वमस्यां दशायां स्मरोद्दीपकत्वेन रमणीयत्वं तु सुखिनामविरहिणामरण्यगिरिभूमीनामिति विवेकः । तत्किमेतदिति सामान्योक्तौ नपुंसकलिङ्गता । कोऽयं सर्वविदः सुहृदोऽत्यर्थप्रतिकूलानामेव भावानां मम दुःखशान्त्यर्थसुपन्यासक्रम इत्यभिप्रायः । अथवा । किमन्यद्भाग्यविपर्ययान्निमित्तान्तरं वयस्यस्योपन्यासक्रमे गवेषणीयमिति स्वात्मगतमेव संवृणोति । यद्वा रमणीयानां दुरालोकत्वे निमित्तं विमृशन् । अथवा किमन्यत्ते दिवसाः प्राप्ता ये दुरालोकत्वे निमित्तानीत्यर्थः । कीदृशो दिवसा इत्यत आह—**उत्फुल्लेति** । विकसितानि यानि ककुभसालकुसुमानि तैर्वासितो वहन्गच्छन्यः प्रचण्डः पुरोवातस्तत्प्रेङ्खोलेनान्दोलनेन स्खलिताः स्वस्थानाच्चलिता इन्द्रनीलशकलवत्स्निग्धा मेघपङ्क्तयो येषु दिवसेषु तादृशाः । तथा नूतनासारसक्तमेदिनीपरिमलसुगन्धाः तथा प्रस्वेदजलस्यासारपवनशैत्याद्यो विगमो विनाशस्तथा प्रचण्डार्कतापाच्च जननमाविर्भावस्तयोर्व्यतिकरो व्यामिश्रणं तच्छोभावहनशीलाः ॥ १७ ॥ हा इति

तरुणतमालनीलबहुलोन्नमदम्बुधराः
शिशिरसमीरणावधुतनूतनवारिकणाः ।
कथमवलोकयेयमधुना हरिहेतिमती-
र्मदकलनीलकण्ठकलहैर्मुखराः ककुभः ॥ १८ ॥

(निश्वस्य शोकार्तिं नाटयति ।)

**मकरन्दः**—कोऽप्यतिदारुणो दशाविपाको वयस्यस्य संप्रति वर्तते । (सास्रम् ।) मया पुनरज्ञानेन वज्रमयेन किल विनोदः प्रारब्धः । (निःश्वस्य ।) एवं च पर्यवसितप्रायेव नो माधवप्रत्याशा । (सभयं विलोक्य ।) कथं प्रमुग्ध एव । हा सखि मालति, किमपरम् । निरनुक्रोशासि ।

अपहस्तितबान्धवे त्वया
विहितं साहसमस्य तृष्णया ।

---

विषादद्योतकमव्ययम् । **तरुणेति** । हा प्रिये त्वमपि यदि मद्वियुक्ता जीवन्ती तिष्ठसि तत्कथमधुनेदृशो दिशो द्रष्टुं शक्यास्तत्कथमवलोकयेयम् । कीदृश्यः ककुभ इत्यत आह—प्रौढतापिञ्छतरुवन्नीलास्तथा बहुला बहवस्तथोन्नमन्तो मेघा यासु ताः । तथा शीतमारुतावधूनितप्रत्यग्रशीकराः । तथा हरिहेतिमतीरिन्द्रकार्मुकयुक्ताः । तथा मदेन हर्षेण कला ये नीलकण्ठकलहास्तैर्मुखराः । अत्रेन्द्रचापव्याप्तास्तथा मदान्धबर्हिकलहैर्दुःशब्दान्विताः कथमवलोक्याः संप्रतीदृश्यां दशायामिति दुरालोकत्वे हेतुः शब्दो ध्वनिः । अर्थस्तूद्दीपनविभावत्वेन ॥१८॥ विरहिजनात्यन्तानभीष्टा उन्नमदम्बुधरादिभिर्व्याप्ताः कथमवलोक्या मादृशैरिति शोकश्चित्तवैधुर्यम् । आर्तिः पीडा । नाटयति माधवभूतो नटो न तु माधव एव । यतोऽवस्थानुकृतिर्नाट्यमुच्यते । न च माधवः स्वस्यावस्थामनुकरोतीति युक्तम् ॥ **मकरन्दः** । कोऽपि वक्तुमप्यशक्यो दशाविपाको मरणावस्थारूपः । वज्रमयेन ॥ सुहृद्विनाशदर्शनदशायामपि जीवतीति वज्रमयत्वहेतुः । विनोदो दुःखनिवारणोपायः । माधवस्य जीवनोपाय इति निःश्वस्य चिन्तयति—**एवं चेति** । आश्वासनोपायाभावादवसितप्रायेव समाप्तेव सख्युः प्रियात्वेन सखीति संबोधनम् । किमपरं भवद्बहुदूषणोक्त्या प्रयोजनम् । निरनुक्रोशासि निर्दयासीत्येतावतैव त्वया संवृतानि स्वदूषणानि ज्ञेयानि । यथा त्वयानवलोकितः पतिर्यस्त्वत्प्राप्तिनिमित्तमारब्धमहामांसविक्रयप्रसङ्गेन त्वज्जीवितं रक्षितवांस्तथा त्वमपि कुतोऽप्यतर्कितागमना माधवजीवितं न रक्षसीति निरनुक्रोशा । **अपहस्तितेति** । मालतीसंबोधनमनपेक्षितमातृपित्रादिसंमतिरिति । यया त्वया तदानीमस्य माधवस्य लो-

तदिहानपराधिनि प्रिये
सखि कोऽयं करुणोज्झितः क्रमः ॥ १९ ॥

कथमद्यापि नोच्छ्वसिति । हन्त, मुषितोऽस्मि ।

मातर्मातर्दलति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविकलज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ २० ॥

कष्टं भोः, कष्टम् ।

बन्धुताहृदयकौमुदीमहो
मालतीनयनमुग्धचन्द्रमाः ।
सोऽयमद्य मकरन्दनन्दनो
जीवलोकतिलकः प्रलीयते ॥ २१ ॥

हा वयस्य माधव,

गात्रेषु चन्दनरसो दृशि शारदेन्दु-
रानन्द एव हृदये मम यस्त्वमासीः ।
तं त्वां निकामकमनीयमकाण्ड एव
कालेन जीवितमिवोद्धरता हतोऽस्मि ॥ २२ ॥

(स्पृशन् ।)

---

मेन स्वकरार्पणसाहसमनुष्ठितं तदेवमनपराधे कोऽयं निष्करुणः क्रमो व्यापारः ॥ १९ ॥ **मातरिति** । दलति स्फुटति । ध्वंसते त्रुट्यति । देहबन्धः शरीरावयवसंधिस्थानम् । ईदृशपुरुषप्रकाण्डेन विना जगच्छून्यं जानामि । तथाविच्छिन्नज्वालं यथा स्यादेवमन्तर्हृदये ज्वलामीव ज्वलामि । तथान्तरात्मा सीदन्नवसन्नीभवन्नन्धयतीत्यन्धमस्मिंस्तमसि मज्जतीव । विष्वक्सर्वतो मोहः स्थगयति सर्वेन्द्रियवृत्तीरावृणोति । विधुरो व्याकुलः । कथं मन्दभाग्यः करोमि । अस्य प्राणरक्षामिति शेषः । अथवा कथमिति किमित्यर्थेऽव्ययम् । किमिदानीं करोमीत्यर्थः॥२०॥ **बन्धुतेति** । बन्धुता बन्धुसमूहः तच्चित्तस्य कृते कौमुदी मह इव कौमुदीमहः । महशब्द उत्सवे । मालतीनयनयोः कृते प्रतिपच्चन्द्रः असंपूर्णदर्शनविषयत्वेन कदा सम्यङ्नयनविषयतां यास्यतीत्यस्या उत्कण्ठाजनकत्वेन मुग्धचन्द्रोक्तिः।मकरन्दनन्दनो मकरन्दानन्दनिमित्तं जीवलोकस्य तिलक इव । तिलको मण्डनविशेषः। प्रलीयते नश्यति॥२१॥ **गात्रेष्विति**। आलिङ्ग्यमानो गात्रेषु चन्दनरसः । दृश्यमानो दृशि शरच्चन्द्रः । विभाव्यमानो हृदय आनन्द एव मूर्तः । निकामकमनीयं स्वभा-

अकरुण वितर सितोज्ज्वलां
दृशमतिदारुण देहि मे गिरम् ।
सहचरमनुरक्तचेतसं
प्रियमकरन्द कथं न मन्यसे ॥ २३ ॥

(माधवः संज्ञां लभते ।)

**मकरन्दः**—(सोच्छ्वासम् ।) अयमचिरधौतराजपट्टरुचिरमांसलच्छविर्नवजलधरस्तोयशीकरासारेण संजीवयति मे प्रियवयस्यम् । दिष्ट्या समुच्छ्वसितस्तावत् ।

**माधवः**—तत्किमिवात्र विपिने प्रियावार्ताहरं करोमि ।

फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनतनुतरङ्गामुत्तरेण स्रवन्तीम् ।
उपचितघनमालप्रौढतापिञ्छनीलः
श्रयति शिखरमद्रेर्नूतनस्तोयवाहः ॥ २४ ॥

(सरभसमुत्थायोन्मुखः कृताञ्जलिः ।)

---

वरम्यं त्वामुद्धरता लोकान्तरं नयता जीवितमिवोद्धरता । एतच्च सर्वं विलापप्रकारत्वान्न तावद्रसविशेषपोषमावहति ॥ २२ ॥ स्पृशन्माधवशरीरम् । **अकरुणेति** । स्मितसाहचर्येणोज्ज्वलामकलुषां दृशं वितर । तथातिदारुणगिरं स्मितोज्ज्वलां देहि । प्रियो मकरन्दो यस्य तादृक्, तत्संबोधनम् । मां सहचरमनुरक्तचित्तम्, न तु बाह्यानुरागम् । कथं न मन्यसे कथं न जानासि । किमहं कदाप्युपरक्तचेता इति भावः । अत्र विशिष्टदृग्वचनदानमात्रेणैवेदानीं मम जीवनं स्यात्तन्मात्रेऽपि किं ते वैमुख्यमकरुणेति दारुणत्वोक्तौ निमित्तम् ॥ २३ ॥ **मकरन्दः** । अचिरधौतः सद्योनिर्मलीकृतो राजपट्टः श्यामः पाषाणविशेषस्तद्वदेव रुचिरा रम्या तथा मांसला पुष्टा छविर्यस्य तादृगभिनवमेघसमूहः । आसारो धारासंपातः । अत्र वियोगिनो माधवस्योच्छ्वासे विरहिवर्गातिदुःसहनवजलधरासारानुकूलत्वे प्रार्थनं मकरन्दस्य प्रियाविरहितात्मसमानतयान्येष्वपि जलधरादीनां सुखजनकतया भ्रान्तेर्ज्ञेयम् । दिष्ट्या भाग्येन ममात्मनश्च । उच्छ्वसितो विमुक्तनिरुद्धोच्छ्वासस्तावदयं वृत्त इत्याशयः ॥ **माधवः**—**तदिति** । 'एति जीवन्तमानन्दः' इत्यस्यापि वाल्मीकिवचसः प्रत्याशावलम्बनीयेति भावः । चिरेणामुमुपगम्येति पूरणीयम् । किमिति सामान्यजातौ नपुंसकत्वम् । प्रियायै मत्कुशलवार्तासमर्पकम् । **फलभरेति** । अद्रेः शृङ्गं नवो मेघः श्रयति । तदेनमेव वार्ताहरं करोमीत्याशयः । क्वेत्यपेक्षायामुत्तरेण स्रवन्तीमिति योज्यम् । स्रवन्त्या उत्तरस्यां दिश्यदूरे फलभरस्य यः परिणामः पाकस्तेन श्यामा या जम्बूलतास्ताभिर्वेष्टितो यो निकुञ्जस्तत्र यत्स्खलनं प्रतिघातस्तेन तनवस्तरङ्गा यस्यास्तथोक्ताम् । तथोपचितघनमाला निरन्तरपङ्क्तयो ये तापिञ्छास्तद्वन्नील इति

कच्चित्सौम्य प्रियसहचरी विद्युदालिङ्गति त्वा-
माविर्भूतप्रणयसुमुखाश्चातका वा भजन्ते ।
पौरस्त्यो वा सुखयति मरुत्साधुसंवाहनाभि-
र्विष्वग्बिभ्रत्सुरपतिधनुर्लक्ष्म लक्ष्मीवदेतत् ॥ २५ ॥

(आकर्ण्य ।) अये, अयं प्रतिरवभरितकन्दरानन्दितोत्कण्ठनीलकण्ठकलकेकानुबन्धिना मन्द्रहुंकृतेन मामनुमन्यते यावदभ्यर्थये । भगवन् जीमूत,

दैवात्पश्येर्जगति विचरन्मत्प्रियां मालतीं चे-
दाश्वास्यादौ तदनु कथयेर्माधवीयामवस्थाम् ।
आशातन्तुर्न च कथयतात्यन्तमुच्छेदनीयः
प्राणत्राणं कथमपि करोत्यायताक्ष्याः स एकः ॥ २६ ॥

(सहर्षम् ।) अये, प्रचलितः । तदन्यतः संभावयामि । (इति परिक्रामति ।)

---

तोयवाहविशेषणम् ॥२४॥ **कच्चिदिति** । कच्चिच्छब्दः कामप्रवेदने । स्वीयं कामं मनोरथं कथयेत्यर्थः । सौम्येति संबोधनम् । विरहिवर्गविरोधिनोऽपि शीकरासारेण सद्य एव मोहनिरासद्वारा कृतोपकारत्वात् । प्रियसहचरी विद्युत्त्वामालिङ्गति । मालतीव मां विहाय क्वापि गतेत्याशयः । तथाविर्भूतो यः प्रणयः प्रीतिस्तेन सुमुखाः प्रसन्नमुखाश्चातकास्त्वां भजन्ते । मकरन्दादिवन्मां परित्यक्त्वा क्वापि गता इत्युन्मादवेगान्मकरन्दं पश्यतोऽप्यपश्यत इवोक्तिः । पुरोवातो वा संवाहकः साधु भद्रं यथा स्यादेवं त्वां सुखिनं करोति । विष्वक्सर्वतः सुरपतिधनुरेव लक्ष्म चिह्नं तद्बिभ्रद्बिभ्राणेति जलदसंबोधनम् । कीदृग्लक्ष्मेत्यपेक्षायां लक्ष्मीवत्कान्तिमत् ॥ २५ ॥ अयं मेघध्वनिमनुमत्युत्तरमाशङ्कमानो माधवः पुनराह—अयं मेघो मामनुमन्यते । स्वाभिलषितं वदेति मय्यनुज्ञां ददातीत्यर्थः । केनानुमन्यत इत्यपेक्षायां मन्द्रहुंकृतेनेति पदम् । प्रतिशब्दभरिता याः कन्दरास्ताश्चानन्दितास्तथोत्कण्ठा उन्नमत्कण्ठा ये नीलकण्ठास्तेषां कला मन्द्रा या केकास्तदनुबन्धिना तत्संमितेनेति योजना । दत्तानुमतिस्तावदयम् । तदिदानीं यावदभ्यर्थये । यावदित्यवधारणे । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । तेनाभ्यर्थय एवैनमित्यर्थः । भगवन्निति । पूज्येत्यर्थः । भगवच्छब्दः पूजायाम् । पूज्योऽपि प्रार्थ्यते । तथोक्तम्—'याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा' इति । **दैवादिति** । जगति यदि स्वेच्छया विचरन्दैवात्काकतालीयन्यायेन प्रियां मालतीं पश्येस्तदा मारुतिः सीतामिवाश्वास्य जीवति त्वत्प्रिय इत्यादिवचनैस्तदनन्तरं माधवावस्थां कथयेः । माधवोऽहमिति प्रसङ्गात्स्वनामापि कथयति । ईदृश्यामवस्थायां किं जीव्यत इत्युक्तौ तदवस्थां कथयंता त्वयाशातन्तुर्मत्प्राप्तिप्रत्याशारूपो जीविताल्म्बनभूतो नात्यन्तमुच्छेद्यः । त-

**मकरन्दः**—(सोद्वेगम्।) कथमिदानीमुन्मादोपराग एव माधवेन्दुमास्कन्दति। हा तात, हा अम्ब, हा भगवति, परित्रायस्व माम्। पश्य माधवस्यावस्थाम्।

**माधवः**—धिक्प्रमादः।

नवेषु लोध्रप्रसवेषु कान्ति-
दृशः कुरङ्गेषु गतं गजेषु।
लतासु नम्रत्वमिति प्रमथ्य
व्यक्तं विभक्ता विपिने प्रिया मे ॥ २७ ॥

हा प्रिये मालति।

**मकरन्दः**—

सुहृदि गुणनिवासे प्रेयसि प्राणनाथे
कथमिव सहपांसुक्रीडनप्रौढसख्ये।
प्रियजनविरहाधिव्याधिखेदं दधाने
हतहृदय विदीर्य त्वं द्विधा न प्रयासि ॥ २८ ॥

**माधवः**—सुलभानुकारः खलु जगति वेधसो निर्माणसंनिवेशः।

---

द्वियोगे त्वद्दयितो न जीविष्यतीत्येवंविधैर्वचनैरित्यर्थः। स एवैक आशातन्तुस्तस्या आयताक्ष्याः प्राणरक्षां करोति यतः। तथोक्तमन्यत्रापि—'आशाबन्धः कुसुमसदृशः प्रायशो ह्यङ्गनानाम्' इति ॥ २६ ॥ अये, मद्वचसि कृतावधानो मद्वल्लभान्वेषणार्थं प्रचलित इति सहर्षत्वे हेतुः। तदन्यतः संभावयामीत्यन्यत्र संचरणमीहक्तदन्वेषणार्थम् ॥ **मकरन्दः**। उन्माद एवोपरागो राहुग्राहो माधव एवेन्दुस्तमास्कन्दत्यभिभवति। हा तातेत्यादिपितृमातृनामोच्चारणं मकरन्दस्य बाल्यात्परं प्रथमयौवनं द्योतयति। भगवतीति कामन्दकीनामग्रहणं विपन्निरासार्थम् ॥ **माधवः**। धिक्प्रमादोऽनवधानमस्मदादीनाम्। **नवेष्विति**। यतो मे प्रिया क्रूरैरेभिर्लोध्रप्रसवादिभिरस्मिन्वने प्रमथ्य भङ्क्त्वा व्यक्तं स्फुटं विभक्ता। तथा हि तत्कान्तिर्नूतनलोध्रप्रसवेषु, तथा हरिणेषु दृशः, तथा गजेषु गमनम्, तथा लतासु नम्रत्वम्। दृश्यत इति सर्वत्राध्याहार्यम्। इतीति प्रकारे ॥२७॥ **मकरन्दः**—**सुहृदीति**। सुहृदि मित्रे गुणवति प्रीतिविषये प्राणनाथे येन विना प्राणान्धर्तुं न शक्यते। तथा पांसुक्रीडनादारभ्य प्रौढसख्ये। प्रियावियोगजन्यो य आधिर्मनोव्यथा सैव व्याधिस्तद्वेगं बिभ्राणे सति हतहृदय, विशीर्य विशीर्णीभूय कथं द्विधा न भवसीति ॥ २८ ॥ **माधवः**। किंचित्प्रशान्तोन्मादवेगो लोध्रप्रसवादिषु प्रिया विभक्तेति सादृश्यनिबन्धना भ्रान्तिरिति जानातीत्यर्थः। भवत्वित्येवं तावद्भवतु। जीवतु जीवन्ती तावत्कापि

भवत्वेवं तावत् । ( उच्चैः ) अयमहं भोः ( प्रणिपत्य । ) भूधरारण्यवासिनः सत्त्वान्विज्ञापयामि । मुहूर्तमवधानदानेन मामनुगृह्णन्तु भवन्तः ।

भवद्भिः सर्वाङ्गप्रकृतिरमणीया कुलवधू-
रिहस्थैर्दृष्टा वा विदितमथवास्याः किमभवत् ।
वयोऽवस्थां तस्याः शृणुत सुहृदो यत्र मदनः
प्रगल्भव्यापारश्चरति हृदि मुग्धश्च वपुषि ॥ २९ ॥

कष्टं भोः ।

केकाभिर्नीलकण्ठस्तिरयति वचनं ताण्डवादुच्छिखण्डः
कान्तामन्तःप्रमोदादभिसरति मदभ्रान्ततारश्चकोरः ।
गोलाङ्गूलः कपोलं छुरयति रजसा कौसुमेन प्रियायाः
कं याचे यत्र तत्र ध्रुवमनवसरग्रस्त एवार्थिभावः ॥ ३० ॥

अयं च

दन्तच्छदारुणिमरञ्जितदन्तमाल-
मुन्नम्य चुम्बति वलीवदनः प्रियायाः ।

---

वर्तत इत्यर्थः । **उच्चैरिति** । वदतीति शेषः । अयमहं प्रथमं प्रणम्य पर्वतं वनचरान्सत्त्वान्सिंहादीन्प्राणिनो विज्ञापयामि । ते गत्वा मां मुहूर्तमनुगृह्णन्त्ववधानमात्रेण । न बहु किंचित्प्रार्थयामीत्यर्थः । **भवद्भिरिति** । इहस्थैरिह वने स्थितिमद्भिः । कुलवधूः काचिद्दृष्टा । कुलवधूशब्देन वाराङ्गनाव्यावृत्तं साध्वीलिङ्गमसाधारणं सूचितम् । सर्वाङ्गप्रकृतिरमणीयेति । सर्वशरीरावयवेषु स्वभावरमणीयत्वं न त्वलंकारादिकृतं रमणीयत्वमसाधारणम् । तल्लक्षणं कथितम् । अथ न दृष्टा त्वियं तदा परं प्रामाण्येन विज्ञायते । किं तस्याः समभवदिति । कीदृशी वयोवस्था तस्या इति ज्ञातुमिच्छास्ति चेत्तदा शृणुत । यस्यामवस्थायां हृदि प्रौढव्यापारो मदनश्चरति वपुषि च रमणीयो मुग्ध इति तेन च प्रथमयौवनदशापि सूचिता । तल्लक्षणं भरते—'पीनोरुगण्डजघनमधरं स्तनकर्कशं पतिमनोज्ञम् । सुरतं प्रति सोत्साहं प्रथमं तद्यौवनं कामः ॥' इत्युक्तम् ॥ २९ ॥ कष्टं भो इति प्रियाप्राप्त्युपायाभावेन नैराश्याद्दुःसहदुःखद्योतकम् । **केकाभिरिति** । कं याचे कं प्रार्थयामि । प्रियाकल्याणवार्तामिति शेषः। यथा मदीयोऽर्थिभावः प्रार्थकत्वमेव निश्चितं सत्त्वानां मयूरादीनामनवसरेणानवकाशेन ग्रस्तो निराकृतः । तथाहि नीलकण्ठस्तावत्ताण्डवादुद्धृतनृत्तादुच्छिखण्ड उच्चैः कृतबर्हभारो मदीयं वचनं तिरयति नाकर्णयति । चकोरश्च स्वकान्तामन्तःप्रमोदादभिसरति । न मम वचो बहुमन्यते । गोलाङ्गूलश्च कृष्णमुखो वानरविशेषः। परागेण प्रियायाः कपोलं चर्चयति । अतोऽनवसरहेतव उक्ताः ॥३०॥ **दन्तेति** । अयं वलीवदनो लोहितवक्त्रवानरः प्रियाया वक्त्रमुन्नमय्य चुम्बति । वदनविशेषण-

काम्पिल्यकप्रसवपाटलगण्डपालि-
पाकारुणस्फुटितदाडिमकान्ति वक्त्रम् ॥ ३१ ॥

अयं च रोहिणानोकहस्कन्धविश्रान्तकण्ठः करी । कथमत्राप्यनवसरः ।

कण्डूकुड्मलितेक्षणां सहचरीं दन्तस्य कोट्या लिख-
न्पर्यायव्यतिकीर्णकर्णपवनैराह्लादिभिर्वीजयन् ।
जग्धार्धैर्नवसल्लकीकिसलयैरस्याः स्थितिं कल्पय-
न्नन्यो वन्यमतङ्गजः परिचयप्रागल्भ्यमभ्यस्यति ॥ ३२ ॥

(अन्यतो विलोक्य ।) अयं तु

नान्तर्वर्धयति ध्वनत्सु जलदेष्वामन्द्रमुद्गर्जितं
नासन्नात्सरसः करोति कवलानावर्जितैः शैवलैः ।
दानज्यानिविषादमूकमधुपव्यासङ्गदीनाननो
नूनं प्राणसमावियोगविधुरः स्तम्बेरमस्ताम्यति ॥ ३३ ॥

अलमनेनाप्यायासितेन । (सानन्दम् ।) एष सानन्दसहचरीसमाक-

---

माह—अधरारुणिम्ना रक्तीकृता कमनीया दन्तपङ्क्तिर्यत्र वदने तत्तादृक् । तथा रोचनिकाफलवत्पाटला कपोलपालिर्यत्र तत्तथा । पाकेनारुणं बीजोच्छ्वासेन स्फुटितं यद्दाडिमं तस्यैव कान्तिर्यत्र वक्त्रे तत्तादृगित्यर्थः ॥ ३१ ॥ एष करी । तिष्ठतीति शेषः । रोहिणतरुमूले विश्रान्तग्रीवः । रोहिणो वटः । अनवसरो मद्वचनस्य । **कण्डूकुड्मलितेति** । अन्यः कोऽप्ययं वनगजः कान्तानुवृत्तिपरिचये प्रौढिमभ्यस्यति । किंकुर्वन्नित्यपेक्षायां कण्डूयनेन मुकुलितनयनां प्रियां दन्तस्य कोट्या लिखन् । तथा पर्यायेण क्रमेण व्यतिकीर्णौ विक्षिप्तौ कर्णौ तत्पवनैराह्लादिभिः सुखजनकैरनुचरीं वीजयन् । तथा भुक्तार्धैः प्रत्यग्रसल्लकीपल्लवैः सख्याः करिण्या वृत्तिं समर्पयन्निति ॥ ३२ ॥ **नान्तरिति** । अयमन्यः । नूनं शङ्के । प्राणसमा प्रिया तद्वियोगेन विधुरः स्तम्बेरमो गजस्ताम्यति । यतो गर्जत्सु मेघेषु तद्गर्जितं न वर्धयति नाविष्करोति । तथासन्नान्निकटात्सरोवरादावर्जितैः शैवलैः कवलान्न करोति । तथा मदस्य या ज्यानिर्हानिस्तया मदपाताभावेन यो विषादस्तेन निःशब्दा ये मधुपास्तेषां यो व्यासङ्गो विशिष्टासक्तिर्मदनस्यानास्वादनाय निश्चलतया लयरूपस्तेन दीनमप्रहृष्टं वदनं यस्य तादृक् ॥ ३३ ॥ मत्समानव्यसनोऽयम्, तदलमनेन संलापद्वारायासितेन । एषोऽपरो यूथनाथः संलापयोग्य इत्याशयः । अस्य विशेषणम्—**सानन्देति** । सानन्दा या प्रियतमा तया समाकर्ण्यमानो विशिष्टध्वनिर्यस्य । सरोवरं कर्मतापन्नमवगाह्य विहरतीत्यन्वयः ।

र्ण्यमानमधुरगम्भीरकण्ठगर्जितध्वनिरपरोऽपि मत्तमातङ्गवर्गपालकः प्रत्यग्रविकसितकदम्बसंवादिसुरभिशीतलामोदबहुलसंवलितमांसलकपोलनिष्यन्दकर्दमिततीरं समुद्धृतकमलिनीखण्डप्रकीर्णकेसरमृणालकन्दाङ्कुरनिकरमनवरतप्रवृत्तकमनीयकर्णतालताण्डवप्रचलकर्णजर्जरिततरलतरङ्गविततनीहारवित्रस्तकुररसारसं सरोऽवगाह्य क्रीडति । भवतु । एनमाभाषे । महाभाग नागपते, श्लाघ्ययौवनः खल्वसि । कान्तानुवृत्तिचातुर्यमप्यस्ति भवतः । (सापवादम् ।)

लीलोत्खातमृणालकाण्डकवलच्छेदेषु संपादिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः ।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्न स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥ ३४ ॥

कथमवधीरणानीरसं व्रजति हन्त, मूढ एवास्मि, योऽस्मिन्वनचरेऽपि वयस्यमकरन्दोचितं व्याहरामि । हा प्रियवयस्य मकरन्द,

---

सरोविशेषणान्याह—**प्रत्यग्रविकसितेति** । प्रत्यग्रविकसितो नूतनविकसितो यः कदम्बकुसुमसमूहस्तत्समानः सुरभिः शीतलो य आमोदस्तेन बहुलः प्रभूतस्तथा संवलितः पुञ्जीभूय स्थितोऽत एव मांसलः पुष्टो यः कपोलनिष्यन्दस्तेन संजातकर्दमं तटं यस्य सरसस्तादृक् । तथा समुद्धृतानि यानि कमलिनीखण्डानि पद्मिनीकदम्बानि तेभ्यः प्रकीर्णा विक्षिप्ताः केसरादयो यस्य सरसः । अनवरतमविच्छिन्नं प्रवृत्तं कमनीयं यत्कर्णतालयोस्ताण्डवमुद्धूतनृत्तं तेन चण्डौ यौ कर्णौ ताभ्यां जर्जरिता ये तरङ्गास्तेभ्यो विनिर्गता ये नीहाराः शीकरास्तेभ्यो वित्रस्तौ कुररसारसौ पक्षिविशेषौ यत्र तत्तादृक् । भवतु । स्वस्थचित्तोऽयमाभाषणयोग्यः । तदेनमाभाषे । श्लाघ्ययौवनः प्रियावियोगवर्जयौवनः । कान्तानुवृत्तिचातुर्यं तव सदूषणम् । तदेव चातुर्यं व्यनक्ति—**लीलेति** । लीलयोद्धृता ये बिसकाण्डकवलास्तच्छेदेषु समाप्तिषु विकसत्पद्मसुरभितस्य जलस्य गण्डूषसंक्रान्तय उद्गीर्णजलचुबुकसंक्रान्तयः संपादिता दत्ताः । अनेन । रतारम्भकं नायककृत्यमुक्तम् । गण्डूषपदेन स्वयं पीत्वा जलदानं ध्वनितम् । तथाम्भःकणवता स्थूलहस्तेन सेकः कृतः । तदिदं द्वयं कामं युक्तमेव । दोषमाह—विरामे रतिविरामे पुनरकुटिलनालपद्मपत्रच्छत्रं न स्नेहाद्धृतम् । एतदयुक्तमित्यर्थः । अतः कान्तानुवृत्तिं न जानासीति भावः ॥ ३४ ॥ अवधीरणा प्रतिवचनादानम् । तेन नीरसं यथा स्यादेवं व्रजतीत्यर्थः । हन्तेति विषादे । वयस्यमकरन्दोचितमित्यनेन प्रस-

धिगुच्छ्वसितवैशसं मम यदित्थमेकाकिनो
धिगेव रमणीयवस्त्वनुभवाद्वृथा भाविनः ।
त्वया सह न यस्तया च दिवसः स विध्वंसतां
प्रमोदमृगतृष्णिकां धिगपरत्र कामानुषे ॥ ३५ ॥

**मकरन्दः**—अये, उन्मादमोहान्तरितोऽपि मां प्रति कुतश्चिद्व्यञ्जकात्प्रबुद्ध एवास्य सहजस्नेहसंस्कारः । तत्संनिहितमेव मां मन्यते । (पुरतः स्थित्वा ।) एष पार्श्वचर एव ते स मकरन्दो मन्दभाग्यः ।

**माधवः**—हा प्रियवयस्य । संभावय । परिष्वजस्व माम् । प्रियां मालतीं प्रति तु निराश एव संवृत्तोऽस्मि ।

**मकरन्दः**—एषोऽहं संभावयामि जीवितेश्वरम् । (विलोक्य सकरुणम् ।) कष्टम् । कथमाविर्भूतमत्परिष्वङ्गोत्कण्ठ एव निश्चेतनः संवृत्तः । तत्कृतमिदानीं जीविताशाव्यसनेन । सर्वथा नास्ति मे प्रियवयस्य इति युक्तः परिच्छेदः । हा वयस्य,

यत्स्नेहसंज्वरवता हृदयेन नित्य-
माबद्धवेपथु विनापि निमित्तयोगात् ।

---

ङ्गेन मकरन्दं स्मृत्वा हा प्रियवयस्येत्युक्तम् । **धिगिति** । उच्छ्वसितं जीवधारणमेव वैशसं दुःखं यदुच्छ्वसितं त्वया विनैकाकिनो मम धिक् । तथा रमणीयवस्तु धिक् । वृथाभाविनो निष्फलोदयादनुभवाद्रमणीयतां विषयाणां धिक् । तत्र रमणीयताविषयानुभवाभावबोधको धिक्शब्दः । त्वया तया मालत्या सह च यो दिवसो न याति स विध्वंसतां विनश्यतु । तथा प्रमोदो हर्षभारः स एव मृगतृष्णिका मालतीमकरन्दाभ्यामन्यस्मिन्कामानुषे या स्यात्तां धिक् ॥ ३५ ॥ **मकरन्दः** । अस्य माधवस्य निसर्गस्नेहसंस्कारः स्मृतिज्ञानबीजभूतः कुतश्चित्स्मृतिबीजबोधकात्सदृशाद्दृष्टचिन्तारूपादुन्मादमोहान्तरितोऽपि प्रबुद्ध एव तिरोहितोऽपि व्यञ्जकादुद्बुद्ध एव माधवो मकरन्दमवलोक्य वदति ॥ **माधवः** । परिष्वजस्व माम् । प्रियां प्रति निराशोऽस्मि ॥ **मकरन्दः** । संभावयामीति परिष्वञ्जनेन । जीवितेश्वरं प्राणनायकम् । कथमुद्भूतमदवलोकनोत्कण्ठ एव । निश्चेतनश्चेतनारहितः । अलमनेन विनापि विफलजीविताशाव्यसनेन । दुःखसंवेदनायैव हि जीवितम् । इदानीं तज्जीवितं परित्यजामीत्याशयः । परिच्छेदः सहायाभावे निश्चयः । **यत्स्नेहेति** । यद्द्रवत्स्नेहेन संतप्यमानेन हृदयेनाबद्धवेपथु यथा स्यात्तथैव यद्द्रयमन्वभाव्यनुभूतम् । कथमाबद्धवेपथुत्वमित्यत आह—विना निमित्तमिति । वेपथुनिमित्तं य-

त्वय्यापदो गणयता भयमन्वभावि

तत्सर्वमेकपद एव मम प्रणष्टम् ॥ ३६ ॥

अथवा वरं त एवातिक्रान्ता मुहूर्ताः, येषु तथाविधमपि भवन्तं चेतयमानमनुभूतवानस्मि । इदानीं तु मम

भारः कायो जीवितं वज्रकीलं

काष्ठाः शून्या निष्फलानीन्द्रियाणि ।

कष्टः कालो मां प्रति त्वत्प्रयाणे

शान्तालोकः सर्वतो जीवलोकः ॥ ३७ ॥

(विचिन्त्य ।) तत्किं नु माधवास्तमयसाक्षिणा भवितव्यमित्यतो जीवामि । तदस्माद्गिरिशिखरात्पाटलावत्यां निपत्य माधवस्य मरणाग्रेसरो भवामि । (सकरुणं परित्रस्यावलोक्य च ।) कष्टम् ।

---

दुपस्थितं तद्विनापि । 'प्रेम पश्यति भयान्यपदेऽपि' इति ह्युक्तम् । पुनः कीदृशा हृदयेन । त्वयीदृशावस्थानां विचारयता । तद्भयं सर्वं त्वयि निश्चेतने सति एकपदे झटिति विनष्टमिति ॥ ३६ ॥ तेऽतिक्रान्ता मुहूर्ता एव वर्तमानमुहूर्तेभ्यो वरम् । भद्रा इत्यर्थः । 'वरशब्दोऽव्ययो भद्रम्' इत्यमरः(?) । 'वरं विरोधोऽपि समं महात्मभिः' इत्यादि प्रयोगदर्शनात् । तथाविधं तादृगसह्यसर्वदुःखमनुभवन्तं येषु तेषु । मुहूर्तेषु । चेतयतीत्येवं शानच् । इदानीं वैराग्यप्रभावादाविर्भूतशरीरव्यतिरिक्तात्मसाक्षात्कारो मकरन्द आत्मगतमेव विचारयति—**भार इति** । यथा भाराक्रान्तोऽपि तत्परित्यागान्निर्दुःखः स्यात्, एवं शरीरप्राणपरित्यागाद्बाधारहितो भवामीति काये भारत्वोक्तिः । ईदृक्प्राणनाथविनाशेऽपि यन्न प्रयाति तज्जीवितं वज्रकीलमिव वज्रकीलम् । वज्रकीलत्वोक्त्या दृढत्वमुक्त्वा दुःसहदुःखजनकत्वं च जीवितस्य कथितम् । त्वद्विरतिज्ञानान्मम सर्वशः प्रतिभाति । तदिदानीं सर्वाः काष्ठाः शून्या इव शून्या असंपूर्णार्थाः । निष्फलान्येकादशेन्द्रियाणि यथायथमिन्द्रियैः स्वस्वानि ग्राह्याणि न गृह्यन्ते । सर्वव्यापाराणां निवृत्तत्वात्कालस्य कष्टत्वम् । त्वत्प्रयाणे मरण इति वक्तव्ये मरणशब्दस्याशस्तार्थत्वात्तद्वक्तुमशक्तः प्रयाणपदेन कल्याणाभिधायकेनाह । यथा 'देवव्रते वाञ्छति दीर्घनिद्रां द्रोणे च कर्णे च यशोवशेषे । लक्ष्मीसहायस्य तथैव वत्स वात्सल्यवान्द्रौणिरयं सहायः ॥' इति । अत्र दीर्घनिद्रादिपदैः शब्दार्थप्रतिपादकाभासैरशस्तान्येव कविरुक्तवान् । अत्र दीर्घनिद्रापदेन मरणम् । यशोवशेष इति मृते । लक्ष्मीसहायस्यैकाकिनः । वात्सल्यवानिति वात्सल्यसहायः । एकाकीत्यर्थः । शान्तालोको जीवलोकः । शान्तद्योत इत्यनेन जीवलोकस्य तमोमयतां प्रतिपादयन्मोहमयतामात्मनः प्रतिपादयति ॥ ३७ ॥ माधवोऽस्तमनमेतीति माधवमरणवेदित्वमेव मज्जीवितफलम् । तर्हि जीवितपरित्यागाय प्रयत्नं करोमीत्याशयः । गिरि-

तदेतदसितोत्पलद्युति शरीरमस्मिन्नभू-
न्ममापि दृढपीडनैरपि न तृप्तिरालिङ्गनैः ।
यदुल्लसितविभ्रमा बत निपीतवत्यः पुरा
नवप्रणयविभ्रमाकुलितमालतीदृष्टयः ॥ ३८ ॥

हन्त भोः, एकस्यां तनावेतावतो गुणसमाहारस्य संनिवेशः कथमिवाभूत् । सखे माधव,

आपूर्णश्च कलाभिरिन्दुरमलो यातश्च राहोर्मुखं
संजातश्च घनाघनो जलधरः शीर्णश्च वायोर्जवात् ।
निर्वृत्तश्च फलेग्रहिर्द्रुमवरो दग्धश्च दावाग्निना
त्वं चूडामणितां गतश्च जगतः प्राप्तश्च मृत्योर्वशम् ॥ ३९ ॥

तत्परिष्वजे तावदेवं गतमपि प्रियवयस्यम् । अर्थितश्चानेन संप्रत्ययमेवार्थः । (परिष्वज्य ।) हा वयस्य, विमलकलानिधे गुणगुरो, हा मालतीस्वयंग्राहजीवितेश्वर, हा कामन्दकीमकरन्दानन्दजनक माधव, अयमत्र ते जन्मन्यपश्चिमः पश्चिमावस्थाप्रार्थितो मकरन्दबाहुपरिष्वङ्गः । सखे, संप्रति मुहूर्तमपि मकरन्दो जीवतीति मैव मंस्थाः । कुतः ।

---

शिखरात्पाटलावत्यभिधानायां नद्यां निपत्य यावदेव माधवो म्रियते तावदेव मज्जीवितं परित्यजामीत्यर्थः । **तदेतदिति** । तदेतन्माधवशरीरं नीलोत्पलपत्रकान्ति । तृप्तिः संतोषो मम दृढपीडनैरप्यालिङ्गनैरस्मिन्नाभूत् । यदङ्गं नवस्नेहविलासव्याकुलमालतीदृष्टय उपचिताद्भुताः पूर्वं निपीतवत्यः नित्यादरेणालोकितवत्य इत्यर्थः । बतेति खेदे ॥ ३८ ॥ **आपूर्ण इति** । यथा निर्मलश्चन्द्रः कलाभिरापूर्णोऽकृतानन्दश्च सैंहिकेयेन गृह्यते । यथा संजातमात्र एव घनाघनो वर्षको घनः प्रचण्डवायुवेगाद्विशीर्णो भवति । अकृतधराधरादिसंतापप्रशमः प्रचण्डपवनाद्विलीयते । यथा वा फलेग्रहिः फलितसहकारादितरुः स्वफलैरतर्पितपान्थादिवर्गो दावाग्निना दह्यते तथा त्वमप्यसाधारणैर्गुणग्रामैर्जगच्चूडामणित्वं प्राप्तमात्र एवाप्राप्तगुणग्रामोपयोगो मृत्योर्वशं प्राप्त इत्यर्थः॥३९॥प्रार्थितो याचितोऽयमेवाश्लेषरूपोऽर्थः। संप्रत्येव 'वयस्य, संभावय । परिष्वजस्व माम् । प्रियां मालतीं प्रति तु निराशोऽसि' इत्यनेन ग्रन्थेन गुणैर्गुरुः, न पुनः शरीरोपचयेन । तथा मालत्या यः स्वयंग्राहो गुरुजनानपेक्षो माधवानुरागमात्रनिबन्धनः स्वशरीरसंप्रदानरूपः कर्मविशेषः स एव जीविते निमित्तम् । न हि माधवविपत्तौ संप्रति मालतीनिरतिशयस्नेहादन्यन्निमित्तमित्याशयः । कामन्दकीमकरन्दानन्दजनकेत्यनेन कामन्दक्या सह मयापि तर्हि

आ जन्मनः सह निवासितया मयैव
मातुः पयोधरपयोऽपि समं निपीय ।
त्वं पुण्डरीकमुखबन्धुतया निरस्त-
मेको निवापसलिलं पिबसीत्ययुक्तम् ॥ ४० ॥

(सकरुणं विमुच्य । परिक्रम्य ।) इयमधस्तात्पाटलावती । भगवत्यापगे,

प्रियस्य सुहृदो यत्र मम तत्रैव संभवः ।
भूयादमुष्य भूयोऽपि भूयासमनुसंचरः ॥ ४१ ॥

(इति पतितुमिच्छति ।)

**सौदामिनी**—(प्रविश्य सहसा वारयित्वा ।) वत्स, कृतं साहसेन ।

**मकरन्दः**—(विलोक्य ।) अम्ब, कासि । किमर्थं त्वयाहं प्रतिषिद्धः ।

**सौदामिनी**—आयुष्मन्, किं त्वं मकरन्दः ।

**मकरन्दः**—मुञ्च । स एवास्मि मन्दभाग्यः ।

**सौदामिनी**—वत्स, योगिन्यस्मि । मालतीप्रत्यभिज्ञानं च धारयामि । (बकुलमालां दर्शयति ।)

**मकरन्दः**—(सोच्छ्वासं सकरुणम् ।) अपि जीवति मालती ।

**सौदामिनी**—अथ किम् । वत्स, किमत्याहितं माधवस्य । यदनिष्टं व्यवसितोऽसीत्याकम्पितास्मि ।

**मकरन्दः**—आर्ये, तमहं प्रमुग्धमेव वैराग्यात्परित्यज्यागतः ।

---

विपत्प्रतीकारः कृतः क्रियते वेति प्राप्याकिंचित्कारित्वाद्विधेय इत्याशयः। अपश्चिम आद्यः । पुनर्ममालिङ्गनाभावादयमेवापश्चिमो दुर्लभः । पश्चिमावस्थान्त्यावस्था । **आ जन्मन इति** । जन्मप्रभृति सहचरतयाभिन्नजननीस्तन्यमपि पीत्वा संप्रति बन्धुतया बन्धुसमूहेन निरस्तं दत्तं निवापमेक एव पिबसि मकरन्दं विहायेत्ययुक्तम् । निवापः पितृतर्पणम् ॥ ४० ॥ **प्रियस्येति** । यत्र स्थाने प्रियस्य मत्प्रीतिस्थानस्य सुहृदो यत्र देशे संभवो जन्म स्यात्, तत्रैव ममापि संभवो भूयात् । तथामुत्र परलोके तस्यैवानुचरो भूयासमिति प्रार्थनाद्वयम् ॥ ४१ ॥ **मकरन्दः** । कामन्दकीसदृशवेषसौहार्दवयोदर्शनादम्बेत्युक्तिः । प्रतिषिद्धो निवारितः। तस्यैवानुसंचरो भूयासमिति प्रार्थनावचो दूरादाकर्ण्य सौदामिनी पृच्छति । किं मकरन्द इति ॥ **सौदामिनी** । अथ किम् । जीवतीत्यर्थः । अत्याहितं महाभीतिः । किं विनाशो जातो माधवस्येत्याशयः । अनिष्टं स्वशरीरत्यागरूपं व्यवसितोऽसि ॥ **मक-**

तदेहि। तूर्णं संभावयावः।

(त्वरितं परिक्रामतः।)

**मकरन्दः**—(विलोक्य।) दिष्ट्या प्रत्यापन्नचेतनो वयस्यः।

**सौदामिनी**—संवदत्युभयोर्मालतीनिवेदितः शरीराकारः।

**माधवः**—(आश्वस्य।) अये, प्रतिबोधितवानस्मि केनापि। (विचिन्त्य।) नूनमस्यायं नवजलधरप्रभञ्जनस्यानवेक्षितास्मदवस्थो व्यापारः। भगवन् पौरस्त्य वायो,

भ्रमय जलदानम्भोगर्भान्प्रमोदय चातका-
न्कलय शिखिनः केकोत्कण्ठान्कठोरय केतकान्।
विरहिणि जने मूर्च्छां लब्ध्वा विनोदयति व्यथा-
मकरुण पुनः संज्ञाव्याधिं विधाय किमीहसे॥ ४२॥

**मकरन्दः**—सुविहितमनेनाखिलजन्तुजीवनेन मातरिश्वना। अपि च।

एते केतकसूनसौरभजुषः पौरप्रगल्भाङ्गना-
व्यालोलालकवल्लरीविलुठनव्याजोपभुक्ताननाः।
किंचोन्निद्रकदंबकुड्मलपुटीधूलीलुठत्षट्पद-
व्यूहव्याहृतिहारिणो विरहिणः कर्षन्ति वर्षानिलाः॥ ४३॥

---

रन्दः। प्रमुग्धं प्रकृष्टमोहग्रस्तम्। प्रलयावस्थागतमिति यावत्। **मकरन्दः**। प्रत्यापन्नचेतनःप्रादुर्भूतसंज्ञः॥ सौदामिनी पूर्वमदृष्टमाधवमकरन्दशरीराकारा संप्रति द्वावपि विलोक्याह—**संवदतीति**। मालत्या यादृश्याकृतिः कथिता तादृश्येव द्वयोरपीत्यर्थः॥ **माधवः**। नूनं शङ्के निश्चितं वा। व्यापारो मन्मोहच्छेदनानुगुणं कर्म। प्रभञ्जनस्य मरुतोऽस्यामवस्थायां मोह एव चरमदशानुभवप्रतिपक्ष इत्याशयः। स्वमोहविच्छेदनहेतुं प्रभञ्जनमवधार्य तमेवोपालम्भवाचकैर्वाक्यैराह—**भ्रमयेति**। इतस्ततो मेघान्भ्रमय। जलदानां भ्रमणेन संतापशान्तिर्भविष्यति। अम्भोगर्भत्वेन च संपूर्णकामाञ्जरामरणरहितवारिपिपासार्दितांश्चातकान्प्रमोदय। तथा मयूरानेतेनैव हेतुना केकाविषये साभिलाषान्कुरु। तथा केतकान्कठोरय जलसेकव्यतिकरेण प्रौढान्कुरु। मादृशविरहिणि जने पुनर्दैवान्मूर्च्छां लब्ध्वा तद्द्वाराप्यात्मव्यथां विनोदयति निराकुर्वाणे। संज्ञारूपं चैतन्यरूपं व्याधिं दत्त्वाद्य किमीहसे। स्वार्थं परार्थं वेत्याशयः॥ ४२॥ **मकरन्दः**। सुविहितं भद्रीकृतम्। अखिलजन्तुजीवनत्वं जगत्प्राणतया। **एत इति**। एते वर्षमारुता विरहशीलाञ्जनान्कर्षन्ति। ते कीदृशा इत्यपेक्षायां केतकपुष्पपरिमलवाहिनः, तथा चञ्चलकुन्तललताचालन-

**माधवः**—देव वायो, तथापि भवन्तमेव प्रार्थये ।

विकसत्कदम्बनिकुरुम्बपांसुना
सह जीवितं घटय मे प्रिया यतः ।
अथवा तदङ्गपरिवासशीतलं
मयि किंचिदर्पय भवांस्तु मे गतिः ॥ ४४ ॥

(कृताञ्जलिः प्रणमति ।)

**सौदामिनी**—सुसमाहितः खल्वभिज्ञानार्पणस्यावसरः । (अञ्जलौ वकुलमालामर्पयति ।)

**माधवः**—(साकूतं सहर्षं सविस्मयं च ।) कथमियमसद्भिरचिता प्रियास्तनोन्नाहदुर्ललितमूर्तिरनङ्गमन्दिराङ्गणबकुलपादपकुसुममाला । (सम्यङ्निरूप्य ।) कः संदेहः । तथा हि स एवायमस्याः

मुग्धेन्दुसुन्दरतदीयमुखावलोक-
हेलाविशृङ्खलकुतूहलनिह्नवाय ।
दुर्न्यस्तपुष्परचितोऽपि लवङ्गिकाया-
स्तोषं ततान विषमग्रथितो विभागः ॥ ४५ ॥

(सहर्षोन्मादमुत्थाय ।) चण्डि मालति, इयं विलोक्यसे । (सकोपमिव ।) अयि मदवस्थानभिज्ञे

---

व्याजेन परिमुक्तप्रगल्भपुरस्त्रीमुखाः तथा विकचकदम्बकोशरजोलग्नभृङ्गसमूहझङ्कारमनोहराः ॥ ४३ ॥ **माधवः** । यद्यपि त्वया संज्ञारूपव्याधिर्जनितः, तथापि त्वामेव प्रार्थये देवत्वादेव । **विकसदिति** । यत्र मे प्रिया वर्तते तत्र परागैः सह मत्प्राणान्नय । सप्तम्यर्थे सार्वविभक्तिकस्तसिः । तदङ्गसङ्गशीतलं वा किंचिद्वस्तु प्रेरय यत्राहं तिष्ठामि । त्वां विना वने क इदानीं गतिरित्याशयः ॥ ४४ ॥ सुसमाहितः सुष्ठु भद्रः । य एवाञ्जलिः प्रथमप्रणामाञ्जलिर्माधवेन बद्धस्तत्रैवाभिज्ञानस्रजमर्पयति ॥ **माधवः** । उन्नाहेनोपरिवर्तनेन दुर्ललितमूर्तिः । उन्नाह उत्सेध इत्यन्ये । मदनमन्दिराजिरकेसरस्रक् । अनङ्गमन्दिरपदमत्र घृणावदर्थे । कः संदेहः । सैवेयमित्यर्थः । तथा हि स एवास्याः स्रजो विभागः । **मुग्धेति** । दुर्न्यस्तान्यभद्रीकृत्य निवेशितानि पुष्पाणि तैं रचितोऽपि लवङ्गिकायास्तोषं ततान विस्तारयामास । दुर्न्यस्तपुष्परचितत्वेनैव विषमग्रथितः । दुर्न्यस्तत्वे हेतुमाह—मुग्धेन्दुवत्सुन्दरं यत्तदीयं मुखं तदवलोकने हेला शृङ्गारजो भावविशेषस्तेन विशृङ्खलमुद्भटं माधवे यत्कुतूहलं तस्य निह्नवाय । मालतीपरिजनेभ्यो गोपनायेत्यर्थः ॥४५॥ अथासाधारणाभिज्ञानलाभेन संनिहितप्रच्छन्नां मालतीं मन्यमानोऽकालव्यसनोन्मादः सकोपमिवाह—स्वस्थदशायां हि परिहासः क्रियते । त्वं पुनरेतर्हि मम दशानभिज्ञा ।

प्रयान्तीव प्राणाः सुतनु हृदयं ध्वंसत इव
ज्वलन्तीवाङ्गानि प्रसरति समन्तादिव तमः ।
त्वराप्रस्तावोऽयं न खलु परिहासस्य विषय-
स्तदक्ष्णोरानन्दं वितर मयि मा भूरकरुणा ॥ ४६ ॥

(सर्वतो दृष्ट्वा सनिर्वेदम् ।) कुतोऽत्र मालती । (बकुलमालां प्रति ।) अये प्रियाप्रणयिनि, परमोपकारिण्यसि ।

निष्प्रत्यूहाः प्रियसखि यदा दुःसहाः संबभूवु-
र्मोहोद्दामव्यसनगुरवो मन्मथोन्मादवेगाः ।
तस्मिन्काले कुवलयदृशस्त्वत्समाश्लेषणं वा
प्राणत्राणं प्रगुणमभवन्मत्परिष्वङ्गकल्पः ॥ ४७ ॥

(सकरुणं निःश्वस्य ।)

आनन्दनानि मदनज्वरदीपनानि
गाढानुरागरसवन्ति तदा तदा च ।
स्नेहाकराणि मम मुग्धदृशश्च कण्ठे
कष्टं स्मरामि तव तानि गतागतानि ॥ ४८ ॥

(हृदये निधाय मूर्च्छति ।)

**मकरन्दः**—(उपसृत्य ।) सखे, समाश्वसिहि ।

**माधवः**—(समाश्वस्य ।) मकरन्द, किं न पश्यसि कुतोऽपि सहसैव मालतीस्नेहस्वहस्तस्य लाभः । तत्कथं मन्यसे किमेतदिति ।

---

तथा हि । **प्रयान्तीति** । प्राणा निःसरन्तीव । हृदयं स्फुटतीव । अङ्गानि ज्वलन्तीव । तमो मोहः प्रसरतीव । तन्मम जीवितरक्षणाय त्वरया प्रस्तावोऽयम् । न पुनः स्वशरीरप्रच्छादनरूपस्य परिहासस्य विषयः । तवात्ममूर्तिप्रकटनेन मे नयनयोरानन्दं देहि । निर्माया भवेत्यर्थः ॥ ४६ ॥ अथ मालतीमपश्यन्केसरस्रजमुन्मादाच्चेतनामिव मन्यमानः प्राह—**निष्प्रत्यूहा इति** । यथा तस्या मन्मथोन्मादवेगाः संबभूवुः समुद्भूतास्तस्मिन्काले प्राणत्राणमेव यथा स्यादेवं मत्परिष्वङ्गकल्प आश्लेष इव समभवत् । कीदृग्भूता मन्मथोन्मादवेगा इत्यपेक्षायां निष्प्रत्यूहा निर्विघ्नाः । अप्रतिहता इत्यर्थः । तथा देहव्यथनेन गुरवः । तदयमाशयः । यत्तदा तत्प्राणहेतुस्त्वस्यास्त्वमासीस्तदिदानीं त्वयापि त्यक्ता न जीवतीति ॥ ४७ ॥ **आनन्दनानीति** । हे बकुलमाले, मम कण्ठे तव गतागतानि कष्टं यथा स्यादेवं स्मरामि । गतागतविशेषणान्याह—आनन्दनानि कामज्वरोत्तेजनानि । तथा गाढानुरागो यो रस आसक्तिस्तद्वदन्ति । तथा स्नेहनिबिडानि ॥ ४८ ॥ स्वहस्तलाभो मालत्यसाधारणाभिज्ञानलाभः । तत्कथं मन्यस इति पदस्याशयः । तत्किल जीवन्त्यां

**मकरन्दः**—इयमार्या योगीश्वर्यस्य मालत्यभिज्ञानस्योपनेत्री ।

**माधवः**—(सकरुणं कृताञ्जलिः ।) आर्ये, प्रसीद । कथय, जीवति मे प्रिया सा ।

**सौदामिनी**—वत्स, समाश्वसिहि । जीवति सा कल्याणी ।

**माधवमकरन्दौ**—(समुच्छ्वस्य ।) आर्ये, यद्येवं कथय क एष वृत्तान्त इति ।

**सौदामिनी**—अस्ति पुरा करालायतनेऽघोरघण्टः कृपाणपाणिर्व्यापादितः ।

**माधवः**—(सावेगम् ।) आर्ये, विरम । ज्ञातो वृत्तान्तः ।

**मकरन्दः**—सखे, क इव ।

**माधवः**—किमन्यत् । सकामा कपालकुण्डला ।

**मकरन्दः**—आर्ये, अप्येवम् ।

**सौदामिनी**—एवं यथा निवेदितं वत्सेन ।

**मकरन्दः**—भोः, कष्टम् ।

कुमुदाकरेण शरदिन्दुचन्द्रिका
यदि रामणीयकगुणाय संगता ।

---

तस्यां तत्कथमस्यास्तत्कण्ठाद्विश्लेषः संभाव्यते ॥ **मकरन्दः** । अथ मकरन्दः कथं मन्यस इति माधवाधिगमतात्पर्यमाह—**यदुपनेत्रीति** । **सौदामिनी** । जीवति न मृता । कापि प्राप्तेत्याशयः । **माधवमकरन्दौ** । अथैष वृत्तान्तः । कापि वर्तते । तदीया चेदं स्रगधिगतेत्येवंरूपः ॥ **माधवः** । अथ पुरा कापालिकोऽघोरघण्टो माधवेन व्यापादित इत्युदन्तदर्शनात्सौदामिनीवाक्यं संपूर्तिमनपेक्ष्य तदवश्यमनुभवसि कपालकुण्डलाकोपस्य फलमिति विघटितस्मृतकपालकुण्डलाप्रतिज्ञो माधवो वदति—आर्ये, विरमेति । अलं प्रयासेन । ज्ञातो मालतीवृत्तान्तः ॥ **मकरन्दः** । अथ मकरन्दोऽश्रुतकपालकुण्डलाप्रतिज्ञः पृच्छति—**क इवेति** ॥ **मकरन्दः** । सकामा कपालकुण्डलेति वचसो मालतीविनाशप्रतिपादनपरत्वं निश्चित्य जीवति मालतीति दत्ताश्वासां सौदामिनीं पृच्छति—**आर्ये, अप्येवमिति** । **सौदामिनी** । सौदामिनी तु सकामा मालतीहरणेन, न तु व्यापादनेनेत्यभिप्रायेणाह—**एवं यथा निवेदितं वत्सेनेति** ॥ **मकरन्दः** । अथ मकरन्दो यथानिवेदितं वत्सेनेत्यस्य वचसो मालती नास्तीति संमतिपरत्वमवधार्य भोः, कष्टमित्याह। **कुमुदेति**। यदि चन्द्रिका रामणीयकगुणार्थं कुमुदसमूहेन सह दैवात्संगता मिलिता, तदा तत्सु-

सुकृतं तदस्तु कतमस्त्वयं विधि-
र्यदकालमेघविततिर्व्ययूयुजत् ॥ ४९ ॥

**माधवः**—हा प्रिये मालति, कष्टमतिबीभत्समापन्नासि ।
कथमपि तदाभवस्त्वं कमलमुखि कपालकुण्डलाग्रस्ता ।
उत्पातधूमरेखाक्रान्तेव कला शशधरस्य ॥ ५० ॥

भगवति कपालकुण्डले,
निर्माणमेव हि तदा तव लालनीयं
मा पूतनात्वमुपगाः शिवतातिरेव ।
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न मुसलैर्बत कुट्टनानि ॥ ५१ ॥

**सौदामिनी**—वत्स, अलमावेगेन ।
अकरिष्यदसौ पापमतिदुष्करुणैव सा ।
नाभविष्यमहं तत्र यदि तत्परिपन्थिनी ॥ ५२ ॥

**उभौ**—(प्रणम्य ।) अतिप्रसन्नमार्यापादैः । तत्कथय का पुनस्त्वमस्माकमेवंविधो बन्धुः ।

---

कृतं भद्रमेव चन्द्रिकया कृतमित्यर्थः । अयं पुनः कतमो विधिरकालजलदविततिविस्तारः कुमुदाकरेण व्ययूयुजद्वियुक्तं चकार । अत्र चन्द्रिका मालती, कुमुदाकरो माधवः, अकालमेघविततिः कपालकुण्डलेत्याशयः ॥४९॥ अथ माधवो मालतीव्यापादनावस्थां चिन्तयन्नाह—अतिबीभत्समसदृशहिंसनेनातिगर्हितम् । **कथमपीति** । अपिशब्द इवार्थे । कपालकुण्डलया ग्रासीकृता त्वं कीदृश्यसीति भावः । यदि कदाचिदप्युत्पातधूमरेखया चन्द्रकलैका ग्रस्यते तदोपमा तव सा स्यादित्यर्थः ॥५०॥ **भगवतीति** । भगवच्छब्दो ज्ञानातिशयवति । तेन प्रकृष्टज्ञानवतीति । **निर्माणमिति** । मालतीशरीरस्य महता प्रयत्नेन लालनीयमाधुर्यत्वमतिक्रूरस्य राक्षसादेर्लालनीयमाधुर्यस्वभावम् । त्वं पूतनात्वं राक्षसीत्वं मोपगाः । अयमर्थः । अत्र रमणीयत्वं लालने हेतुर्दृष्टान्तमाह—नैसर्गिकीति । सुरभिणः कुसुमस्य स्वाभाविकी स्थितिः प्रसिद्धा शिरस्येव । ननु बत कष्टं मुसलैर्न तु कुट्टनानि । अत्र तु कपालकुण्डलायाः प्रकृष्टज्ञानत्वेन संबन्धादयमाशयः । यत्किल त्वं तादृक्प्रकृष्टज्ञानतया विचारयसि न तावन्मालती तव साक्षादपकारिणी । न च ते गुरुर्विद्यते, यदर्थं सा व्यापादिता । निर्वापणीयवैरा स्यात् मालती ते । तदर्थतामधिगम्यायमतिविकल्पो वर्तते । तदाश्वासयेत्याशयः ॥ ५१ ॥ **अकरिष्यदिति** । असौ कपालकुण्डला मालतीमरणरूपं कर्म पापमकरिष्यदित्यतिनिष्करुणैव सा । तत्र स्थाने

**सौदामिनी**—ज्ञास्यथ खल्वेतत् । (उत्थाय ।) इयमिदानीमहं

गुरुचर्यातपस्तन्त्रमन्त्रयोगाभियोगजाम् ।
इमामाकर्षिणीं सिद्धिमातनोमि शिवाय वः ॥ ५३ ॥

(समाधवा निष्क्रान्ता ।)

**मकरन्दः**—आश्चर्यम् ।

व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः ।

(विलोक्य । सभयम् ।)

कथमिव न वयस्यस्तत्किमेतत्किमन्यत्

(विचिन्त्य ।)

प्रभवति हि महिम्ना स्वेन योगीश्वरीयम् ॥ ५४ ॥

(सवितर्कम् ।) किमयमनर्थ इति संप्रति मूढोऽस्मि । अपि च ।

अस्तोकविस्मयमविस्मृतपूर्ववृत्त-
मुद्भूतनूतनभयज्वरजर्जरं नः ।

---

यदि तत्परिपन्थिनी विरोधिनी नाहमभविष्यम् । एतेन हतवत्येव परं न तु व्यापादितवतीत्याश्वासयति ॥ ५२ ॥ **सौदामिनी** । ज्ञास्यथ फलेनैव याहं भवतोरित्याशयः । **गुर्विति** । गुरुचर्या विशिष्टमनुष्ठानम्, तपश्चान्द्रायणादि, तन्त्रं मण्डलवर्तनादि, मन्त्रस्तारप्रभृतिदेवीनां तन्त्रस्य वागमस्य वा मन्त्रः, योगः समाधिः, एष्वभियोगादभ्यासाज्जातामिमामाकर्षिणीं सिद्धिं युष्माकं कल्याणाय विस्तारयामि ॥५३॥ मकरन्देनानुपलक्षिता समाधवा ॥ **व्यतिकर इति** । व्यतिकरो विवर्तः, मिश्रीभावो वा । भीमो भयंकरः । तमोमयो विद्युन्मय इवोपहतचक्षुर्वृत्तिर्निरस्ततद्विषयनिरूपणशक्तिः । क्षणमात्रमुत्पाद्यास्तमितः । विद्याप्रभावादेवं महान्धतमसं महान्प्रकाशश्चासीदित्यर्थः । प्रशान्ते व्यतिकरे माधवमपश्यन्कथमिह न वयस्यः । कपालकुण्डलाप्रेरिता माधवं श्रीपर्वतं नीतवतीति सभयत्वे बीजम् । किमन्यदिति योगीश्वरीत्वेन योगसिद्धरूपेण माहात्म्येन प्रभवति । माधवमपहर्तुं कृतवतीत्येवमाशयः ॥ ५४ ॥ किमयं माधवापहरणरूपो व्यापारो मालतीसमागमरूपत्वेनानुरूपः किमप्यसदृशकर्मप्रतिपादकत्वेनानुक्तपूर्व इत्यर्थः । **अस्तोकेति** । आनन्दशोकाभ्यां शबलत्वमसंभिन्नत्वं च गच्छति । अस्तीवाश्चर्यं तावद्व्यतिकरदर्शने तथा तादृगाश्चर्यप्रभावादविस्मृतमालतीव्यापादादिरूपानुभूतवृत्तम्, तथोत्पन्नप्रत्ययप्रमाधवानिष्टशङ्काजनितभयसंतापज्वरम्, तथैकस्मिन्नेव क्षणे पूर्वं सौदामिन्या वाक्यदाने-

एकक्षणत्रुटितसंघटितप्रमोह-
मानन्दशोकशबलं समुपैति चेतः ॥ ५५ ॥

तदत्र कान्तारावसाने सहास्मद्वर्गेण प्रविष्टां भगवतीमनुसृत्य वृत्तान्तमेनं कथयामि ।

(इति निष्क्रान्ताः सर्वे ।)

**इति महाकविश्रीभवभूतिविरचिते मालतीमाधवे नवमोऽङ्कः ।**

---

न त्रुटितो मालतीविपज्जः पश्चान्माधवादर्शनसंघटितो मोहो यत्र मनसि तत्तादृक् ॥५५॥ कामन्दक्येवातीन्द्रियार्थदर्शिनीदृगपूर्वाश्चर्यविचारक्षमेति तस्यै निवेदयामि॥

शबरस्वामिप्रीत्या प्रकरणरत्नाकरेऽत्र भवभूतेः ।
सारोद्धारे मन्दरमकृत कृती व्याकृतिं नान्यः ॥

**इति श्रीनान्यदेवस्य कृतौ विबुधरत्नावल्यां मालतीमाधव-टीकायां नवमाङ्कविवरणम् ॥**

# दशमोऽङ्कः ।

(ततः प्रविशति कामन्दकी मदयन्तिका लवङ्गिका च ।)

**कामन्दकी**—(सकरुणं सास्रम् ।) हा वत्से मालति, मदङ्कालंकारिणि, क्वासि । देहि मे प्रतिवचनम् ।

आ जन्मनः प्रतिमुहूर्तविशेषरम्या-
ण्याचेष्टितानि तव संप्रति तानि तानि ।
चाटूनि चारुमधुराणि च संस्मृतानि
देहं दहन्ति हृदयं च विदारयन्ति ॥ १ ॥

अपि च । पुत्रि,

अनियतरुदितस्मितं विराज-
त्कतिपयकोमलदन्तकुड्मलाग्रम् ।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमुग्धजल्पितं ते ॥ २ ॥

**इतरे**—(सास्रम् ।) हा पिअसहि, सुप्पसण्णमुहचन्दसुन्दरि, कहिं गदासि । को दे सरीरस्स दे्व्वदुव्विलासपरिणामो एक्काकिणीए उवणदो । हा महाभाअ माहव, उदिअत्थमिअमहूसवो दे जीअलोओ संउत्तो ।

---

१. हा प्रियसखि, सुप्रसन्नमुखचन्द्रसुन्दरि, क्व गतासि । कस्ते शरीरस्य दैवदुर्विलासपरिणाम एकाकिन्या उपनतः । हा महाभाग माधव, उदितास्तमितमहोत्सवस्ते जीवलोकः संवृत्तः ।

---

अथ मालतीहरणानन्तरं माधवमकरन्दयोरवस्थानुकारार्थं तदनुगुणव्यापारः कथितः । कामन्दक्यादीनामाप्तजनानां कृत्यविशेषप्रतिपादनार्थं निर्वर्णसंधिरूपोऽङ्कः प्रारभ्यते—**ततः प्रविशतीति** । सास्रमिति करुणारसस्यैव लिङ्गम् । **आ जन्मन इति** । वत्से, जन्मदशात आरभ्य जातानि तव चेष्टितानि स्वभावाच्छुभान्यङ्गव्यापारादीनि प्रतिमुहूर्तं विशेषेण रम्याणि चाटूनि प्रीत्युत्पादकानि । चारूणि नेत्रसुखादिजनकानि मधुराणि तद्द्वारा मनोनन्दकानि संस्मृतानि देहं दहन्ति हृदयं च विदारयन्ति । अनेन शरीरमनःपीडोक्ता ॥ १ ॥ **अनियतेति** । तव शिशोर्बालायास्तद्वदनपद्मं स्मरामि । तद्विशेषणानि—अनियतादीनि । अनियतेऽव्यवस्थे रुदितस्मिते विषादहर्षलिङ्गे यत्र तादृक् । तथा विराजत्कतिपयमनोहरदशनमुकुलाङ्कुरम् । तथा संपूर्णाकाङ्क्षायोग्यतासत्तिमदर्थप्रतिपादकमनोहरजल्पितम् ॥२॥ **इतरे** । लवङ्गिकामदयन्तिके सास्रमाकाशभाषितत्वेन वदत इत्यर्थः ।

**कामन्दकी**—(सविशेषखेदम् ।) हा वत्सौ,

अभिनवरागरसोऽयं भवतोः कृतकौतुकः परिष्वङ्गः ।
लवलीलवङ्गयोरिव नियतिमहावात्यया भिहतः ॥ ३ ॥

**लवङ्गिका**—(सोद्वेगम् ।) [1]हदास, वज्जमअहिअअ, सव्वहा णिसंसेसि । (इति हृदयमाहत्य पतति ।)

**मदयन्तिका**—[2]सहि लवङ्गिए, णं भणामि खणमेत्तं वि दाव समस्सस ।

**लवङ्गिका**—[3]मदअन्तिए, किं करेमि । दिढवज्जलेवपडिवद्धणिचलं विअ जीविदं मं ण परिच्चअदि ।

**कामन्दकी**—वत्से मालति, जन्मनः प्रभृति वल्लभतरा ते लवङ्गिका । तत्किमुज्जिहानजीवितां नानुकम्पसे । इयं हि

उज्ज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते ।
मलीमसमुखी वर्तिः प्रदीपशिखया यथा ॥ ४ ॥

---

१. हताश, वज्रमयहृदय, सर्वथा नृशंसमसि ।

२. सखि लवङ्गिके, ननु भणामि क्षणमात्रमपि तावत्समाश्वसिहि ।

३. मदयन्तिके, किं करोमि दृढवज्रलेपप्रतिबद्धनिश्चलमिव जीवितं मां न परित्यजति ।

---

हा प्रियसखि, सुप्रसन्नमुखचन्द्रसुन्दरि, क्व गतासि । कस्ते शरीरस्य दैवदुर्विलासपरिणाम एकाकिन्या उपनतः । हा महाभाग माधव, उदितास्तमितमहोत्सवो जीवलोकः संवृत्तः । **कामन्दकी** । वत्सा च वत्सश्च वत्सौ । मालतीमाधवावित्यर्थः । **अभिनवेति** । भवतोराश्लेषो नियतिरूपया दैवरूपया वात्यया पवनमण्डलेन निरस्तः। कीदृशः परिष्वङ्गः । नूतनो रागो रसो यत्र । 'रागोद्वेगः समाप्तिः' इति कामसूत्रदर्शनात् । राग एव रसः । रस्यत इति व्युत्पत्त्या रसः शृङ्गार इत्यन्ये । कृतकौतुकः कृतमङ्गलः । उपमानमाह—यथा लवलीलवङ्गयोरुद्याने विदग्धनायिकानायकाभ्यामुत्पाद्यत्वेन कल्पितविवाहाभाससमये कृतकौतुकयोः परिष्वङ्गो वात्ययाभिहत इत्यर्थः ॥ ३ ॥ **लवङ्गिका** । हताश, वज्रमयहृदय, सर्वथा नृशंसमसि ॥ **मदयन्तिका** । सखि लवङ्गिके, ननु भणासि क्षणमात्रमपि तावत्समाश्वसिहि ॥ **लवङ्गिका** । मदयन्तिके, किं करोमि । दृढवज्रलेपप्रतिबद्धनिश्चलमिव जीवितं मां न परित्यजति । **कामन्दकी** । उज्जिहानजीविता निःसरत्प्राणा । **उज्ज्वलेति** । इयं लवङ्गिका त्वयि स्निग्धा स्नेहवती त्वद्वियोगदुःखादेव म्लानमुखी त्वयोज्ज्वलदर्शनया परित्यक्ता न शोभते । यथोज्ज्वलद्योतया दीपशिखया त्यक्ता

कथं त्वं कल्याणि, कामन्दकीं त्यजसि । नन्वकरुणे, मदीयचीवराञ्चलोष्मणैव ते प्रगुणितान्यङ्गानि ।

स्तन्यत्यागात्प्रभृति सुमुखी दन्तपाञ्चालिकेव
क्रीडायोगं तदनु विनयं प्रापिता वर्धिता च ।
लोकश्रेष्ठे गुणवति वरे स्थापिता त्वं मयैव
स्नेहो मातुर्मयि समधिकस्तेन युक्तस्तवापि ॥ ५ ॥

(सवैक्लव्यम् ।) हा चन्द्रमुखि, संप्रति निराशास्मि संवृत्ता ।

अकारणस्मेरमनोहराननः
शिखाललाटार्पितगौरसर्षपः ।
तवाङ्कशायी परिवृत्तभाग्यया
मया न दृष्टस्तनयः स्तनंधयः ॥ ६ ॥

**लवङ्गिका**—[1]भअवदि, पसीद । णिस्सहम्मि जीविदुव्वहणे । साहं इमादो गिरिप्पपादादो अत्ताणं अवधुणिअ णिव्वुत्ता भविस्सं । तहा मे भअवदी आसिसं करेदु, जेण जन्मन्तरे वि दाव पिअसहिं पेक्खिस्सं ।

---

१. भगवति, प्रसीद । निःसहास्मि जीवितोद्वहने । साहमस्माद्गिरिप्रपातादात्मानमवधूय निर्वृत्ता भविष्यामि । तथा मे भगवत्याशिषः करोतु, येन जन्मान्तरेऽपि तावत्प्रियसखीं प्रेक्षिष्ये ।

---

सूत्रमालावर्तिः स्निग्धा तैलपूर्णापि तथा शिखासंयोगदग्धत्वान्मलीमसमुखी न राजत इत्यर्थः । 'आलोकौ दर्शनोद्द्योतौ' इत्यमरः ॥ ४ ॥ मदुत्सङ्गवासेनैव चिरप्रवृद्धायास्तवाङ्गानि मदीयवस्त्राञ्चलोष्मणा वृद्धिं गतानीत्यर्थः । **स्तन्येति** । मातुः स्तन्यपानत्यागादारभ्य मयैव त्वं बालक्रीडनकैः क्रीडायोगं तदनन्तरं कलाशास्त्रशिक्षितं प्रापिता तथा वृद्धिं नीता । लोकश्रेष्ठकुलीनत्वादिगुणवति प्रशस्तवरे, त्वं मयैव स्थापिता न पितृभ्यामित्याशयः । तेन हेतुसमूहेन मातुः सकाशात्समधिकः स्नेहस्तवापि युक्तो भवेत् । यथा गजदन्तमयी पाञ्चालिका पुत्रिकात्वेनाभिमन्यमाना गुणवति प्रशस्तगुणे व्यवस्थापिता बालक्रीडायोगादिकं नीयते तदनन्तरं वरे स्थाप्यत इत्यर्थः । विनयः शास्त्रनिश्चयः ॥ ५ ॥ **अकारणेति** । परिभोगयोग्यभाग्यहीनया मया लवङ्गिकाद्यङ्कागमनायोग्यस्तनयो नावलोकितः । तनयविशेषणान्याह—अनुपलक्षितकारणं यत्स्मितं तेन मनोहराननः । अथ रक्षार्थं शिखाललाटयोर्दत्तं श्वेतसर्षपं यस्य । अकारणपित्रादिविषयस्नेहेन मनोहरानन इति पाठान्तरम् ॥६॥ **लवङ्गिका** । भगवति, प्रसीद, निःसहास्मि जीवितोद्वहने । साहमस्माद्गिरिप्रपातादात्मानमवधूय निर्वृत्ता भविष्यामि । तथा मे भगवत्याशिषः

**कामन्दकी**—ननु लवङ्गिके, कामन्दक्यपि नातःपरं वत्सावियोगेन जीविष्यति । समश्चायमुत्कण्ठावेग आवयोः । किं च,

संगमः कर्मणां भेदाद्यदि न स्यान्न नाम सः ।
प्राणानां तु परित्यागे संतापोपशमः फलम् ॥ ७ ॥

**लवङ्गिका**—जहा[1] तुह्मे आणवेत्थ । (इत्युत्तिष्ठति ।)

**कामन्दकी**—(सदयं वीक्ष्य ।) वत्से, मदयन्तिके ।

**मदयन्तिका**—किं[2] आणवेध । अग्गेसरीहोहि त्ति । अवहिदह्मि ।

**लवङ्गिका**—सहि[3], पसीद । विरम एत्तो अत्तणो वावादणादो । मा अ एणं जणं विसुमरेसि ।

**मदयन्तिका**—(सकोपमिव ।) अपेहि[4] । णह्मि दे वसंवदा ।

**कामन्दकी**—हन्त, निश्चितं वराक्या ।

---

१. यथा यूयमाज्ञापयथ ।

२. किमाज्ञापयथ, अग्रेसरीभवेति । अवहितास्मि ।

३. सखि, प्रसीद । विरमैतस्मादात्मनो व्यापादनात् । मा चैनं जनं विस्मरिष्यसि ।

४. अपेहि । नास्मि ते वशंवदा ।

---

करोतु, येन जन्मान्तरेऽपि तावत्प्रियसखीं प्रेक्षिष्ये । **संगम इति** । मरणचिन्तायाः संगमो भविष्यतीत्याशङ्क्य यद्यपि शुभाशुभकर्मणां भिन्नलोकप्राप्तिहेतूनां भेदात्कदाचित्संगमः स्यान्न वा स्यान्नाम । तत्फलं मरणफलं भवतु । मालतीमरणरूपदुःखोपशमरूपं भविष्यतीत्यर्थः ॥ ७ ॥ **लवङ्गिका** । यथा यूयमाज्ञापयथ । उत्तिष्ठति पतनायेति शेषः ॥ **कामन्दकी** । सदयं लवङ्गिकां वीक्ष्य । लवङ्गिकां धारयेति वक्तुमक्षमा मदयन्तिकामाकारयति । मदयन्तिका तु मालतीवियोगदुःखमसहमाना लवङ्गिकाविनाशमपि द्रष्टुमसमर्थाह—**मदयन्तिका** । किमाज्ञापयथेति । लवङ्गिकायास्त्वमग्रेसरीभवेति । अवहितास्मि सावधानास्मि तथा व्यापारे ॥ **लवङ्गिका** । सखि, प्रसीद । विरमैतस्मादात्मनो व्यापादनात् । आत्मानमुद्दिश्य—मा चैनं जनं विस्मरिष्यसि ॥ **मदयन्तिका** । शिखरात्पतितुं कृतनिश्चया लवङ्गिकां सकोपमिवाह—अपेहि । नास्मि ते वशंवदा । अवश्यं मरिष्यामीत्याशयः । वशंवदा या भवत्याः सैव स्मरिष्यतीत्याशयः ॥ **कामन्दकी** । निश्चितं शरीरपातनकर्मानया । वराकीत्यनुकम्पायाम् । मदयन्तिका मकरन्दपराक्रमक्रीतमात्मनो जीवितं तदायत्तं त्यक्तुं मनसा मकरन्दं जीवितेश्वरं प्रणमति ॥

**मदयन्तिका**—(स्वगतम् ।) [1]णाह मअरन्द, णमो दे ।

**लवङ्गिका**—[2]भअवदि, अअं एव्व महुमदीसोत्तसंदाणिदपवित्तमेहलो महीहरविटङ्को ।

**कामन्दकी**—कृतमिदानीं प्रस्तुतान्तरायेण ।

( सर्वाः पतितुमिच्छन्ति । )

( नेपथ्ये । )

आश्चर्यम् ,

व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः ।

**कामन्दकी**—(विलोक्य साद्भुतहर्षम् ।)

कथमिह मम वत्सस्तत्किमेतत्

**मकरन्दः**—(प्रविश्य ।)

किमन्य-
त्प्रभवति हि महिम्ना स्वेन योगीश्वरीयम् ॥ ८ ॥

---

१. नाथ मकरन्द, नमस्ते ।

२. भगवति, अयमेव मधुमतीस्रोतःसंदानितपवित्रमेखलो महीधरविटङ्कः ।

---

**मदयन्तिका** । नाथ मकरन्द, नमस्त इति ॥ **लवङ्गिका** । भगवति, अयमेव मधुमतीस्रोतसः संदानितत्वेन पवित्रमेखलो महीधरविटङ्कः । 'कपोतपालिकायां तु विटङ्कं पुंनपुंसकम्' इत्यमरः । मधुमती नदी ॥ **कामन्दकी** । प्रस्तुतमत्र मरणम् । तदन्तरायः कालक्षेपरूपः ॥ **व्यतिकर** इति श्लोको व्याख्यातपूर्वः ॥ **कामन्दकी** । साश्चर्यं सहर्षं च । वदतीति शेषः । अयमीदृशो व्यतिकरः संप्रदायोपदेशपरस्परपरिपक्वसमाधिप्रभवप्रकृष्टाभ्युदयसूचकः कथमन्यत्र संभाव्यते मदन्तेवासिव्यतिरेकेण । तद्व्यतिकरदर्शनमद्भुतहर्षयोर्निमित्तमिति भावः । तत्कथं मम वत्सो मकरन्दो दृश्यत इति शेषः । तद्दर्शितफलं तावद्व्यतिकररूपेण शुभनिमित्तेन व्यतिकरनिदानमप्यस्मादेव ज्ञातव्यमित्याशयः । तत्किमेतदिति कामन्दकीप्रश्नवाक्यैकदेशं प्रति कथाजिज्ञासापरमधिगम्य मकरन्दः प्रविश्य वदति—**किमन्यदिति** । इयं कापि योगीश्वरी प्रकृष्टयोगर्द्धिः । तत्प्रभावादयं व्यतिकर इत्यभिप्रायः । कामन्दकीप्रभृतिभिश्च प्रकृष्टहर्षपूर्यमाणमकरन्दनयनचेष्टाभिः कुशलिनी मालती समाधवेति निर्णीतमिति प्रतीयमानोऽर्थः । अत एव

( नेपथ्ये । )

कथमतिदारुणो जनावमर्दः संप्रवर्तते ।

मालत्यपायमधिगम्य विरक्तचेताः
सांसारिकेषु विषयेषु च जीविते च ।
निश्चित्य वह्निपतनाय सुवर्णबिन्दु-
मभ्येति भूरिवसुरित्यधुना हताः स्मः ॥ ९ ॥

**मदयन्तिकालवङ्गिके**—झत्ति मालदीमाहवाणं दंसणब्भुदओ झत्ति अच्चाहिदं अ ।

**कामन्दकीमकरन्दौ**—दिष्ट्या । कष्टं भोः आश्चर्यम् ।

किमयमसिपत्रचन्दनरसच्छटासारयुगपदवपातः ।
अनलस्फुलिङ्गकलितः किमयमनभ्रः सुधावर्षः ॥ १० ॥
संजीवनौषधिविषव्यतिकरमालोकतिमिरसंभेदम् ।
अद्य विधिरशनिशशधरमयूखसंवलनमनुकुरुते ॥ ११ ॥

( नेपथ्ये । )

हा[2] ताद, विरम । ऊसुअह्मि दे वदनकमलदंसणस्स । पसीद ।

---

१. झटिति मालतीमाधवयोर्दर्शनाभ्युदयो झटित्यत्याहितं च ।

२. हा तात, विरम । उत्सुकास्मि ते वदनकमलदर्शनस्य । प्रसीद । सं-

---

पतनाद्विरताः सर्वाः ॥८॥ **नेपथ्य इति** । दारुणदुःखजनकत्वात्तत्पतनस्य द्रष्टॄणां संमर्दः । **मालतीति** । पुनरपि तथैवापहृतेति सामान्यतोऽधिगम्य ज्ञात्वा सांसारिकेषु संसारभूतेषु विषयेषु जीवितेषु चोपरतमनाः पुनश्च तमेवापायं निश्चित्य वह्निप्रवेशनाय सुवर्णबिन्दुसंज्ञकं शिवायतनमभ्येतीति हताः स्म इति परिजनवचः ॥९॥ **मदयन्तिकलावङ्गिके** । झटिति मालतीमाधवयोर्दर्शनाभ्युदयो जातप्राय इव जातः । झटित्यत्याहितं महाभीतिश्च भूरिवसुविनाशशङ्कया ॥ **कामन्दकीमकरन्दौ** । मालतीमाधवयोरभ्युदयेन सहर्षौ, भूरिवसुदहनप्रवेशाच्च सखेदौ । **किमयमिति** । किमयं भूरिवसुदहनप्रवेशश्रवणमालतीमाधवप्रत्यासन्नदर्शनव्यतिकरोऽसिपत्रचन्दनरसच्छटासारत्वमुन्नेयम् । एवमुत्तरार्धेऽपि युज्यते । किमयं व्यतिकरो मेघं विना देहदहनकरणामृतवर्षः ॥ १० ॥ **संजीवनेति** । अद्य विधिर्भाग्यमस्माकं कर्तृ द्वयोरत्यन्तविपरीतक्रिययोर्दुःखसुखनिमित्तयोर्वस्तुनोरुद्वेगानन्दजनकत्वेन मेलनमनुकुरुते । तद्यथा संजीवनौषधिविषयोर्व्यतिकरो मिश्रणं तथा प्रकाशतिमिरयोः संभेदः संगमः । तथा वज्रचन्द्रकरयोः संमेलनमिति ॥ ११ ॥ **नेपथ्ये** । हा तात, विरम । उत्सुकास्मि ते वदनकमलदर्शनस्य । प्रसीद । संभा-

संभावेहि मं । कहं मम कारणादो समत्थलोआलोअन्तरालविक्खम्भ-णिम्मलेक्कमङ्गलप्पदीपभूदं अत्ताणं परिच्चअसि । मए उण अलज्जाए णिरणुक्कोसाए तुझे परिच्चत्ता ।

**कामन्दकी**—हा वत्से, मालति ।

जन्मान्तरादिव पुनः कथमपि लब्धासि यावदयमपरः ।
उपराग इव शशिकलां कवलयितुमुपस्थितोऽनर्थः ॥ १२ ॥

**इतरे**—हां पिअसहि ।

( ततः प्रविशति मुग्धां मालतीं धारयन्माधवः । )

**माधवः**—कष्टं भोः ।

एषा प्रवासं कथमप्यतीत्य
यातां पुनः संशयमन्यथैव ।
को नाम पाकाभिमुखस्य जन्तो-
र्द्वाराणि दैवस्य पिधातुमीष्टे ॥ १३ ॥

**मकरन्दः**—सखे, अथ क्व सा योगिनी ।

**माधवः**—

श्रीपर्वतादिहाहं सत्वरमपतं तयैव सह सद्यः ।
करुणवनेचरवचनादन्तरितां तां न पश्यामि ॥ १४ ॥

---

भावय माम् । कथं मम कारणात्समस्तलोकालोकान्तरालविष्कम्भनिर्मलैकमङ्गलप्रदीपभूतमात्मानं परित्यजसि । मया पुनरलज्जया निरनुक्रोशया यूयं परित्यक्ताः ।

१. हा प्रियसखि ।

---

वय माम् । कथं मम कारणात्समस्तलोकालोकान्तरालविष्कम्भनिर्मलैकमङ्गलप्रदीपभूतमात्मानं परित्यजसि । मया पुनरलज्जया निरनुक्रोशया यूयं परित्यक्ताः ॥ **कामन्दकी । जन्मेति ।** अपरोऽनर्थो भूरिवसुविनाशहेतुरनलप्रवेशरूपः कपालकुण्डलामिव त्वां कवलयितुमुपस्थितः । कापालिकाभिभवक्लेशैः क्षीणत्वेन शशिकलामात्रसमानामनर्थं उपराग इवेत्यर्थः ॥ १२ ॥ **माधवः । एषेति ।** जन्तोः प्राणिनो दैवस्य भाग्यस्य । पुराकृतस्य कर्मण इति यावत् । पाकाभिमुखस्य संनिहितसुखदुःखादिरूपफलदानप्रवणस्य द्वाराणीव द्वाराणि दुःखाद्युत्पत्तिनिमित्तान्तराणि पुराकृतकर्माव्यतिरिक्तानि परिदृश्यमानानि निराकर्तुमीष्टे । प्रभवतीत्यर्थः ॥ १३ ॥ **मकरन्दः ।** या त्वामादाय निष्क्रान्ता सा क्व गता ॥ **श्रीपर्वतादिति ।** श्रीपर्वतात्तयैव योगिन्या सह सत्वरं यथा स्यादेवमत्रापतमागतोऽस्मि । वनेचरस्य

**कामन्दकीमकरन्दौ**—महाभागे, पुनः परित्रायस्व नः । किमर्थमन्तर्हितासि ।

**मदयन्तिकालवङ्गिके**—[1]सहि मालदि, णं भणामि सहि मालदि त्ति । (सोत्कम्पम् ।) भअवदि, परित्ताहि । चिरणिरुद्धणिस्सासणिच्चलं से हिअअं । हा अमच्च, हा पिअसहि, तुह्मे दुवे वि परप्परावसाणस्स कारणं जादा ।

**कामन्दकी**—हा वत्से मालति ।

**माधवः**—हा प्रिये मालति ।

**मकरन्दः**—हा प्रियसखि ।

( सर्वे मोहमुपगम्य पुनः संज्ञां लभन्ते । )

**कामन्दकी**—तत्किमेष झटिति पात्यमानादिवाम्बुदादम्बुनिवहः परिस्खलन्नस्मान्प्रीणयति ।

**माधवः**—(सोच्छ्वासम् ।) अये, प्रत्यापन्नचेतनेव मालती । तथा ह्यस्याः

भवति विततश्वासोन्नाहप्रणुन्नपयोधरं
हृदयमपि च स्निग्धं चक्षुर्निजप्रकृतौ स्थितम् ।

---

१. सखि मालति, ननु भणामि सखि मालतीति । भगवति परित्रायस्व । चिरनिरुद्धनिःश्वासनिश्चलमस्या हृदयम् । हा अमात्य, हा प्रियसखि, युवां द्वावपि परस्परावसानस्य कारणं जातौ ।

---

वचनं भूरिवसुर्वह्निपतनाय सुवर्णबिन्दुमभ्येतीत्येवंरूपम् । तस्मादनन्तरमन्तर्हितां न पश्यामि ॥१४॥ **कामन्दकीमकरन्दौ** । किमर्थं तिरोहितासि । मालतीविपन्निराकरणद्वारेदानीमपि भूरिवसुविनाशरूपमालतीविपन्निरासेन पुनर्नोऽस्मान्परित्रायस्वेत्यर्थः । **मदयन्तिकालवङ्गिके** । सखि मालति, ननु भणामि सखि मालतीति । विलापोक्तिप्रभेदोऽयम् । भगवति, परित्रायस्व । चिरनिरुद्धनिःश्वासनिश्चलमस्या हृदयम् । हा अमात्य, हा प्रियसखि, युवां द्वावपि परस्परावसानस्य कारणं जातौ । द्वयोरपि विनाशहेतुरित्याशयः ॥ **कामन्दकी** । पात्यमानादिवेति स्वाभाविकवर्षविलक्षणाकाण्डप्रवृत्ताम्भःपतननिमित्तकोक्तिरियम् । प्रीणयति संतर्पयति । जीवयतीत्यर्थः ॥ **माधवः** । प्रत्यापन्नचेतनेव प्रत्यापन्नजीवितेव । तल्लिङ्गान्याह—**भवतीति** । प्रथमं निरुद्धः पश्चाद्विततो विस्तारितो यः श्वासोन्नाहस्तेन प्रणुन्नौ पयोधरौ यत्र हृदये तत्तादृक् । उन्नाह उच्छ्रायः । चक्षुरपि च यन्मोहप्रभावादस्निग्धमासीत्तत्प्रकृतौ तत्स्वभावे स्थितं मुग्धमभूदित्यर्थः । अत्र निजेति

तदनु वदनं मूर्च्छाछेदात्प्रसादि विराजते
परिगतमिव प्रारम्भेऽह्नः श्रिया सरसीरुहम् ॥ १५ ॥

( नेपथ्ये । )

अविगणय्य नृपं सहनन्दनं
चरणयोर्नतमग्निचये पतन् ।
सपदि भूरिवसुर्विनिवर्तितो
मम गिरा गुरुसंमदविस्मयः ॥ १६ ॥

**माधवमकरन्दौ**—भगवति, दिष्ट्या वर्धसे ।

सा योगिनीयमतिरयविघटितजलदाभ्युपैति नौ यस्याः ।
वागमृतजलासारो जलदजलासारमतिशेते ॥ १७ ॥

**कामन्दकी**—प्रियं नः ।

**मालती**—दिट्ठिआ[1] चिरस्स पच्चुज्जीविदह्मि ।

**कामन्दकी**—(सहर्षबाष्पम् ।) एह्येहि पुत्रि ।

**मालती**—हा[2] कहं भअवदी । (इति पादयोर्निपतति ।)

**कामन्दकी**—(उत्थाप्यालिङ्ग्य मूर्ध्न्युपाघ्राय ।)

जीव जीवितसमाय जीवितं
देहि जीवतु सुहृज्जनश्च ते ।

---

१. दिष्ट्या चिरस्य प्रत्युज्जीवितास्मि ।

२. हा कथं भगवती ।

---

पदं गतार्थमेव । तदनन्तरं तस्या वदनं मोहापगमात्प्रसादगुणवत्प्रसन्नं प्रातःकाले श्रिया शोभया परिगतं व्याप्तं कमलमिवेति ॥ १५ ॥ **नेपथ्य इति** । अथ महाभागे, पुनः परित्रायस्वेति कामन्दक्या अतिकरुणरुदितमाकर्ण्य सौदामिनी भूरिवसुमनलप्रवेशान्निवार्य गगनस्था प्राह—**अविगणय्येति** । नन्दनेन सहितं नृपं दहनप्रवेशनिवारणाय पादयोर्नतमनादृत्य भूरिवसुः सपदि मम गिरा ध्रुवं जीवति मालतीत्येवंरूपया निवर्तितो गुरुसंमदविस्मयो यस्य तादृक् । संमदः प्रहर्षः॥१६॥ **माधवमकरन्दौ** । दिष्ट्यानन्देन । **सा योगिनीति** । यया मालती रक्षिता स्ववेगप्रभावाभ्यां विदारितमेघगगनादागच्छति । यस्या वागमृतधारासंपातोऽतिशेते जयति । भूरिवसुमालत्यो रक्षणद्वारा समस्तबन्धुजनप्राणरक्षकेत्युन्नेयम् ॥ १७ ॥ **कामन्दकी** । प्रियं न इति । इयमभ्युपैतीति संभ्रमोक्तिः ॥ **मालती** । दिष्ट्या चिरस्य प्रत्युज्जीवितास्मि ॥ **मालती** । हा कथं भगवती ॥ **कामन्दकी** । **जीवेति** । त्वं जीव । अत एव माधवाय जीवनं देहि । मदयन्तिकादिसखीजनश्च

अङ्कैस्तुहिनसङ्गशीतलैः
पुत्रि मां प्रियसखीं च जीवय ॥ १८ ॥

**माधवः**—वयस्य मकरन्द, संप्रत्युपादेयो माधवस्य जीवलोकः संवृत्तः ।

**मकरन्दः**—(सहर्षम् ।) एवमेवैतत् ।

**इतरे**—पि[1]असहि, मणोरहातिक्कान्तदंसणे, संभावेहि अह्मे परिस्सङ्गेण ।

**मालती**—हा[2] पिअसहिओ । (इत्युभे आलिङ्गति ।)

**कामन्दकी**—वत्सौ, किमेतत् ।

**माधवमकरन्दौ**—भगवति,

कपालकुण्डलाकोपदुर्जातजनितापदः ।
वयमभ्युद्धृताः कृच्छ्रान्निर्बन्धादार्ययानया ॥ १९ ॥

**कामन्दकी**—कथमघोरण्टवधविजृम्भितमेतत् ।

**लवङ्गिकामदयन्तिके**—[3]अहो अच्चरिअं । पुणरुत्तदारुणस्स परिणामरमणिज्जत्तणं विहिणो ।

**सौदामिनी**—(प्रविश्य ।) भगवति, स एष चिरंतनोऽन्तेवासी जनः प्रणमति ।

---

१. प्रियसखि, मनोरथातिक्रान्तदर्शने, संभावयास्मान्परिष्वङ्गेण ।
२. हा प्रियसख्यौ ।
३. अहो आश्चर्यम् । पुनरुक्तदारुणस्य परिणामरमणीयत्वं विधेः ।

---

जीवतु । हिमसङ्गशीतलैस्तवावयवैर्मां प्रियसखीं च जीवयेत्यर्थः । आलिङ्गनदानादिति भावः ॥१८॥ **इतरे** । प्रियसखि, मनोरथातिक्रान्तदर्शने संभावयास्मान्परिष्वङ्गेण॥ **मालती** । हा प्रियसख्यौ ॥ **कामन्दकी** । किमेतदिति माधवमकरन्दौ प्रति प्रश्नः । अथ तयोरिदमुत्तरम्—**भगवति, कपालकुण्डलेति** । दुर्जातं मालत्यपहरणवृत्तान्तरूपं तज्जनितापदो वयं कृच्छ्रादनपायान्निर्बन्धादतिप्रयत्नादुद्धृताः ॥१९॥ **कामन्दकी** । अघोरघण्टे माधवेन निहते सति यत्तदन्तेवासिन्या माधवं प्रत्यपकाररूपो मालतीहरणद्वारा व्यापारस्तत्किलाघोरघण्टवधविजृम्भितमिति ॥ **लवङ्गिकामदयन्तिके** । अहो आश्चर्यम् । पुनरुक्तदारुणस्य परिणामरमणीयत्वं विधेः । पुनरुक्तमिव पुनरुक्तं पुनःपुनर्मालतीहरणम् । परिणामरमणीयत्वं चान्तेऽक्षतमालतीलाभेन ॥ **सौदामिनी** । अन्तेवासी जन इत्यात्मनः पुंलिङ्गनिर्देशा-

**कामन्दकी**—अये, भद्रम् । सौदामिनी ।

**माधवमकरन्दौ**—कथमियं सा भगवत्याः पक्षपातस्थानमाद्यशिष्या सौदामिनी । यतः सर्वमधुना संगच्छते ।

**कामन्दकी**—

एह्येहि भूरिवसुजीवितदानपुण्य-
संभारधारिणि चिरादसि हन्त दृष्टा ।
दत्तप्रमोदमभिनन्दय मे शरीर-
मालिङ्गय सौहृदनिधे विरम प्रणामात् ॥ २० ॥

अपि च ।

वन्द्या त्वमेव जगतः स्पृहणीयसिद्धि-
रेवंविधैर्विलसितैरतिबोधिसत्त्वैः ।
यस्याः पुरा परिचयप्रतिबद्धबीज-
मुद्भूतभूरिफलशालि विजृम्भितेन ॥ २१ ॥

**मदयन्तिकालवङ्गिके**—ई[1]अं सा अज्जा सौदामिणी ।

---

१. इयं सार्या सौदामिनी ।

---

त्कपालकुण्डलागृहीतमालतीपरित्राणरूपमात्मनः पुरुषार्थसाधकत्वं सूचयति । चिरंतनः प्रथमाप्तदीक्षः सिद्धमन्त्रेणाचार्येण प्रथमप्रकृष्टमन्त्रः प्रकृष्टशिष्यभावादित्याशयः ॥ **माधवमकरन्दौ** । कथंशब्द आश्चर्ये । पक्षपातस्थानं स्मारयति पूर्वशिष्या सौदामिनीति । स्वतन्त्रेषु स्थानेषु सौदामिनीस्मरणाद्यत्सर्वमिदं मालतीविपत्प्रतीकारव्यापाररूपमेतत्सर्वं संगच्छते संगतं भवति । युज्यत इत्यर्थः । **एह्येहीति** । भूरिवसुजीवितदानेन यः पुण्यसंभारस्तद्धारेण । जीवितदानं च मालतीभूरिवसुविपन्निवारणद्वारम् । हन्त हर्षे । तदीदृगत्यन्ताभीष्टद्वयसंपादनेन दत्तप्रमोदमपि मद्वपुरालिङ्गनेनानन्दय । प्रणामाद्विरम । त्वमेव जीवितदायित्वेनानुगुणोत्कर्षेण च प्रणम्या मयेत्याशयः । 'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः' इत्यादिवचनात् ॥ २० ॥ एतदेवोत्तरश्लोकेन व्यक्तीकरोति–**वन्द्येति** । एवंविधैः परोपकारफलैर्विलसितैर्व्यापारैरतिबोधिसत्त्वैरतिक्रान्तबोधिसत्त्वैः । मनोगतागमेषु ब्रह्ममायापीह बोधसद्ग्रन्थेन कथिता(?)जीवितव्ययेनापि परार्थसाधनैकव्यापारस्थैर्विलसितैस्त्वमेव वन्द्या जगतः । तन्मम वन्दनाद्विरमेत्यर्थः । स्पृहणीया सिद्धिर्यस्याः सा तादृशी मन्त्रसिद्धिरस्माकमपि स्पृहणीया । यस्यास्तव विजृम्भितेनेदृशव्यापारेण तद्बीजं मालतीमाधवतरुप्रताननिधानमद्भुतप्रचुरफलशाल्यभूदि-

**मालती**—बाढम् । इमाए क्खु भअवदीसंबन्धपक्खवादिणीए णिब्भच्छिअ कवालकुण्डलं अत्तणो आवसहं उवणिअ आसासिदह्मि । किं अ केसरावलीसाभिण्णाणहत्थाए इह आगत्तूण सव्वे तुह्मे संधारिदा ।

**इतराः**—सुप्पसण्णा णो कणिट्ठा भअवदी ।

**मकरन्दमाधवौ**—अहो नु खलु भोः ।

अपि चिन्तामणिश्चिन्तापरिश्रममपेक्षते ।
इदं त्वचिन्तितं मन्ये कृतमाश्चर्यमार्यया ॥ २२ ॥

**सौदामिनी**—(स्वगतम् ।) हन्त, लज्जयति मामत्यन्तसौजन्यमेतेषाम् । (प्रकाशम् ।) भगवति, एतत्प्रहृष्टनन्दनाभिनन्दितेन राज्ञा पद्मावतीश्वरेण भूरिवसोः प्रत्यक्षमभिलिख्य पत्रमायुष्मतो माधवस्य प्रेषितत् । (लेख्यमर्पयति ।)

**कामन्दकी**—(गृहीत्वा वाचयति ।) 'स्वस्त्यस्तु वः । परमेश्वरः समाज्ञापयति यथा,

श्लाघ्यानां गुणिनां धुरि स्थितवति श्रेष्ठान्ववाये त्वयि
प्रत्यस्तव्यसने महीयसि परं प्रीतोऽस्मि जामातरि ।

---

१. बाढम् । अनया खलु भगवतीसंबन्धपक्षपातिन्या निर्भर्त्स्य कपालकुण्डलामात्मन आवसथमुपनीयाश्वासितास्मि । किं च केसरावलीसाभिज्ञानहस्तयेहागत्य सर्वे यूयं संधारिताः ।

२. सुप्रसन्ना नः कनिष्ठा भगवती ।

---

त्यर्थः । कीदृग्बीजम् । पुरा काले विद्यापरिग्रहसमये प्रीतिबन्धोऽवश्यमावाभ्यामपत्यसंबन्धः कार्य इति प्रतिज्ञारूपो मम समक्षं ससंबन्धोऽवतनतत्तादृग्रतेन निस्ताररूपेण स्यादित्याशयः ॥ २१ ॥ **मालती** । बाढम् । सौदामिनीयमेवेत्यर्थः । अनया खलु भगवतीसंबन्धपक्षपातिन्या निर्भर्त्स्य कपालकुण्डलामात्मन आवसथमुपनीयाश्वासितास्मि । केसरावलीसाभिज्ञानहस्तयेहागत्य सर्वे यूयं संधारिताः । रक्षिता मरणादमी बन्धुजना इत्यर्थः ॥ **इतराः** । सुप्रसन्ना न कनिष्ठा भगवती ॥ **मकरन्दमाधवौ** । अहोशब्द आश्चर्ये । भोः संबुद्धौ । **अपीति** । चिन्तामणिरपि प्रार्थकस्य चिन्तारूपं परिश्रममपेक्षते । इदं तु मालतीप्राणत्राणरूपम् । तत्कथं मयाऽचिन्तितं तथाप्यार्यया कृतं तदन्येन कल्पद्रुमादिनाप्यकृतम् । अत एवाश्चर्यम् ॥ २२ ॥ **सौदामिनी** । एतल्लवङ्गिकादीनां संतोषणमित्याशयः । मदयन्तिकायास्तु भर्तृप्राप्तिसंदेशेन हर्षनिमित्तम् । **श्लाघ्येति** । जामातरीत्युक्तिर्बीजम् । 'प्रभवति निजस्य कन्यकाजनस्य महाराजः' इति भूरिवसुवचनसंप्रत्ययेन मत्यां निजकन्यकाबुद्धिरेव । प्रकृष्टगुणे

तेनेयं मदयन्तिकापि भवतः प्रीत्यै तव प्रेयसे
मित्राय प्रथमानुरागघटिताप्यस्माभिरुत्सृज्यते ॥ २३ ॥

(माधवमुद्दिश्य सहर्षम् ।) वत्स, श्रूयताम् ।

**माधवः**—श्रुतम् । इदानीं सर्वथा कृतार्थोऽस्मि ।

**मालती**—दिट्ठिआ[1] एदं वि दाव अवगदं हिअअस्स सङ्कासल्लं ।

**लवङ्गिका**—संपदं[2] णिरवसेसं पूरिआ माहवसिरिणो मणोरहा ।

**मकरन्दः**—(पुरोवलोक्य ।) कथमवलोकितावुद्धरक्षिते कलहंसश्च दूरतः समागतानस्मान्वीक्ष्य तत्रैव हर्षनिर्भरं नृत्यन्त इत एवागच्छन्ति।

(ततः प्रविशतोऽवलोकितावुद्धरक्षिते कलहंसश्च ।)

**ते**—(विविधं नृत्यं कृत्वा सर्वे उपसृत्य सप्रमाणं कामन्दकीं प्रति ।) जअ[3] भअवदि कज्जणिहाणे । (माधवं प्रति ।) जअ मअरन्दणन्दण माहव पुण्णचन्द, दिट्ठिआ वड्ढसि ।

(सर्वे सस्मितं पश्यन्ति ।)

---

१. दिष्टया एतदपि तावदपगतं हृदयस्य शङ्काशल्यम् ।

२. सांप्रतं निरवशेषं पूरिताः श्रीमाधवस्य मनोरथाः ।

३. जय भगवति कार्यनिधाने । जय मकरन्दनन्दन मधव पूर्णचन्द्र, दिष्टया वर्धसे ।

---

निरस्तविपदि महाकुले जामातरि त्वयि प्रीतिरुचितेत्याशयः । तेन हेतुना पूर्वानुरागेण प्राणानयनरूपेण योजितापि तव प्रीत्यर्थं तव मित्राय मकरन्दायास्माभिर्दीयत इत्यर्थः ॥२३॥ माधवमुद्दिश्य कामन्दकी वदति—**श्रूयतामिति । माधवः ।** निखिलार्थ इति शेषः । नृपतिनन्दनादिना सर्वथा कृतार्थोऽस्मीत्यर्थः ॥ **मालती ।** दिष्ट्या, एतदपि तावदपगतं हृदयस्य शङ्काशल्यम् ॥ **लवङ्गिका ।** सांप्रतं निरवशेषं पूरिताः श्रीमाधवस्य मनोरथाः । प्राकृते पूर्वनिपातस्यानियमतया श्रीशब्दस्योत्तरनिपातलक्षणं भवति ॥ कार्यनिधानशब्दादाप्प्रत्ययेन निधानसंबन्धरूपं सर्वं कार्यजातं त्वयैकया निष्पादितमिति त्वमेव कार्याणां निधिः । जय मकरन्दनन्दन माधव पूर्णचन्द्र । मकरन्दस्य मदयन्तिकालाभादपि माधवस्य मालतीलाभ एवातिशयानन्द इति मकरन्दनन्दनत्वे वाचोयुक्तिः । पापवृद्धिपक्षपर्यन्तत्वेन पूर्णश्चन्द्रः । संप्राप्ताखण्डमनोरथतयास्य पूर्णचन्द्रत्वोक्तिः । दिष्ट्या वर्धसे । सस्मितं पश्यति । तेषां प्रमोदनृत्तमिति शेषः । भगवत्यन्तेवासिन्यवलोकिता नृत्य-

**लवङ्गिका**—तदीअकज्जं[1] वि अ एतस्सिं संपूरिदम् । अदो सव्वप्पआरमहूसवे णच्चइ ।

**कामन्दकी**—एवमेतत् । अस्ति वा कुतश्चिदेवंभूतं महाद्भुतं विचित्ररमणीयोज्ज्वलं प्रकरणम् ।

**सौदामिनी**—इदमत्र रामणीयकं यदमात्यभूरिवसुदेवरातयोश्चिरात्संपूर्णोऽयमितरेतरापत्यसंवन्धरूपो मनोरथः ।

**मालती**—(स्वगतम् ।) तं[2] कहं विअ ।

**मकरन्दमाधवौ**—(सकौतुकम् ।) भगवति, अन्यथा वस्तु प्रवृत्तम्, अन्यथा वचनपर्यायः ।

**लवङ्गिका**—(जनान्तिकम् ।) भअवदि[3], किं पडिवज्जिदव्वं ।

**कामन्दकी**—(स्वगतम् ।) संप्रति मदयन्तिकासंवन्धेन नन्दनावग्रहात्प्रत्यस्तशङ्काः खलु वयम् । (प्रकाशम् ।) वत्सौ, न खल्वन्यथा

---

१. तदीयकार्यमपि चैतस्मिन्संपूर्णम् । अतः सर्वप्रकारमहोत्सवे नृत्यति ।

२. तत्कथमिव ।

३. भगवति, किं प्रतिपत्तव्यम् ।

---

तीति सस्मितत्वे हेतुः । अत एव लवङ्गिकाह—**लवङ्गिका** । तदीयकार्यमपि चैतस्मिन्संपूर्णम् । अतः सर्वप्रकारमहोत्सवे नृत्यति ॥ **कामन्दकी** । एवमेतद्यथा लवङ्गिका वदति । अस्ति वा कुत्रापीदृशं प्रकरणं महोत्सवप्रकरणम् । कवेराशयस्त्वयम् । अस्ति वा कुत्रचित्केनापि कविना निर्मितमेवंविधं मालतीमाधवसदृशं महाद्भुतरसजनकोत्पाद्यार्थं विचित्ररमणीयं विविधसंनिवेशमनोहरमुज्ज्वलममृतरसवत्सगुणं सालंकारं चेति । अत्रेदानीं कविना मुखसंधिसूचितसर्ववस्तुजातं निर्वहणसंधौ प्रतिसंधत्ते । यथा वास्सत्सौदामिनीसमक्षमनयोर्भूरिवसुदेवरातयोः प्रवृत्तेयं प्रतिज्ञावश्यमावाभ्यामपत्यसंबन्धः कर्तव्य इति सूचितं तत्सौदामिनीवचनसंनिवेशेनैव निर्वहणे प्रतिसंहितम् ॥ **मालती** । तत्कथमिवात्र रमणीयमिति । कथमिव हि मत्पितृभूरिवसुदेवरातयोरेवंविधपरिणामप्रकार इत्याशयः ॥ **मकरन्दमाधवौ** । यद्वस्तु यत्पाणिग्रहणरूपं तदन्यथा प्रवृत्तं संपन्नम् । वचनपर्यायो वचनक्रमश्चाप्रकट इत्यर्थः ॥ **लवङ्गिका** । भगवति, प्रतिपन्नमिदानीं निगूढं वाक्यतत्त्वं च भवति प्रकटवचनात् । प्रवृत्तिकृतं तत्किं कर्तव्यमित्याशयः ॥ **कामन्दकी** । तथैव जनान्तिकमेव वदतीति शेषः । नन्दनस्यानुकूल्यं मदयन्तिकामकरन्दसंबन्ध एव निमित्तमित्याशयः । प्रत्यस्तशङ्का निःशङ्काः । अन्यथा वस्तु प्रवृत्तमिति माधवमकरन्दाभ्यामुक्तं तदुत्तरं प्रकाशं वदति—**वत्साविति** । **न खल्विति च** । श्रावक-

वस्तु प्रवृत्तम्, अन्यथा वचनमस्याः । यतः श्रावकावस्थायामस्मत्सौदामिनीसमक्षं तयोः प्रवृत्तेयं प्रतिज्ञावाभ्यामपत्यसंबन्धः कर्तव्य इति । प्रधानप्रकृतिकोपस्त्वेवं परिहृतः ।

**मालती**—[1]अहो संवरणम् ।

**मकरन्दमाधवौ**—(आश्चर्यम् ।) जयन्ति खलु महतां विसंवादिन्यः प्रत्यायिन्यः कल्याणा नीतयः ।

**कामन्दकी**—वत्स,

यत्प्रागेव मनोरथैर्वृतमभूत्कल्याणमायुष्मतो-
स्तत्पुण्यैर्मदुपक्रमैश्च फलितं क्लेशैश्च मच्छिष्ययोः ।
निष्णातश्च समागमोऽपि विहितस्त्वत्प्रेयसः कान्तया
संप्रीतौ नृपनन्दनौ यदपरं प्रेयस्तदप्युच्यताम् ॥ २४ ॥

**माधवः**—(सहर्षम् ।) अतः परं मम प्रियमस्ति तथापीदमस्तु भरतवाक्यम्—

---

१. अहो संवरणम् ।

---

दशायामुपदेशसमये प्रीत्या परिग्रहाय नानादिगन्तवास्तव्यजनसाहचर्यमासीदिति । **सौदामिनीसमक्षमिति** । तेन सौदामिन्येवात्र साक्षिणी । यद्यथा वस्तुव्यापाराभ्यां तस्य संनिधानमेव तत्प्रियंकरत्वेन । इयं तु विपत्प्रतीकारं कृतवतीत्याशयः। अवश्यमावाभ्यामपत्यसंबन्धः कर्तव्य इत्यात्मनः प्रवृत्तिसमयनिश्चितं कुट्टनीभावं समस्तलोकसमक्षपरिस्रुतं पृच्छति । अनेनैव साक्षात्प्रतिषेधः कोपाय । शिवस्त्वयमुपाय इति निर्वहणार्थं स्मारयति ॥ **मालती** । अहो संवरणमिति । अहो अत्युक्तौ । संवरणं हि तद्विशेषतस्तु बालत्वादित्यादि प्रतिसंहितम् ॥ **मकरन्दमाधवौ** । विसंवादिन्यो विप्रलम्भकाः । प्रत्यायिन्यः प्रत्यययुक्ताः । प्रत्ययशब्दस्य प्रभावपर्यायत्वात्प्रभावश्च दुर्घटोऽपि कार्यस्य झटिति संघटनेनोन्नेयः । कल्याणाः शुभाः।जयन्तीति च स्तुतौ च कथं भवत्याः सुमेधसो नीतिर्विपर्यस्यते । मुखसंधिसूचितमनुसंधेयम्। **कामन्दकी । यत्प्रागेवेति** । कल्याणं करग्रहणरूपं पुण्यैः प्रागाचरितैरारादेवोपकारकैर्मदुपक्रमैः संनिपत्य कारकैर्मम बुद्धिव्यापारैः करणभूतैस्तत्कल्याणं फलितम् । तथा शिष्ययोर्भूरिवसुदेवरातयोरभिमतं पाणिग्रहणं स्यादित्येवंरूपचिन्ताजन्यभेदाः फलिताः । तद्वत्प्रेयसो मकरन्दस्य कान्तया मदयन्तिकया सह निष्णातो निपुणः समागमो विहितः कृतः । तथा प्रत्येयौ राजनन्दनाविति यौ प्राक्चिन्तितौ तौ

शिवमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः।
दोषाः प्रयान्तु शान्तिं सर्वत्र सुखी भवतु लोकः ॥ २५ ॥

**कामन्दकी**—एवमस्तु।

(इति निष्क्रान्ताः सर्वे।)

**इति महाकविश्रीभवभूतिविरचिते मालतीमाधवे दशमोऽङ्कः।**

---

वः संप्रीतौ संजातप्रीतिसंयुक्तौ ॥ २४ ॥ अतः किमपरं प्रियतरं किमस्ति तदप्युच्यताम्। साधयामि इत्यादिपदैः क्रमेण विप्रादिशूद्रपर्यन्ताश्च चत्वारो वर्णा आशंसाविषयाः (?) ॥ २५ ॥

शबरस्वामिप्रीत्या प्रकरणरत्नाकरे तु भवभूतेः।
सारोद्धारे मन्दरमकृत कृती व्याकृतिं नान्यः ॥
अतिदुस्तरोऽल्पमतिना पावनकर्मप्रसादनो हि मुदा।
हारं हारं व्याख्यामाश्रित्य प्रकरणोदधिस्तीर्णः ॥

**इति श्रीशिलाभट्टीयान्वयश्रीहरिचन्द्रसूनोस्त्रिपुरारिपदाम्भोजभृङ्गायमानमानसस्य श्रीनान्यदेवस्य कृतौ मालतीमाधवीयटीकायां दशमाङ्कविवरणम् ॥**

# मालतीमाधवस्य जगद्धरकृतटीकानुरोधतः

## पाठान्तराणि।

पृष्ठानि।

१—१० 'सानन्दम्—' इति श्लोकः ॥ १ ॥ 'चूडापीड' इति

---

### जगद्धरकृता टीका।

चञ्चच्चन्द्रिकचन्द्रचारुकुसुमो माद्यज्जटापल्लवो
दृप्यद्दारुणदन्दशूकमणिमांस्तत्पञ्चशाखालयः।
स्थाणुर्मे फलदो भवत्वतितरां गौरीमुखेन्दुद्रव-
त्पीयूषद्रवदोहदादिव दधद्देवद्रुमत्वं सदा ॥

नत्वा गुरून्गुणगुरूनवलोक्य टीकां
विश्वादिकोषभरतश्रुतिशब्दविद्याम्।
छन्दांस्यलंकरणमर्थगतिं विचिन्त्य
श्रीमाञ्जगद्धरकृती वितनोति टीकाम् ॥

श्रीकण्ठकण्ठविलुठत्पटुनाटकेऽस्मि-
ष्टीका मयाल्पमतिनापि वितन्यते यत्।
हासाय दुर्जनगणस्य भवेन्न चैत-
दुच्चैः पदं यदभिकाङ्क्षति सर्व एव ॥

इह तावदष्टपदां नान्दीं विदधान एव कविरप्रत्यूहमीहितसिद्धिमनुरुध्य प्रचण्डचण्डीपतेरकाण्डताण्डवाडम्बरेण लम्बोदरोत्कीर्तनरूपं मङ्गलं प्रकरणादौ निबध्नाति—**सानन्दमित्यादि**। वैनायक्यो वदनविधुतयश्चिरं वः पान्तु। गजाननाननचालनानि युष्मान्बहुकालं रक्षन्त्वित्यर्थः। इति श्रोतॄन्सामाजिकान्कविराशास्ते। वदनविधूनने कारणमाह—फणिपतौ वासुकिनागे नासाग्ररन्ध्रं नासिकाग्रविवरं सानन्दं विशति सति। नासात्र विनायकस्यैव। त्रस्तस्य झटित्यग्ररन्ध्रप्राप्त्या जीवनप्रत्याशयानन्द इति भावः। अत एव प्रवेशानन्तरमानन्द इति कथं क्रियाविशेषणमिति दोषानवकाशः। अग्ररन्ध्रस्य शीघ्रं प्राप्त्यैवानन्दातिशयात्। यथा भीतस्य शीघ्रं भवनादिप्राप्तौ हर्षः। यद्वा सानन्दं यथा तथा पान्त्विति योज्यम्। यद्वा सानन्दमित्याहतविशेषणम्। सापेक्षत्वेऽपि गमकत्वात्समासः। क्रियाविशेषणत्वादेव सानन्दमित्यत्र कर्मत्वैकत्वक्लीबत्वानि। इह नासारन्ध्रमिति वक्तव्येऽग्रग्रहणं त्रस्तस्य झटिति प्राप्त्या हर्षसूचनाय। यद्वा रन्ध्रप्रवेशेऽग्रप्रवेशस्यार्थसिद्धस्यापि शब्देन कीर्तनादुक्तिपोष एवायमलंकारः। यदाह दण्डी—'उक्तिपोषः। क्वचिदाक्षेपलब्धस्य साक्षाच्छब्देन कीर्तनात् ॥' इति। कीदृशे फणिपतौ। भोगः

फणा कायो वा तस्य संकोचोऽविकाशस्तं भजतीति भोगसंकोचभाक् । तस्मिन् । विवरानुसरणे भोगिभोगसंकोच इति जातिनियमः । तदनेन महाकायस्य नासाग्रप्रवेशयोग्यतोक्ता । प्रवेशे हेतुमाह—शूलपाणेः शिवस्य ताण्डवे नृत्ये सति नन्दी गणभेदस्तस्य हस्तेनाहतस्य ताडितस्य मुरजस्य मर्दलस्य रवेण शब्देनाहूतो यः कौमारबर्हीं कार्तिकेयमयूरस्तस्य त्रासाद्भयात् । अत्र नन्दिहस्ताहतत्वेन मुरजस्य गभीरताररवशालिता दर्शिता । मयूरस्य भुजंगभोजित्वेन त्रासकत्वम् । विधुतयः कीदृश्यः । गण्ड उड्डीनाभिरूर्ध्वं गताभिरलिमालाभिर्भ्रमरपङ्क्तिभिर्मुखरिताः सशब्दीकृताः ककुभो दिशो याभिस्ताः । तथा चीत्कारो भीतकरिणां त्रासध्वनिस्तत्सहिताः । विनायकस्य गजाननत्वात् । इह साहित्यमात्रं मत्वर्थः । तथा च भयान्मुखे विधूननचीत्कारौ युगपद्वृत्ताविति भावः । जातिरलंकारः । विधुतेरचेतनत्वेऽपि देवतानुभावादेव रक्षणकर्तृत्वम् । अत एव त्रस्तस्यापि तत्कर्तृत्वम् । इह गम्भीरमुरजरवश्रुतिकृष्टमयूरभयेन फणिनां विवरानुसरणं जलदकालचिह्नम् । अत एव जलदकालमनुभाव्यैवैतत्प्रकरणवृत्तान्त इति ध्वनितम् । तथा च वक्ष्यति—'धारासिक्तवसुंधरासुरभयः' इत्यादि । मुरजघातेन वाद्यम्, अलिमालया दिशां मुखरीकरणेन गीतम्, वदनविधूननेन नृत्यं च सूचयता तौर्यत्रिकमुक्तम् । चीत्कारेण नृत्यतः प्रव्यक्तपाठोऽपि सूचितः । 'कुमारः क्रौञ्चदारणः' इत्यमरः । कुमारस्येदं कौमारम् । 'तस्येदम्' इत्यण् । 'मयूरो बर्हिणो बर्हीं नीलकण्ठो भुजङ्गभुक्' इत्यमरः । 'नासा नाशा तु नासिका' इति शब्दभेदः । 'भोगः सुखे स्त्र्यादिरतावहेश्च फणकाययोः' इति विश्वः । उड्डीन इति उत्पूर्वाड्डीङ्धातोः क्तः । 'ओदितश्च' इति चकारान्नत्वम् । 'प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः' इत्यमरः । 'दिशस्तु ककुभः काष्ठाः' इति च । 'ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तनम्' इति च । 'विनायको विघ्नराजद्वैमातुरगणाधिपाः' इति च । विनायकस्येदं वैनायक्यम् । तस्येदमित्यण् । 'टिड्ढाणञ्–' इति ङीप् । विधुतिरिति विपूर्वाद्धुञः स्त्रियां क्तिन् ॥ १ ॥ नाटकादौ प्रवृत्तिः प्रेक्षावतां सप्रयोजना । यदाह भरतः—'न तज्ज्ञानं न तच्छिल्पं न सा विद्या न ताः कलाः । नासौ नयो न तत्कर्म नाटके यन्न दृश्यते ॥' नाटके विघ्नविघातायादौ नान्दी कार्या । यदाह भरतः—'यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके । तथाप्यवश्यं कर्तव्या नान्दी विघ्नप्रशान्तये ॥' नान्दीलक्षणं च भरते—'देवद्विजनृपादीनामाशीर्वचनपूर्विका । नान्दी कार्या बुधैर्यत्नान्नमस्कारेण संयुता ॥ गङ्गा नागपतिः सोमः स्वधानन्दो जयाशिषः । एभिर्नामपदैः कार्या नान्दी कविभिरङ्किता ॥ प्रशस्तपदविन्यासा चन्द्रसंकीर्तनान्विता । आशीर्वादपरा नान्दी योज्येयं मङ्गलान्विता ॥ काचिद्द्वादशपदा नान्दी काचिदष्टपदा स्मृता । सूत्रधारः पठेदेनां मध्यमं स्वरमास्थितः ॥ चन्द्रसंकीर्तनं यत्र तदधीनो रसोत्तमः । प्रीते चन्द्रमसि स्फीता रसश्रीरिति भाविकिः' ॥ तत्र केचन पदं विभक्त्यन्तमास्थिषत । केचित्त्विदं पदस्य भागमूचिरे । तदिह द्वितीयपक्षनिक्षेपेण पद्यद्वयेनाष्टपदा नान्दीति । बहुविघ्नशङ्कया तन्नाशाय पुनर्मङ्गलमाचरन्नष्टपदां नान्दीं निर्वाहयति—**चूडापीडेत्यादि** । भूतेशस्य हरस्य जटास्त्वां

